परीक्षारूपत्वेन त्रैविध्यादिति चेन्न—अस्यैव श्लोकस्य निरूप्यमाणप्रमाण-तदाभासनिर्देशरूपत्वान्न न्यूनतेति प्रमेयरत्नमालायां समाहितत्वात् । न्यायमणिदीपिकायां तूद्देशो विभागो लक्षणं परीक्षा चेति शास्त्रचातुर्विध्य-सत्त्वाच्छास्त्रत्रैविध्यमनुपपन्नमित्याशङ्क्य नाममात्रेण वस्तुकथनमुद्देशः, विशेषनाममात्रकथनं च विभाग इति विभागस्योद्देश एवान्तर्भावान्न शास्त्रचातुर्विध्यमिति समाहितम् । तत्रोद्देशवाक्यविभागवाक्योभयसाधा-रणम् । उद्देशत्वं च निरूप्यतावच्छेदकतद्व्याप्योभयातिरिक्तप्रकारकबोध-जनकवाक्यम् । प्रमाणतदाभासावित्यादिवाक्यस्य, प्रमाणं द्विविधं प्रत्यक्ष-परोक्षभेदादित्यादिवाक्यस्य च निरूप्यतावच्छेदकप्रमाणत्वतद्व्याप्यप्रत्यक्ष-त्वाद्यतिरिक्तधर्मप्रकारकबोधजनकत्वाल्लक्षणसंगतिः । लक्षणवाक्यस्य चोभयातिरिक्तासाधारणधर्मबोधकत्वान्नातिव्याप्तिः । न चैवमुक्तश्लोकस्या-प्युद्देशत्वानुपपत्तिः तस्योक्तोभयातिरिक्तार्थसंसिद्धिजनकत्वादिप्रकारकबो-धजनकत्वादिति वाच्यम्-प्रमाणात्तदाभासादिति श्लोकैकदेशस्योद्देशत्वे तात्पर्यात्तादृशैकदेशस्योक्तोभयातिरिक्तधर्मप्रकारकबोधजनकत्वादपाया - द्विशिष्टश्लोकस्योद्देशत्वे तात्पर्यविरहात् । न चैवं स्वापूर्वार्थेत्यादिलक्षणैक-देशे प्रमाणमित्यंशेऽतिव्याप्तिरिति वाच्यम्-लक्षणशास्त्रैकदेशान्यत्वस्यापि विशेषणत्वादित्यलं पल्लवितेन ।

अथ प्रमाणतदाभासयोर्मध्ये प्रमाणस्य प्रथमोद्दिष्टत्वात्प्रमाणं निरूपयितुकामो विशेषधर्मज्ञानस्य सामान्यधर्मज्ञानाधीनत्वेन प्रथमं प्रमाणसामान्यलक्षणं सूचयन्निरूपणीये प्रमाणतत्त्वे स्वरूपसङ्ख्याफल-विषयाणां विप्रतिपत्तीनां सत्त्वात्तन्मध्ये स्वरूपविप्रतिपत्तिनिराकरणार्थ-माह—

**स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ॥ १ ॥**

अपूर्वश्चासावर्थश्चापूर्वार्थः । प्रमाणान्तरजन्यनिश्चयाविषयत्वमपूर्वत्व-मिति वक्ष्यते । स्वाऽपूर्वार्थयोर्व्यवसायः स्वापूर्वार्थविषयकनिश्चय इत्यर्थः । षष्ठ्या विषयत्वार्थकत्वात् । स एवात्मा स्वरूपं यस्य तत् स्वापूर्वार्थव्यव-सायात्मकम् । अत्र स्वपदं ज्ञानपरं " स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने " इत्यमरकोशेन स्वरूपे स्वशब्दस्य शक्त्यभिधानात् । कोशस्थात्मशब्दस्य स्वरूपपरत्वात् ।

ननु स्वरूपार्थकस्वशब्दस्य पुल्लिङ्गत्वात् स्वं चापूर्वार्थश्चेति न्यायमणिदीपिकादौ विग्रहप्रदर्शनमयुक्तमिति वाच्यम् । न च जातिवाची स्वशब्दः पुल्लिङ्गः स्वरूपवाची स्वशब्दो नपुंसकलिङ्ग इति तादृशकोशार्थः आत्मनि स्वमित्यनेनेति वाच्यम् "स्वोऽस्त्रीधने त्रिषु स्वीये आत्मनि स्वजने च ना " इति वैजयन्त्यनुरोधेनामरकोशस्थस्वशब्दस्योत्तरान्वयित्वेन पूर्वान्वयित्वाभावादिति चेन्न—" स्वो ज्ञातावात्मनि क्लीबे" इति रभसकोशानुसारेण स्वरूपवाचिशब्दस्य नपुंसकलिङ्गताया अपि युक्तत्वात् । रभसवैजयन्त्युभयानुरोधेन स्वरूपवाचिस्वशब्दस्योभयलिङ्गतामङ्गीकृत्यामरकोशस्य विदग्धचूडामण्यादौ व्याख्यातत्वात् । तथा च स्वापूर्वेत्यादेः स्वापूर्वार्थव्यवसायरूपेण परिणममाणः प्रमातृगतो ज्ञानात्मकपूर्वपर्यायः प्रमाणमित्यर्थः । स्वापूर्वार्थव्यवसायात्मकफलाव्यवहितपूर्ववृत्तित्वे सति तादृशव्यवसायाभिन्नत्वं प्रमाणसामान्यलक्षणं फलितम् । अत्र तादृशव्यवसायाभिन्नत्वस्य तादृशव्यवसायरूपफले सत्त्वात्तत्रातिव्याप्तिवारणाय सत्यन्तम् । तादृशव्यवसायाव्यवहितपूर्ववृत्तिवायुसंयोगादिवारणाय विशेष्यदलम् । आत्मनस्ततत्पर्यायशालितया तादृशव्यवसायाभिमुख्यलक्षणव्यापारस्य प्रमाणत्वेऽपि तत्पूर्वपर्यायस्य प्रमाणत्वाभावात्तत्रातिव्याप्तिवारणायाव्यवहितत्वनिवेशः । छिदाव्यवहितपूर्ववृत्तिनि तदभिन्ने कुठारेऽतिव्याप्तिवारणाय फले व्यवसायात्मकनिवेशः । उक्तं च मार्तण्डे—छिदौ परश्वादिना साधकतमेन व्यभिचार इत्ययुक्तम्—तत्परिच्छित्ताविति विशेषणादिति । लक्षणे स्वपदोपादानं ज्ञानस्य स्वप्रकाशत्वं नास्तीति वदतां मतनिरासार्थं, अर्थग्रहणाव्यवहितपूर्ववृत्तित्वे सति तदभिन्नत्वस्यैव लक्षणत्वसंभवेन लक्षणे स्वपदोपादानस्य व्यर्थत्वात् । अस्य सूत्रस्य स्वरूपविप्रतिपत्तिनिरासार्थत्वेन स्वसंवेदनरूपं ज्ञानमेव प्रमाणस्वरूपं, न तु ज्ञाततालिङ्गकानुमानगम्यमनुव्यवसायगम्यं वा ज्ञानं प्रमाणस्वरूपमिति बोधयितुं स्वपदोपादानोपपत्तेः । अत एव प्रमेयरत्नमालायां प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत्प्रमाणमित्यर्थपरिच्छित्तौ साधकतमत्वमेव प्रमाणलक्षणमुक्तम् । मार्तण्डेऽपि प्रदीपादीनामर्थपरिच्छित्तौ बोधेन व्यवधानादमुख्यं प्रमाणत्वं, बोधस्य त्वपरेणाव्यवधानान्मुख्यं प्रमाणत्वमिति न्यायकुमुदचन्द्रोदयेऽपि प्रकर्षेण संशयादिव्यवच्छेदलक्षणेन मीयते अव्यवधानेन परिच्छिद्यते येन धीस्तत्प्रमाणमित्युक्तम् । एवं

चोदाहृतग्रन्थेष्वर्थपरिच्छित्तौ साधकतमत्वमेव प्रमाणस्य व्यावहारिकं लक्षणम्। साधकतमत्वं च तदव्यवहितपूर्ववृत्तित्वे सति तदभिन्नत्वमिति चोक्तं भवति।

ननु लाघवाद्ज्ञानत्वमेव प्रमाणसामान्यलक्षणमस्तु न चार्थग्रहणलक्षणप्रमाणफले ज्ञानत्वसत्त्वादतिव्याप्तिरिति वाच्यम्—पूर्वज्ञानपर्यायं प्रत्युत्तरज्ञानपर्यायस्य फलत्वेऽपि तस्य तदुत्तरपर्यायं प्रति प्रमाणत्वेन प्रमाणसामान्यलक्षणलक्ष्यत्वात्। उक्तं च लघीयस्त्रये—

"बह्वाद्यवग्रहाद्यष्टचत्वारिंशत्स्वसंविदाम्।
पूर्वपूर्वप्रमाणत्वं फलं स्यादुत्तरोत्तरम्" इति॥

व्याख्यातं चेदं न्यायकुमुदचन्द्रोदये—अवग्रहादीनां मध्ये पूर्वपूर्वस्य प्रमाणत्वं स्यादुत्तरपरिच्छित्तिविशेषं प्रति साधकतमत्वात्। उत्तरोत्तरं विज्ञानं तु फलं, तस्य तत्र साध्यत्वात्। यथा अवग्रहस्य प्रमाणत्वे ईहा फलमेवमुत्तरत्रापि योज्यमिति। तस्माद्ज्ञानत्वस्य प्रमाणसामान्यलक्षणत्वे न किञ्चिद्बाधकमिति चेदुच्यते—लक्षणं द्विविधं व्यावहारिकं व्यावर्तकं चेति। तत्र प्रमाणपदवाच्यभूतमर्थपरिच्छित्तिसाधकतमत्वं पूर्वनिरुक्तं व्यावहारिकमेव—प्रमाणपदेन प्रमासाधकतमत्वाभिधानात्। ज्ञानत्वं तु व्यावर्तकलक्षणं भवति—सूत्रे तत्सूचनायैव ज्ञानपदोपादानात्। अत एवोक्तं न्यायकुमुदचन्द्रोदये—ज्ञानत्वं प्रमाणसामान्यलक्षणमिति। तस्मादस्मिन्सूत्रे उक्तलक्षणद्वयमभिप्रेतम्। स्वरूपविप्रतिपत्तिनिराकरणं च विस्तरेणाभिप्रेतम्। अर्थपरिच्छित्तिरूपेण परिणममानस्य स्वयं प्रकाशस्य ज्ञानस्यैव प्रमाणत्वाभिधानेन ज्ञानभिन्नस्य प्रमाणस्वरूपतानिराकरणात्। स्यान्मतं—ज्ञानमेव प्रमाणमित्यवधारणमनुपपन्नं—ज्ञानभिन्नस्यापि कारकसाकल्यसन्निकर्षादेः प्रमाणसाधकतमत्वेन प्रमाणत्वात्। तथाहि—प्रमाजनकं प्रमाणमिति सूत्रं व्याचक्षमाणेन भाष्यकारेणोपलब्धिसाधनानि प्रमाणानीत्युक्तम्। तत्र व्याख्यातॄणां मतभेदः—कारकसाकल्यं प्रमाणमिति केचित्। सन्निकर्षः प्रमाणमित्यन्ये। अत्र कारकसाकल्यवादिनः-प्रमाकरणं प्रमाणं, करणत्वं च साधकतमत्वम्। तच्च फलयोगव्यवच्छिन्नत्वं। यदव्यवहितोत्तरक्षणे नियमेन कार्यमुत्पद्यते.तत् तत्त्वम्। तादृशं च प्रमाकरणत्वं न ह्येकैकस्य कारकस्य सम्भवति। एकैककारणसत्त्वेऽपि द्वितीयक्षणे कार्योत्पत्त्यनुपलम्भात्। तथासति कारणान्तरवैयर्थ्यप्रसङ्गात्। किन्तु सकलकारणसमुदायरूपकारकसाकल्यस्य साम-

ग्रीसत्त्वे द्वितीयक्षणेऽवश्यं कार्यमिति नियमात् । तस्मात्साकल्यरूप-सामग्र्येव प्रमाणम् । न च सामग्र्याः प्रमायां करणत्वं न सम्भवति—करणस्य कर्तृकर्मसापेक्षत्वनियमेन कर्तृकर्मणोरपि सामग्रीघटकत्वेन तद्घटककर्त्राद्यभावादिति वाच्यम्—करणस्य कर्त्रादिसापेक्षत्वनियमेऽपि स्वाघटककर्त्रादिसापेक्षत्वमिति नियमाभावेन स्वघटककर्त्रादिसापेक्षत्व-मादायैवोक्तनियमनिर्वाहात् । साकल्यं च सामग्रीत्वम् । तच्चेन्द्रिय-विशिष्टतत्सन्निकर्षविशिष्टमहत्त्वोद्भूतरूपालोकसंयोगादिविशिष्टविशेषण-ज्ञानत्वमेव । तदुक्तं मार्ताण्डे—सामग्र्याः परापरप्रत्यययोगरूपत्वादिति । अत्र प्रत्ययशब्दः कारणपरः । न चेन्द्रियतत्सन्निकर्षादिविशिष्टविशेषण-ज्ञानत्वेन विशेषणज्ञानादिविशिष्टेन्द्रियत्वेन वा प्रमितौ करणत्वमित्यत्र विनिगमनविरहात् करणताबाहुल्यप्रसङ्ग इति वाच्यम्—इन्द्रियस्य मुख्य-पदार्थत्वे समवायेन प्रमितिं प्रति स्वसंयुक्तमनस्संयोगरूपपरम्परासम्ब-न्धेन हेतुताया वाच्यतया गौरवात् । विशेषणज्ञानस्य मुख्यपदार्थत्वे समवायेन हेतुतासम्भवेन लाघवस्यैव विनिगमकत्वात् । न च विषयता-सम्बन्धेन प्रत्यक्षं प्रति संयोगादि सम्बन्धेन इन्द्रियादेर्हेतुत्वं सम्भवतीति विनिगमनविरहतादवस्थ्यमिति वाच्यम्—अन्येन्द्रियादन्यस्य प्रत्यक्षवार-णाय पुरुषभेदेन कार्यकारणभावस्य वक्तव्यतया गौरवस्य दुष्परिहार-त्वात् । न चैवमपि विशेषणज्ञानस्य मनस्संयोगस्य वा मुख्यपदार्थ-मादाय करणताद्वयं दुर्वारमिति वाच्यम्—अगत्या कार्यकारणभावद्वय-स्याङ्गीकारात् । तस्मात्प्रत्यक्षे विशेषणज्ञानमनस्संयोगयोरनुमितौ व्याप्ति-ज्ञानमनस्संयोगयोरुपमितौ सादृश्यज्ञानमनस्संयोगयोः शाब्दबोधे पद-ज्ञानमनस्संयोगयोरन्यतरस्य मुखपदार्थतां स्वीकृत्य कारणताष्टकं कल्प-नीयमिति बोधाबोधरूपं कारकसाकल्यं प्रमाणमिति ज्ञानमनस्संयोग-योरन्यतरस्य मुखपदार्थतामङ्गीकृत्योक्तं न्यायकुमुदचन्द्रोदये--ततो ज्ञानमपि सामग्र्यनुप्रविष्टमेव विशेषणज्ञानमिव विशेष्यप्रत्यक्षे लिङ्गज्ञान-मिव लिङ्गिप्रतीतौ सारूप्यदर्शनमिवोपमाने शब्दज्ञानमिव तदर्थज्ञाने प्रमाणत्वं प्रतिपद्यते । तस्माद्बोधाबोधस्वभावं कारकसाकल्यं प्रमाण-मिति । अत्र बोधस्वभावमित्यनेन ज्ञानभिन्नमनस्संयोगस्य मुखत्वं सूचि-तम् । कण्ठोक्तं च मार्ताण्डे—कारकसाकल्यस्यात्मान्तःकरणसंयोगादे-रिति । अतो निरुक्तं साकल्यमेव प्रमाणं, न तु ज्ञानमेवेति वदन्ति । तन्न—यदव्यवहितोत्तरक्षणे नियमेन प्रमोत्पद्यते, तस्य प्रमाणलक्षणत्वे प्रमा-

व्यवहितपूर्ववृत्तिवायुसंयोगेऽतिव्याप्तेः । न चान्यथासिद्धत्वस्यापि विशेषणत्वान्नातिव्याप्तिः, वायुसंयोगस्यान्यथासिद्धत्वादिति वाच्यम् । यत्र यत्र प्रामाणिकानां कारणत्वव्यवहाराभावस्तत्तद्भिन्नत्वापेक्षयातिरिक्तस्यासिद्धत्वस्य दुर्वचतया नैयायिकैरेवोक्तत्वेन साकल्येऽपि प्रामाणिकानां स्याद्वादिनां कारणत्वव्यवहाराभावेन तस्याप्यन्यथासिद्धत्वस्य दुर्वारत्वात् । एवमात्मनोऽपि प्रतीतौ तादात्म्येन करणत्वस्य शरीरस्यावच्छेदकतासम्बन्धेन कारणत्वस्य च सत्त्वेन तयोर्मुखपदार्थत्वमादाय विनिगमनविरहस्य दुर्निवारतया कारणताबाहुल्यादनेकपदार्थानां कारणतावच्छेदकनिवेशेन गौरवाच्च उत्तरपर्यायं प्रति पूर्वपर्यायस्य करणत्वमिति स्याद्वादिमतमेव युक्तम् । एतेन सन्निकर्षषट्कं प्रमाणं तस्य प्रमोत्पत्त्यव्यवहितपूर्ववृत्तित्वेन प्रमासाधकतमत्वात् । सम्बन्धो हि षड्विधः—संयोगस्संयुक्तसमवायस्संयुक्तसमवेतसमवायस्समवायस्समवेतसमवायो विशेषणविशेष्यता चेति । तत्र युतसिद्धयोस्सम्बन्धस्संयोगः । अयुतसिद्धयोस्तु समवायः । ययोर्मध्ये एकमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । स च समवायः अवयवावयविनोर्गुणगुणिनोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च स्वीक्रियते । नित्यद्रव्यवृत्तयो व्यावर्तकविशेषास्त्वनन्ता एव । पृथिव्यप्तेजोवायुपरमाणवः आकाशकालदिगात्ममनांसि च नित्यद्रव्याणि । तत्र चक्षुषो घटेन संयोगस्तयोर्युतसिद्धत्वात् । घटरूपेण तु संयुक्तसमवायः, चक्षुस्संयुक्ते घटे रूपस्य समवायात् । घटरूपगतरूपत्वेन च संयुक्तसमवेतसमवायः । चक्षुःसंयुक्ते घटे रूपं समवेतं, तत्र रूपत्वस्य समवायात् । श्रोत्रस्य शब्देन समवायः । कर्णशष्कुल्यवच्छिन्नमाकाशं श्रोत्रं, शब्दश्चाकाशगुणस्तयोरयुतसिद्धेः । शब्दत्वेन तु समवेतसमवायः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । अभावसमवाययोर्विशेषणतासन्निकर्षः । सा च संयुक्तविशेषणता संयुक्तसमवेतविशेषणतेत्यादिक्रमेण नानाविधा । तत्र भूतले घटाभावश्चक्षुंस्संयुक्तविशेषणतया गृह्यते । चक्षुस्संयुक्ते भूतले घटाभावस्य विशेषणतात्मकस्वरूपसम्बन्धेन सत्त्वात् रूपे घटाद्यभावस्संयुक्तसमवेतविशेषणतया गृह्यते । एवमन्यत्राप्यूह्यम् । एवं समवायोपि संयुक्तविशेषणतादिभिर्गृह्यते । चक्षुस्संयुक्ते घटे रूपादिसमवायस्य सत्त्वादिति नैयायिकानामेव मतान्तरं निरस्तम् । सन्निकर्षेऽपि प्रमित्यभिन्नत्वघटितप्रमाणलक्षणाभावात् । सन्निकर्षषट्कमर्थप्रमितावसाधकतमं, स्वप्रमितावसाधकत-

मत्त्वात्, घटवदित्यनुमानेनापि तस्य प्रमाणत्वाभावसिद्धेः। न च चक्षुरादौ व्यभिचारः, तस्यापि प्रमितिकरणत्वाभावात्। किञ्च, यदव्यवहितोत्तरक्षणे प्रमितिस्तत्त्वमपि सन्निकर्षस्य न संभवति। आकाशादौ चक्षुस्संयोगस्य, रसादौ चक्षुस्संयुक्तसमवायस्य, रसत्वशब्दत्वादौ चक्षुस्संयुक्तसमवेतसमवायस्य सत्त्वेऽपि प्रमित्यनुत्पत्तेः। न च योग्यताविशिष्टसन्निकर्षस्य प्रमितिकरणत्वाङ्गीकारान्नानुपपत्तिः। योग्यता च द्रव्ये महत्त्वोद्भूतरूपालोकसंयोगविशिष्टत्वम्। द्रव्यभिन्नत्वे च योग्यद्रव्यवृत्त्युद्भूतरूपपृथक्त्वसङ्ख्याविभागसंयोगपरत्वापरत्वस्नेहद्रवत्वपरिमाण—क्रियाजातिसमवायान्यतमत्वम्। तदुक्तम्—

उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वान्ति पृथक्त्वसङ्ख्ये।
विभागसंयोगपरापरत्वे
स्नेहद्रवत्वं परिमाणयुक्तम्॥

क्रियाजातिर्योग्यवृत्तिरिति वाच्यम्—निरुक्तयोग्यतायामनेकपदार्थघटिततया साकल्यपक्षवदत्रापि विशेषणविशेष्यभावे विनिगमनविरहेण गुरुधर्मावच्छिन्नानन्तकारणताप्रसङ्गात्। अन्यपुरुषेन्द्रियसंयोगादन्यस्य प्रत्यक्षवारणाय तत्पुरुषीयप्रत्यक्षे तत्पुरुषीयेन्द्रियसन्निकर्षस्य हेतुत्वमिति रीत्या पुरुषभेदेनापि कारणताया दुर्वारत्वाच्च। एवं यदा नीलो घट इत्यादि चाक्षुषं प्रत्यक्षं तत्प्रत्यक्षे सङ्ख्यापरिमाणादिगुणानां द्रव्यत्वसत्तापृथिवीत्वरूपजातीनां तत्समवायानां च भानस्यानुभवविरुद्धतया तत्र योग्यताविशिष्टसन्निकर्षस्यापि सत्त्वात्तत्र प्रमित्यनुत्पत्त्या निरुक्तं प्रमितिसाधकतमत्वं न संभवति। न च यद्यद्व्यक्तेर्योग्यायाश्चाक्षुषादौ भानं नानुभवसिद्धं—तत्तद्व्यक्तीनां तत्तत्प्रत्यक्षव्यक्तौ तादात्म्येन प्रतिबन्धकतां स्वीकृत्य तत्तद्भेदविशिष्टयोग्यताविशिष्टसन्निकर्षस्य तत्तत्प्रत्यक्षव्यक्तौ करणत्वाङ्गीकारान्नानुपपत्तिरिति वाच्यम्—तादृशसङ्ख्यापरिमाणादीनां कालान्तरे तत्पुरुषस्य तत्काल एव पुरुषान्तरस्य प्रत्यक्षोदयेन सामान्यतश्चाक्षुषं प्रति प्रतिबन्धकत्वासम्भवे तत्तद्व्यक्तिं प्रति तत्तद्व्यक्तेः प्रतिबन्धकत्वस्य कल्पनीयतया तत्तद्व्यक्तिभेदविशिष्टयोग्यताविशिष्टसन्निकर्षस्य तत्तद्व्यक्तौ कारणत्वं नैयायिकैः स्वीकर्तव्यमिति महागौरवमसर्वज्ञदुर्ज्ञेयता च। एवं चक्षुषः प्राप्यकारित्वाभावस्य वक्ष्यमाणतया चाक्षुषप्रत्यक्षे

संयोगादीनां हेतुत्वमसम्भवदुक्तिकमेव । स्याद्वादिनां तु लब्ध्युपयोगलक्षणभावेन्द्रियस्यापि नाकाशादीनां चक्षुषा ग्रहणप्रसङ्गः । तत्रावरणक्षयोपशमप्राप्तिरूपार्थग्रहणशक्तिर्लब्धिः । निरुक्ताकाशादिग्रहणशक्तेश्चक्षुष्यभावात् न तेनाकाशादिग्रहणम् । उपयोगस्तु रूपादिग्रहणाभिमुख्यलक्षणव्यापारस्तदभावान्नीलो घट इति प्रतीतिदशायां न सङ्ख्यापरिमाणादेर्ग्रहणमिति न भवदभिमतयोग्यतायाः कारणत्वं, तत्तद्व्याक्तित्वेन प्रतिबन्धकत्वं वा स्वीक्रियत इति न गौरवशङ्का । नव्यनैयायिकास्तु प्रमाकरणं प्रमाणं, प्रमाणपदवाच्यत्वं लक्ष्यतावच्छेदकम् । प्रमानिरूपितकरणत्वं लक्षणम् । अतो लक्षणलक्ष्यतावच्छेदकयोरभेदाद्घटो घट इत्यादाविव प्रमाकरणं प्रमाणमिति वाक्याच्छाब्दबोधानुपपत्तिरिति शङ्काया नावकाशः । प्रमा च यथार्थानुभवः । याथार्थ्यं च तद्वति तत्प्रकारकानुभवत्वम् । अयं घट इति ज्ञाने घटत्ववति घटत्वप्रकारकत्वस्य शुक्ताविदं रजतमिति भ्रमे च रजतत्ववति रजतत्वप्रकारकत्वाभावस्य सत्त्वान्नाव्याप्त्यतिव्याप्ती । न च रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानेऽतिव्याप्तिः तादृशज्ञाने रजतत्ववद्रजतविशेष्यकत्वस्य रङ्गांशे रजतत्वप्रकारकत्वस्य च सत्त्वादिति वाच्यम्—तद्वन्निष्ठविशेष्यतानिरूपितरङ्गत्वप्रकारताकत्वसत्त्वेऽपि तादृशविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वस्य विवक्षितत्वात् । उक्तसमूहालम्बने रजतत्ववन्निष्ठविशेष्यतानिरूपितरङ्गत्वप्रकारताकत्वसत्त्वेऽपि तादृशविशेष्यतानिरूपितरजतत्वप्रकारताकत्वविरहात् । अनुभवत्वं च स्मृतिभिन्नत्वम् । तेन स देवदत्त इति स्मृतौ देवदत्तत्ववति देवदत्तप्रकारताकत्वेऽपि स्मृतिभिन्नत्वाभावान्नातिव्याप्तिः । करणत्वं च व्यापारवत्वे सति कारणत्वं, कुठारस्य नमनोन्नमनादिव्यापारद्वारा छिदाकरणत्वात् । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् । नमनोन्नमनादिव्यापारस्य कुठारजन्यत्वे सति कुठारजन्यच्छिदाजनकत्वाद्व्यापारत्वोपपत्तिः । तथा च व्यापारद्वारा प्रमितिजनकत्वरूपं प्रमाकरणत्वं प्रमाणस्य लक्षणं पर्यवसन्नम् । अत्र करणमात्रस्य च्छिदाकरणकुठारादौ सत्त्वादतिव्याप्तिरिति तद्वारणाय प्रमेति । प्रमाकरणत्वस्य भ्रमात्मकज्ञानकारणीभूतदुष्टचक्षुषि सत्त्वादतिव्याप्तिः । अतः प्रेति । तथा च दुष्टचक्षुषो ज्ञानकरणत्वेऽपि तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकरणत्वाभावान्नातिव्याप्तिः । तच्च प्रमाणं चतुर्विधं—प्रत्यक्षानुमानोपमानशब्दभेदात् । तत्रेन्द्रियरूपं प्रत्यक्षं,

संयोगादिरूपसन्निकर्षद्वारा, व्याप्तिज्ञानरूपमनुमानं परामर्शद्वारा, सादृश्यज्ञानरूपमुपमानं अतिदेशवाक्यार्थस्मरणद्वारा, पदज्ञानरूपं शब्दप्रमाणमपि पदजन्यपदार्थोपस्थितिद्वारा प्रमितिजनकमिति सर्वत्र लक्षणसमन्वय इति वदन्ति । तन्न—तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठ-प्रकारताशालित्वस्य प्रमाणलक्षणत्वे वायू रूपवानिति ज्ञानस्यापि प्रमा-त्वापत्तेः । भवन्मते समवायस्यैक्येन स्पर्शसमवायवति वायौ रूप-समवायस्याक्षतत्वात् । न च वायौ रूपसमवायसत्त्वेऽपि रूपप्रतियोगि-कत्वविशिष्टसमवायानुयोगित्वात्मकरूपाधिकरणत्वविरहान्नातिव्याप्तिः—तदधिकरणनिष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वस्य लक्षणार्थ त्वादिति वाच्यम् । तथासति भूतले घट इत्याकारकस्य भूतलाधेयता-सम्बन्धेन भूतलप्रकारकस्य घटविशेष्यकज्ञानस्य प्रमात्वानुपपत्तेः, घटस्य भूतलाधिकरणत्वविरहात् । एवं गगने शब्द इति प्रमायामव्याप्तिः, गगनस्यावृत्तित्वेन तदधिकरणाप्रसिद्धेः । मूले वृक्षस्संयोगीति भ्रमेऽति-व्याप्तिश्च—तादृशभ्रमस्यापि संयोगवति वृक्षे संयोगप्रकारकत्वात् । न च यदवच्छेदेन यद्वर्तते तदवच्छेदेन तत्प्रकारकज्ञानत्वस्य प्रमालक्षणत्वा-न्नोक्तातिव्याप्तिः, मूलावच्छेदेन संयोगाभावेन मूलावच्छेदेन संयोगाव-गाहिज्ञानस्य प्रमात्वासम्भवादिति वाच्यम्—तथा सत्ययं घट इति प्रमा-यामव्याप्तेः । भवन्मते घटत्वादिरूपप्रकारस्य व्यावृत्तित्वेनावच्छेदका-भावात् । यदवच्छेदेन यद्वर्तत इत्यनेनोपादानासम्भवात् । किञ्च प्रमाणलक्षणेऽनुभवत्वनिवेशे स्मृतावव्याप्तिः, स्मृतेरपि परोक्षप्रमाभेद-ताया वक्ष्यमाणत्वात् । स्याद्वादिनां मते प्रमाणत्वं चार्थविशिष्टज्ञानत्वम् । अर्थपदेऽन्यप्रकारसंश्लिष्टतया परिणतं विशेष्यं गृह्यते—विशेष्यस्य प्रका-रसम्बन्धत्वात् । सम्बन्धस्यास्मन्मते विश्लिष्टतारूपपरित्यागेन संश्लिष्ट-रूपतया एकलोलीभावपरिणतेरेव सक्तुतोयादिषु सम्बन्धिपदार्थत्वात् । तथा च प्रकारसंश्लिष्टतया परिणतविशेष्यमर्थशब्देन विवक्षितम् । विषय-तया तादृशार्थविशिष्टज्ञानत्वं च प्रमालक्षणं विवक्षितम् । घटवद्भूतलमिति ज्ञाने घटसंश्लिष्टतया परिणतभूतलस्य विषयतासम्बन्धेन सत्त्वाल्लक्षण-सङ्गतिः । शुक्ताविदं रजतमिति ज्ञाने विशेष्यस्य शुक्तेः रजतसंश्लिष्टतया परिणामाभावात्तादृशार्थविशिष्टत्वं नास्तीति नातिव्याप्तिः । वायौ रूप-संश्लिष्टतापरिणामस्य संयोगे मूलसंश्लिष्टतापरिणामस्य चाभावाद्वाय रूपवान्मूले वृक्षस्संयोगीत्यादिभ्रमेषु नातिव्याप्तिः । उक्तं च मार्तण्डे—

अनर्थविषयकत्वाद्विपर्ययस्य वारणमिति । प्रकारसंश्लिष्टविशेषरूपार्थ-विषयकत्वाभावाद्विपर्ययस्य वारणमित्यर्थः । न्यायमणिदीपिकायामपि—अर्थाव्यभिचारित्वं प्रामाण्यमिति । एवं तादृशप्रमाकरणत्वं प्रमाणत्व-मित्यपि न युक्तम्—आत्ममनस्संयोगद्वारा प्रमाजनके आत्मनि संयोगद्वारा प्रमाजनकयोः शरीरावलोकयोरप्यतिव्याप्तेः ।

नन्वनुभवत्वव्याप्यजात्यवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकरणत्व-मेव लक्षणम् । अनुभवत्वव्याप्यचाक्षुषत्वस्पार्शनत्वाद्यवच्छिन्नकरण-त्वस्य चक्षुरादावनुमितित्वाद्यवच्छिन्नकरणत्वस्यानुमानादौ सत्त्वाल्लक्षण-सङ्गतिः । आत्मनो जन्यात्मगुणत्वावच्छिन्नं प्रति, शरीरस्य जन्यज्ञान-त्वावच्छिन्नं प्रति, आलोकस्य तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव करणतया नात्मादावतिव्याप्तिरिति चेन्न—चक्षुषोऽप्राप्यकारित्वस्य वक्ष्यमाणत्वेन संयोगादेस्तद्व्यापारत्वासम्भवेन निरुक्तकरणत्वासम्भ-वेनाव्याप्तेः । भवन्मते समवायस्य नित्यत्वेन जन्यत्वघटितव्यापारत्वा-सम्भवेन संयुक्तसमवायादीनां व्यापारत्वासम्भवाच्च । प्रमाव्यवहित-पूर्ववृत्तित्वे सति तदभिन्नत्वरूपप्रमाणलक्षणस्य प्रमाणात्मके ग्रहणा-न्मुख्यलक्षणव्यापार एव सत्त्वेन तद्भिन्ने कुत्राप्यभावान्न काप्यतिव्याप्तिरिति ध्येयम् ।

साङ्ख्यास्तु यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्गतचतुष्कोणाद्याकारं भवति, एवं तैजसमन्तःकरणमिन्द्रिय-द्वारा घटादिविषयदेशं गत्वा घटाद्याकारतां भजते । तादृशघटाद्याकारा-कारितान्तःकरणवृत्तिरेव प्रमितिः । आत्मनो निर्विशेषत्वेनाज्ञानसुखा-देरन्तःकरणधर्मत्वात्तादृशान्तःकरणवृत्तौ करणभूतचक्षुरादीन्द्रियवृत्तिः प्रमाणम् । इन्द्रियवृत्तिरप्युक्तरीत्यार्थाकाराकारिता इन्द्रियपरिणतिः । यद्वा मण्यादेः प्रभावदिन्द्रियस्यार्थसंयुक्तः परिणामविशेष इन्द्रियवृत्तिरिति वदन्ति । तदपि न ज्ञानादेरन्तःकरणपरिणामत्वं निराकृत्यात्मपरिणाम-त्वस्य व्यवस्थापयिष्यमाणत्वात्, अन्तःकरणवृत्तेः प्रमात्वासम्भवात् । चक्षुरादेरप्राप्यकारित्वस्य वक्ष्यमाणत्वेनेन्द्रियकारित्ववृत्तेरप्यप्रामाणि-कत्वात् । एकान्तवादे परिणामः परिणामिनो भिन्नोऽभिन्नो वा न-सम्भवतीत्यस्य वक्ष्यमाणत्वेन वृत्तेर्दूरनिरस्तत्वाच्च ।

प्राभाकरास्तु—ज्ञातृव्यापारः प्रमाणं प्रमारूपफलस्य व्यापारं विना निष्पत्त्यसम्भवात् । यथा तण्डुलसलिलानलस्थाल्यादीनि स्वगतव्यापारैः

पाकरूपफलं निष्पादयन्ति, तथात्मापि व्यापारेणैव ज्ञानरूपं फलमुत्पादयति। अन्यथा कारकत्वानुपपत्तेः, फलजनकव्यापारवत्वस्यैव कारकत्वरूपत्वात्। ज्ञाधात्वर्थकर्तृत्वानुपपत्तेश्च तज्जनकव्यापारवत्वस्यैव तत्कर्तृरूपत्वात्। पचतीत्यादौ पाकानुकूलव्यापारबोधवत् जानातीत्यादौ ज्ञानानुकूलव्यापारबोधस्यानुभवसिद्धत्वात्। आख्यातार्थस्य व्यापारसामान्यार्थकत्वात्, कृत्यर्थकत्वे रथो गच्छतीत्यादावनुपपत्तेः। अचेतने रथादौ कृतेरसम्भवात्। स च व्यापारो नात्ममनस्संयोगरूपः तत्सत्त्वे प्रमोत्पत्तिनैयत्याभावेन यदव्यवहितोत्तरक्षणे प्रमोत्पत्तिस्तत्स्वरूपस्य प्रमासाधकतमत्वस्यासम्भवात्। किंतु प्रमारूपफलान्यथानुपपत्त्या कल्पनीयः क्षणिकः कश्चन व्यापारो नैयायिकाभिमतकृतिस्थानीयः। परंत्वतीन्द्रिय इति विशेषः। उक्तं च न्यायकुमुदचन्द्रोदये– क्षणिका हि सा न कालान्तरमवतिष्ठत इति, अत्यन्तपरोक्षेति च वदन्ति। तन्न—अत्यन्तातीन्द्रियतादृशव्यापारस्याप्रामाणिकत्वात्। प्रमारूपफलोत्पादकेन स्वयंप्रकाशभूतज्ञानात्मकव्यापारेणैव कारककर्तृत्वयोर्निर्वाहात्। आख्यातस्याश्रयार्थकत्वेन तादृशज्ञानरूपव्यापारार्थकत्वेन वा जानातीत्यस्योपपत्तेस्तादृशफलाद्यन्यथानुपपत्त्या उक्तातीन्द्रियव्यापारकल्पनासम्भवात्। एतेनातीन्द्रियज्ञानस्वरूपो ज्ञातृव्यापार एव प्रमाणमिति भट्टमतमप्यपास्तं—ज्ञानस्यातीन्द्रियताया "घटमहमात्मना वेद्मीति" सूत्रे निराकरिष्यमाणत्वात्—सर्वज्ञानानां स्वपरव्यवसायात्मकत्वसिद्धेरित्यलं पल्लवितेन।

ननु प्रमित्यव्यवहितपूर्ववृत्तिवायुसंयोगादावतिव्याप्तिवारणाय ज्ञानभिन्नस्य कारकसाकल्यादेः प्रमाणतावादिमतनिरासाय च सूत्रे ज्ञानग्रहणमित्ययुक्तं—प्रमाणे ज्ञानत्वस्यैवासिद्धेरतस्तद्व्यवस्थापनायाह।

हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥ २ ॥

हितमिच्छाविषयीभूतं सुखं तत्साधनं च। अहितं हितविरोधि द्वेषविषयीभूतं दुःखं, तत्साधनं च। तयोः प्राप्तिपरिहारौ उपादानपरित्यागौ। तत्समर्थं तज्जनकत्वमित्यर्थः।

ननु हितप्राप्तिः हितसम्बन्धानुकूलक्रिया। अहितपरिहारश्चाहितसम्बन्धाभावानुकूलक्रिया। तथाविधक्रियाद्वयं प्रति क्रमेण प्रवृत्तिनिवृत्त्योः कारणत्वेऽपि ज्ञानस्य तद्धेतुत्वमसिद्धं। न च हितप्राप्तौ तद्विषय-

कप्रवृत्तेस्तद्विषयकप्रवृत्तौ तद्गोचरेच्छाया इच्छायामिष्टसाधनताज्ञानस्य फलज्ञानस्य च हेतुत्वात्प्रवृत्तीच्छोभयद्वारकहितप्राप्तिजनकत्वमेव हितप्राप्तिसमर्थत्वं। एवमहितपरिहारेऽहितविषयकनिवृत्तेः, निवृत्तौ द्वेषस्य, द्वेषे चानिष्टसाधनताज्ञानस्यानिष्टसाधनताज्ञानस्य च हेतुत्वान्निवृत्तिद्वेषोभयद्वारकाहितपरिहारजनकत्वमेवाहितपरिहारसमर्थत्वमिति ज्ञाने तयोस्सम्भव इति वाच्यम्-तथासति चन्द्रार्कादिज्ञानस्य निरुक्तिप्राप्त्यादिजनकत्वाभावेनानुमितिजनकव्याप्त्यादिज्ञानस्य तथात्वाभावेन चाप्रामाण्यापत्तेः। भगवतः कृतार्थत्वेन तद्ज्ञानस्यापि प्राप्त्यादिजनकत्वाभावेनाप्रामाण्यापत्तेश्चेति चेदुच्यते-हितप्राप्त्यादिजनकत्वं न फलोपधायकत्वं-उक्तदोषात्। किंतु हितप्राप्त्यादिजनकतावच्छेदकधर्मवत्वरूपं स्वरूपयोग्यत्वम्। तादृशं च हितप्राप्त्यादिस्वरूपयोग्यत्वं हितप्राप्त्याद्यजनकेऽपि चन्द्रार्कज्ञानादावुपपद्यते, अरण्यस्थदण्डादौ घटादिस्वरूपयोग्यत्ववत्। तथा चेष्टसाधनत्वविषयकत्वं हितप्राप्तिसमर्थत्वमनिष्टसाधनत्वविषयकत्वमहितपरिहारसमर्थत्वमिति फलितम्। उक्तं च मार्तण्डे—अर्थक्रियासमर्थार्थप्रदर्शकत्वमेव प्रमाणस्य हितप्रापणम्। अहितपरिहारोप्यनभिप्रेतप्रयोजनसाधनमेतदित्युपदर्शनं। प्रवृत्तिमूला तूपादेयार्थप्राप्तिर्न प्रमाणाधीना तस्याः पुरुषेच्छाधीनप्रवृत्तिप्रभवत्वादिति। हि यस्मात्प्रमाणं हिताहितप्राप्तिपरिहारसमर्थं ततो ज्ञानमेवेत्यर्थः। प्रमाणं ज्ञानमिष्टसाधनत्वविषयकत्वादनिष्टसाधनत्वविषयकत्वाद्वा व्यतिरेकेण घटवदिति प्रयोगो बोध्यः। न च प्रमाणे इष्टसाधनत्वादिविषयकत्वमसिद्धम्। हितप्राप्तयेऽहितपरिहाराय च प्रमाणान्वेषणस्य सर्ववादिसिद्धत्वात्। बोधाबोधरूपकारकसाकल्यस्य प्रमाणतामते प्रमाणत्वसामानाधिकरण्येन ज्ञानत्वसत्त्वात्सिद्धसाधनं स्यादतोऽवच्छेदकावच्छेदेन ज्ञानत्वं साधनीयमिति सूचनायैवकारो विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकत्वेन शङ्खः पाण्डर एवेत्यादौ शङ्खत्वावच्छेदेन पाण्डरत्वबोधवत् प्रमाणत्वावच्छेदेन ज्ञानत्वबोधात्। एवकारस्यायोगव्यवच्छेदादिबोधकत्वं च न्यायकुमुदचन्द्रोदये स्पष्टम्। उक्तं च तत्र—

अयोगमपरैर्योगमत्यन्तायोगमेव च।

व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचक॥ इति॥

निपातक एवकारः। व्यतिरेचको व्यवच्छेदक इत्यर्थः।

अत्राहुर्बौद्धा अद्वैतिनश्च—ज्ञानं द्विविधं-निर्विकल्पकं सविकल्पकं चेति। तत्र नयनोन्मीलनानन्तरं निष्प्रकारकं वस्तुस्वरूपमात्रविषयकं ज्ञानं यज्जायते तन्निर्विकल्पकम्। उक्तं च-

कल्पनापोढमभ्रान्तं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥ इति॥

कल्पना पदवाच्यत्वं तदपोढं तदविषयकमित्यर्थः। क्षणिकपरमाणुरूपस्वलक्षणात्मकशुद्धवस्तुविषयकं सौगतमते निर्विकल्पकम्। अपोहस्य पदवाच्यत्वेऽपि स्वलक्षणे तदभावात्, स्वलक्षणविषयके निर्विकल्पके पदवाच्यत्वस्य भानं न सम्भवति। न च स्वलक्षणस्य पदवाच्यत्वं कुतो नास्तीति वाच्यम्। पदवाच्यत्वं हि पदसङ्केतः। स खलु व्यवहारार्थः सङ्केतकालमारभ्य व्यवहारकालपर्यन्तस्थायिनि पदार्थे युज्यते। न तु सङ्केतक्षणविनष्टे—तथासति सङ्केतस्य व्यवहारार्थत्वाभावेन निष्फलत्वापत्तेः। अपोहस्य च सामान्यरूपस्य तद्व्यावृत्तिरूपत्वेनाभावरूपत्वात् स्थायित्वोपपत्त्या तत्र पदानां सङ्केतः—यत्सत् तत् क्षणिकमिति व्याप्त्या तन्मते भावस्यैव क्षणिकत्वाङ्गीकारात्। तथा च वाच्यतासम्बन्धेन पदाविषयकज्ञानत्वं निर्विकल्पकलक्षणमुपपन्नम्। न च चाक्षुषसविकल्पके चक्षुरिन्द्रियायोग्यस्य पदस्य भानसम्भवादुक्तलक्षणस्य तत्रातिव्याप्तिरिति वाच्यम्—सोऽयं देवदत्त इति प्रत्यभिज्ञाने संस्कारोपस्थापिततत्तायाश्चक्षुरिन्द्रियायोग्याया अपि भानवदनादिवासनाख्यसंस्कारबलात्सविकल्पकसामान्ये पदस्य भानोपपत्त्यातिव्याप्तिविरहात्। यत्र वस्तुनि विशिष्टतद्वाचकपदस्य शक्तिग्रहो नास्ति तत्र वस्त्वादिसामान्यवाचिपदस्यैव वाच्यतासम्बन्धेन भानान्नानुपपत्तिः। अद्वैतमते तु सत्सामान्यरूपनिर्विशेषब्रह्ममात्रविषयकं ज्ञानं प्रथमतो जायते, तदेव निर्विकल्पकम्। तादृशसत्सामान्यस्य घटमानयेत्यादिरूपव्यवहारागोचरत्वेन तत्र सङ्केतरूपपदवाच्यत्वासम्भवात्तद्विषयकज्ञाने पदवाच्यत्वं न भासत इति विशेषः। एवं मिथ्याभूतापरमार्थसदतिरिक्ताविषयकज्ञानत्वमपि निर्विकल्पकस्य लक्षणं शुद्धवस्तुजमित्यनेन विवक्षितम्। बौद्धमते परमार्थसदतिरिक्तस्यापोहस्याद्वैतमते च तादृशस्य घटपटादिरूपभेदस्य सविकल्पके भानान्निर्विकल्पके तद्विषयकत्वाभावाल्लक्षणसमन्वयोऽतिव्याप्तिवारणं चेति। एतन्मतद्वयमपि निराकर्तुं प्रमाणभूतज्ञानत्वावच्छेदेन सविकल्पकत्वरूपं व्यवसायात्मकत्वं समर्थयते—

तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥ ३ ॥

अत्र तच्छब्देन प्रमाणं पूर्वोक्तं परामृश्यते। एवकारश्च पूर्वसूत्रादनुवर्तते। प्रमाणं निश्चयात्मकमेव व्यवसायात्मकमेव सप्रकारकमेवेत्यर्थः। पूर्ववदवच्छेदकावच्छेदेन साध्यतासूचनार्थमेवकारः। एवं च प्रमाणं सप्रकारकमेव, संशयादिप्रतिबन्धकतावच्छेदकतावत्वादनुमानवदिति प्रयोगः फलितः। अत्र सप्रकारकत्वं च सामान्यविशेषोभयविषयकत्वमेव। तेन सामान्यमात्रविषयकनिर्विकल्पकवादिनोऽद्वैतिनो विशेषमात्रविषयकनिर्विकल्पकवादिनो बौद्धस्य च निरासः। अयमित्याद्याकारकेदंत्वादिप्रकारकज्ञानसत्त्वेऽपि स्थाणुर्वा पुरुषो वेति संशयोत्पत्त्या तत्तदसाधारणधर्मप्रकारकत्वाभावेन निर्विकल्पकस्य संशयादिप्रतिबन्धकत्वानुपपत्त्या प्रमाणत्वानुपपत्तेः—संशयाद्यनिवर्तकज्ञानस्यापि प्रमाणत्वे संशयविपर्ययादेरपि प्रमाणत्वापत्तेरिति भावः। न च संशयादीनामप्रामाण्यं न संशयाद्यप्रतिबन्धकत्वात्। तथासतीदमित्यादिज्ञानानामप्रामाण्यप्रसङ्गात्। किन्तु बाधितार्थविषयकत्वात्, उक्तनिर्विकल्पकस्य चाबाधितार्थविषयकत्वात्प्रामाण्यं दुर्वारमिति वाच्यम्—सामान्यविशेषैकान्तयोर्निराकरिष्यमाणतया निर्विकल्पकविषयस्य बाधितत्वात्। न च वस्तुनस्सामान्यविशेषात्मकत्वेऽपि तदेकदेशभूतसामान्यमात्रगोचरं विशेषमात्रगोचरं वा ज्ञानं प्रथमतो जायते। तदेव ज्ञानं निर्विकल्पकमबाधितत्वात् प्रमाणं चेति वाच्यम्—सर्वस्यापि ज्ञानस्य धर्मधर्म्युभयगोचरत्वेनानुभूयमानतया निष्प्रकारज्ञानकल्पने प्रमाणाभावात्। यत्तु सविकल्पकदशायां सविकल्पकेना[1]भिभूतत्वान्निर्विकल्पकं नानुभूयते। सविकल्पकशून्यतादशायां च निर्विकल्पकमनुभूयत एव। तदुक्तम्—

> संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना।
> स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥
> प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यति।
> प्रत्यात्मवेद्यस्सर्वेषां विकल्पो नामसंश्रयः॥ इति॥

तथा च निर्विकल्पकस्य प्रत्यक्षसिद्धत्वान्नापलापो युक्त इति। तन्न-भवन्मते निर्विकल्पकस्य विशदतायाः, सविकल्पकस्याविशदतायाश्चाङ्गीकारेण विशदेन निर्विकल्पकेन सविकल्पकाभिभवकल्पनस्य युक्तत्वेऽपि

---

1 अनुभूतत्वात्—क.

खद्योतेन सूर्याभिभववत्, सविकल्पकेन निर्विकल्पकाभिभवायोगात्। सविकल्पकसामान्याभावदशायां निर्विकल्पकमनुभूयत इत्यपि न सत्—समारोपाविरोधिनो निष्प्रकारकज्ञानस्य कदाप्यननुभवात्। सविकल्पकसामान्ये पदस्य वाच्यतासम्बन्धेन भानकल्पनमयुक्तं—घटरूपार्थे घटपद-कलशपदद्रव्यपदवस्तुपदादीनां बहूनां वाच्यतासम्बन्धेन सत्त्वेन तत्र कस्यचिदेव पदस्य भानं कस्यचिन्नेत्यत्र नियामकाभावात्। अनादिवासनायाश्च प्रत्यक्षादिप्रमाणागोचरत्वेन तस्या नियामकत्वकल्पना-योगान्नियतपदभानान्यथानुपपत्त्या अनादिवासनाकल्पने चान्योन्याश्र-यात्। अनादिवासनासिद्धौ नियतपदभानसिद्धिः, तत्सिद्धौ चानादि-वासनासिद्धिरिति। किंचानादिवासनावशात्पदस्य स्मृतिः। ततश्च स्मृतस्य पदस्य सविकल्पके भानमिति हि भवत्सिद्धान्तः। तत्र पदस्मृतौ पदवाचकस्य पदान्तरस्य वाच्यतासम्बन्धेन भानमस्ति? नवा? आद्येऽनवस्था—पदवाचकपदस्मृतावपि तद्वाचकपदान्तरस्य भानप्रस-ङ्गात्। द्वितीये पदस्मृतौ निर्विकल्पकलक्षणातिव्याप्तिः, वाच्यतासम्बन्धेन पदादिविषयकत्वात्। एतेन [1]जगतः शब्दब्रह्मविवर्तत्वेन शब्दतादात्म्यात् ज्ञानसामान्ये शब्दस्य भानं दुर्निवारं। न च शब्दतादात्म्यमसिद्धं—सर्वा-र्थानां शब्दानुविद्धत्वेनैव भानस्यानुभवसिद्धत्वेन तत्तादात्म्यावश्यकत्वे-नेति [2]शब्दाद्वैतमतमपास्तं। क्षीरादिशब्दोच्चारणे जिह्वायां क्षीरपान इव रसास्वादस्याग्निशब्दोच्चारणे मुखदाहादेश्च दुर्वारत्वात्, क्षीरतद्वाचि-शब्दयोरग्नितद्वाचिशब्दयोश्च तादात्म्यात्। अत उक्तरीत्या पदभाना-भानाभ्यां सविकल्पकनिर्विकल्पकविभागस्यायुक्तत्वात्प्रमाणसामान्यं सप्र-कारकमेवेति सिद्धम्।

ननूक्तप्रमाणलक्षणस्य घटोऽयं घटोऽयमित्यादिधारावाहिकद्विती-यादिज्ञानरूपेण परिणममाने प्रथमज्ञानेऽतिव्याप्तिः। द्वितीयादिज्ञानस्य गृहीतग्राहित्वेन प्रमात्वासम्भवेन तज्जनकस्य प्रथमज्ञानस्य प्रमाणत्वा-योगेन तस्य लक्ष्यतया अभ्युपगन्तुमयुक्तत्वात्। न च तत्र द्वितीयादि-ज्ञानस्य प्रमात्ववारणार्थमपूर्वत्वमर्थे निविष्टमिति वाच्यम्—अपूर्वत्वस्य ज्ञानाविषयत्वरूपत्वे ज्ञानाविषयीभूतार्थविषयकत्वस्य ज्ञाने व्याहतत्वेना-सम्भवापत्तेः। [3]भिन्नज्ञानाविषयत्वरूपत्वेप्युत्तरकालीनज्ञानविषयीभूता-र्थग्राहिणो धारावाहिकप्राथमिकज्ञानस्यापि प्रमात्वानुपपत्तेः। न च

[1] जगत् (क). [2] शब्दाद्वैतमपास्तं (क). [3] स्वाभिन्न (क).

स्वपूर्वकालीनज्ञानाविषयत्वमेवापूर्वत्वमिति नोक्तदोष इति वाच्यम्—पूर्वं यदाकदाचित् [1]गृहीतग्राहिण इदानींतनघटादिज्ञानस्याप्रमात्वापत्तेः। स्वाव्यवहितपूर्ववृत्तिज्ञानाविषयत्वमपूर्वत्वमित्युक्तावपि अव्यवहितपूर्ववृत्तिचैत्रादिज्ञानाविषयीभूतार्थग्राहिणो मैत्रादिज्ञानस्याप्रमात्वापत्तिः स्वसमानाधिकरणस्वाव्यवहितपूर्ववृत्तिज्ञानाविषयत्वेऽपि अवग्रहादिगृहीतार्थग्राहिण ईहादिज्ञानस्य प्रमात्वानुपपत्तेः प्रमाणसंप्लवव्याघातः—बहूनां प्रमाणानामेकस्मिन्नर्थे प्रवृत्तेरेव प्रमाणसंप्लवशब्दार्थत्वात्। एवं पूर्वं गृहीतेऽपि सन्दिग्धेऽर्थे प्रवर्तमानस्य ज्ञानस्य प्रमात्वानुपपत्तिः। न चेष्टापत्तिः—अधीतानभ्यस्तशास्त्रशास्त्रार्थज्ञाने प्रमात्वस्य सर्वसिद्धत्वादतोऽपूर्वत्वस्य दुर्वचस्त्वात् लक्षणे तद्विशेषणमयुक्तमित्याशङ्कापरिहारायापूर्वत्वपरिष्कारं सूत्रद्वयेन सूचयति।

अनिश्चितोऽपूर्वार्थः ॥ ४ ॥

दृष्टोऽपि समारोपात्तादृक् ॥ ५ ॥ इति ॥

अनिश्चितः [2]स्वसमानाधिकरणाव्यवहितपूर्ववृत्तिनिश्चयाविषयीभूतोऽपूर्वार्थ इत्यर्थः। तादृश[3]निश्चयाविषयत्वं च केनचिदाकारेण विवक्षितं। तेनेहादिविषयस्यावग्रहादिना गृहीतत्वेऽपि केनचिदाकारेणागृहीतत्वादपूर्वत्वनिर्वाहः। प्रथमतो हीदं किञ्चिदिति वर्णसंस्थाननामसङ्ख्यादिविशेषापरिज्ञानेन वस्तुत्वादिरूपसामान्यधर्ममात्रप्रकारकं दर्शनम्। पश्चाच्छ्वेतमिदमित्यादिरूपमेकैकविशेष[4]ग्रहणमवग्रहः। ततोऽवग्रहगृहीतेऽर्थे बलाकया भवितव्यमित्यादिनिरवधारणप्रत्यय ईहा। तत ईहितेऽर्थे बलाकैवेत्यादिसावधारणग्रहणमवायः। ततोऽवायेऽर्थे कालान्तराविस्मरणहेतुर्धारणाज्ञानम्। तत्रेहादिविषयस्य श्वेतत्वादिना गृहीतत्वेऽपि बलाकात्वादिनाऽगृहीतत्वेनापूर्वत्वोपपत्तेः। दृष्टोऽपि स्वसमानाधिकरणाव्यवहितपूर्ववृत्तिनिश्चयविषयोऽपि समारोपात् संशयादिसमारोपसद्भावात् तादृक्—अपूर्वार्थ इत्यर्थः। तेन गृहीतस्यापि शास्त्रार्थस्यानभ्यासदशायामपूर्वतानिर्वाहः। एवं च स्वसमानाधिकरणस्वाव्यवहितपूर्ववृत्ति-

---

[1] अगृहीतग्राहिण (क). [2] समानाधिकरण (क). [3] अनिश्चय (क). [4] श्रवणमवग्रहः (क).

स्वनिवर्त्यसमारोपनिवर्तकस्वजन्यसंस्कारजनकज्ञानाविषयत्वमपूर्वत्व— मिति फलितम्। अत्र स्वनिवर्त्यसमारोपनिवर्तकत्वनिवेशादनभ्यस्त-गृहीतशास्त्रार्थस्यापूर्वतानिर्वाहः । तत्र पूर्वकालीनशास्त्रार्थग्रहणस्याभ्यासनिवृत्त्यसंशयनिवर्तकत्वाभावात्, धारणाविषयस्यापूर्वतानिर्वाहाय स्वजन्यसंस्कारजनकत्वनिवेशः । अवायस्य धारणाजन्यसंस्कारजनकत्वाभावाद्व्यावृत्तिः । पुरुषान्तरीयकालान्तरीणज्ञानविषययोरपूर्वता-निर्वाहाय स्वसामानाधिकरणस्वाव्यवहितपूर्ववृत्तित्वयोर्निवेशः । न च कालान्तरीणपुरुषान्तरीयज्ञानयोः स्वनिवर्त्यसंशयनिवर्तकत्वाभावादेव वारणात्स्वसामानाधिकरण्यस्याव्यवहितपूर्ववृत्तित्वयोर्निवेशनफलं—चैत्रीयसंशयं प्रति मैत्रज्ञानस्यैतत्कालीनसंशयं प्रति कालान्तरीणज्ञानस्या-निवर्तकत्वादिति वाच्यम्—स्वनिवर्त्यसंशयनिवर्तकत्वं हि न तावत्स्वप्रतिबद्ध्यभूतसंशयव्यक्तिप्रतिबन्धकत्वम् । तथासति भगवतस्संशयाप्रसिद्ध्या केवलज्ञानस्य स्वपदेनोपादाने स्वप्रतिबध्यसंशयव्यक्त्यप्रसिद्ध्याऽव्याप्त्यापत्तेः । किन्तु स्वप्रतिबध्यतावच्छेदकविषयतावत्संशयप्रतिबन्धकता-वच्छेदकविषयताकत्वम् । तथा च केवलज्ञानप्रतिबध्यतावच्छेदकविषयता-वतश्चैत्रादिसंशयस्य प्रसिद्धेर्नाव्याप्तिः । एवमेव कालान्तरीणपुरुषान्त-रीयज्ञानयोरपि स्वनिवर्त्यसंशयप्रतिबन्धकतावच्छेदकविषयताकत्वात् तद्गृहीतार्थस्यापूर्वतानिर्वाहाय स्वसामानाधिकरण्यस्वाव्यवहितपूर्ववृत्ति-त्वयोर्निवेश आवश्यकः । स्वसामानाधिकरण्यस्वाव्यवहितोत्तरवृत्तित्व-स्वाप्रतिबध्यसंशयप्रतिबन्धकतावच्छेदकविषयताशून्यत्वस्वाजन्यसंस्का-रजनकत्वैतच्चतुष्टयसम्बन्धेन ज्ञानविशिष्टान्यत्वे सति अर्थव्यवसायत्वं प्रमात्वम् । तादृशव्यवसायरूपेण परिणममानज्ञानत्वं प्रमाणत्वमिति निष्कर्षः । अत्र प्रमालक्षणे धारावाहिकद्वितीयादिज्ञानवारणाय सत्यन्तम् । सम्बन्धचतुष्टयप्रयोजनं च पूर्ववदेव। अर्थपदोपादानाच्च विपर्ययादि-वारणम्। प्रकारसंश्लिष्टतया परिणतस्य विशेष्यस्यार्थशब्देन विवक्षित-तया इदं रजतमिति भ्रमे प्रकारीभूतरजता[1]संश्लिष्टशुक्तेरेव भानात् ।

ननु निरुक्तार्थविषयकत्वनिवेशनमयुक्तं—विपर्ययस्थले अख्यात्य-सत्ख्यात्यात्मख्यातीनां स्वीकारे तासामर्थविषयकत्वाभावादेव वारणात् प्रकारसंश्लिष्टतया परिणतत्वविशेषणं व्यर्थम्। प्रसिद्धार्थख्यातिपक्षेऽनिर्व-चनीयख्यातिपक्षे [2] चार्थविशेषणेन न तद्वारणसम्भवः । तन्मतयोस्तत्का-

---

1 असंश्लिष्टम् (क). 2 अर्थविशेषेण (क).

लोत्पन्नरजतस्यैव विषयत्वात्, प्रकारसंश्लिष्टतया परिणतार्थविषयकत्वस्यापि सत्त्वात्। स्मृतिप्रमोषपक्षेऽप्यापणस्थरजतस्यैव तत्र भाने तद्विशेषणेन वारणासम्भवादिति चेन्न—अख्यात्यसत्ख्यात्यात्मख्यात्यनिर्वचनीयख्यातिस्मृतिप्रमोषान् निराकृत्य विपरीतार्थख्यातिपक्षस्यैव स्याद्वादिभिरङ्गीकारेण प्रकारसंश्लिष्टतया परिणतार्थविषयकत्वनिवेशावश्यकत्वात्, तादृशज्ञानस्य शुक्त्यादिरूपार्थविषयकत्वेन केवलार्थाविषयकत्वेन वारणासम्भवात्तथाहि—चार्वाकास्तावदेवमाहुः—इदं रजतमिति भ्रमज्ञाने न तावद्रजतं विषयः। सत्यरजतज्ञानवत्तद्विषयज्ञानस्य प्रमात्वापत्तेः। नापि शुक्तिः—इयं शुक्तिरिति ज्ञानवत्प्रमात्वापत्तेः। नापि रजताकारविशिष्टा शुक्तिः—घटाकारेण पटस्येव शुक्ते रजताकारेण वैशिष्ट्यायोगात्। तस्मान्निर्विषयज्ञानमेव, इदं रजतमित्यादिभ्रमः, सैवाऽख्यातिः। अख्यातिशब्दस्यानुदरा कन्येत्यादिवदीषत्ख्यातिरित्यर्थः। ख्यातिपदार्थे ज्ञाने ईषत्त्वं च निर्विषयत्वमेवेति। तन्न-भ्रमस्य निर्विषयत्वे शुक्तिरजतभ्रमोऽयं, मरीचिकाजलभ्रमोऽयं, पीतशङ्खभ्रमोऽयमिति भ्रमाणां परस्पर-[1]वैलक्षण्यानुपपत्तेः। ज्ञानानां विषयवैलक्षण्यादेव वैलक्षण्यस्य वाच्यत्वात् न चाख्यातिरित्यस्य ख्यात्यभाव इत्यर्थ इति वाच्यम्—तथासति सुषुप्त्यवस्थापेक्षया वैलक्षण्यानुपपत्तेः, ज्ञानाज्ञानाभ्यामेव [2]भ्रमसुषुप्त्योर्भेदात्। तदेतदभिप्रेत्योक्तं मार्तण्डे—'भ्रान्तिसुषुप्त्यवस्थयोरविशेषप्रसङ्गश्चेति'।

माध्यमिकास्तु—इदं रजतमिति ज्ञाने भासमानो रजताकारः ज्ञानधर्मः? अर्थधर्मो वा? नाद्यः—अहं घटज्ञानवानितिवदहं रजतवानिति प्रतीत्यापत्तेः। नापि द्वितीयः—अर्थक्रियाकारित्वापत्तेः, नेदं रजतमिति बाधज्ञानानुपपत्तेश्च। अर्थगताकारस्यापि बाधाङ्गीकारे घटेऽपि नायं घट इति बाधप्रसङ्गात्, तस्मादसदेव रजतभ्रमे भासत इत्यसत्ख्यातिरेव भ्रान्तिरिति वदन्ति।

माध्वास्तु—इदं रजतमिति ज्ञाने असदेव रजतं भासते, तादृशभ्रमानन्तरं ममासदेव रजतम[3]भादिति प्रत्यक्षोदयेन तादृशप्रत्यक्षेण तादृशभ्रमविषयीभूतं रजतमसत्, सत्त्वानधिकरणत्वात्—शशशृङ्गवत्। भ्रमज्ञानमसद्विषयकं सत्त्वानधिकरणविषयकत्वात्, नृशृङ्ग-

---

[1] वैषम्या (क). [2] सुषुप्त्योर्भेदात् (ख). [3]अभावात् (ख).

मसदित्यादिवाक्यजन्यपरोक्षज्ञानवदित्यनुमानेन च भ्रमस्यासद्विषयकत्वसिद्धेः। न च बौद्धमतप्रवेशापत्तिः—अस्माभिस्सतश्शुक्तिशकलस्यापि भ्रमे भानाङ्गीकारेण बौद्धैस्तदनङ्गीकारेण विशेषादिति वदन्ति। तदुभयमपि न युक्तं—असतो ज्ञानविषयत्वस्याप्रामाणिकत्वात्। अन्यथा असतोऽपि सत्त्वापत्तेः, ज्ञानविषयत्वस्यैव सत्त्वरूपत्वात्। न चासन्न ज्ञानविषय इति वाक्यजन्यज्ञाने असतो भानमस्ति वा? नवा? आद्ये असत्ख्यातिरागता। द्वितीये असतो ज्ञानविषयत्वखण्डनानुपपत्तिरिति वाच्यम्—असन्न ज्ञानविषय इति वाक्यस्य ज्ञानविषयत्वव्यापकं सत्त्वमित्यर्थाङ्गीकारेणाविरोधात्। न चैष वन्ध्यासुतो यातीत्यादिवाक्ये असदर्थबोधस्यानुभवसिद्धस्यापलापासम्भव इति वाच्यम्—तत्र वन्ध्यासुतादिशब्दानां वन्ध्यासुताद्यभावपरत्वेनाभावबोधस्य तत्राङ्गीकारात्। न चैवमपि प्रतियोगितया असतो भानात् असत्ख्यातिर्दुर्वारेति वाच्यं—[1] शब्दजन्यबोधेऽसतो भानस्य कथंचित्सम्भवेऽपि प्रात्यक्षिकज्ञानेऽसद्भावस्यात्यन्तमप्रामाणिकत्वात्। इदं रजतमिति भ्रमस्य भवन्मते प्रत्यक्षत्वात्। यदुक्तमर्थक्रियाकारित्वाभावाद्रजताकारस्यार्थधर्मत्वं नास्तीति। तन्न—अभिलाषप्रवृत्त्यादिरूपार्थक्रियाकारित्वस्य तादृशरजते दर्शनात्। न च कटकमुकुटाद्यर्थक्रियाकारित्वमपि तत्र स्यादिति वाच्यम्—आपणस्थरजतस्यैव भ्रमे भानेन तस्य तादृशार्थक्रियाकारित्वस्यापि सम्भवात्। यदपि प्रत्यक्षानुमानाभ्यां भ्रमस्यासद्विषयकत्वं सिध्यतीत्युक्तं। तन्न—असदेव रजतमभादिति प्रत्यक्षस्य तद्देशमात्रासत्त्वविषयकत्वेऽपि सर्वथा असत्त्वविषयकत्वाभावात्। प्रथमानुमाने शब्दमात्रगम्यत्वस्य द्वितीयानुमाने परोक्षस्योपाधित्वात् तयोर्दृष्टान्ते साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वादिति।

साङ्ख्यास्तु—देशान्तरे विद्यमानस्य रजतस्य भ्रमे भानं न संभवति चक्षुस्सन्निकर्षविरहात्। असन्निकृष्टस्य प्रत्यक्षे भानासंभवात्। अतो भ्रान्तिकाले किञ्चिद्रजतं शुक्तिकायां जायते। उत्तरकाले च नश्यति, विद्युदादेरिव प्रतीतिकालमात्रसत्त्वे विरोधाभावात्। तस्मात्प्रसिद्धार्थख्यातिरेव, प्रसिद्धस्य तत्कालोत्पन्नस्यैव भ्रमे भानादित्याहुः।

रामानुजीयास्तु—इमामेव प्रसिद्धार्थख्यातिं सत्ख्यातिनामान्तरेणाभिधाय कल्पान्तरं चाहुः। ईश्वरः पञ्चभूतानि सृष्ट्वा अण्डाद्युत्पादार्थं

[1] अब्दजन्यबोधे (क).

परस्परं मेलयति। तच्च पञ्चभूतानां मेलनं पञ्चीकरणमित्युच्यते। अतस्तेजोंऽशस्य पृथिव्यां सत्त्वात्, रजतस्य तेजस्त्वेन शुक्तेः पार्थिवत्वेन तत्र सद्भावोपपत्तेरिदं रजतमिति भ्रमे [1]तादृशतेजोंऽशरूपं रजतं शुक्त्यन्तर्गतं भासत इति। तदुभयमपि न युक्तं—आपण इव शुक्तावपि रजतस्य सत्त्वे आपणे रजतज्ञानवत इव शुक्तौ रजतज्ञानवतो भ्रान्तत्वानुपपत्तेः [2] न च ज्ञानसमानकालमात्रवृत्तिकापदार्थविषयकत्वमेव [3]भ्रान्तित्वमिति तदाश्रयस्य भ्रान्तित्वोपपत्तिरिति वाच्यम्— तथासति विद्युदादिज्ञानस्यापि भ्रमत्वापत्तेः। न चैकैकपुरुषानुभाव्यज्ञानसमकालमात्रवृत्तिपदार्थविषयकत्वं तथेति न विद्युदादिज्ञानस्य भ्रमत्वमिति वाच्यम्—एवमपि सुखादिज्ञानस्य तथात्वापत्तेः। एवं भ्रमस्थले ज्ञानसमकालमुत्पन्नस्य ज्ञानोत्तरकालं विनाशे मरीचिकाजलभ्रमानन्तरं जलनाशाधिकरणदेशे [4]भूस्निग्धतादेरुपलम्भप्रसङ्गः—विद्युदादिवन्निश्शेषनाशकल्पने चादृष्टकल्पनाप्रसङ्गः, जलादेर्निश्शेषविनाशस्य क्वाप्यदर्शनात्। अत्र रजतं नास्ति नासीन्न भविष्यतीति त्रैकालिकबाधानुपपत्तिश्च। पञ्चीकरणादिना रजतादिसद्भावोपपत्तिवर्णनमपि न युक्तम्। [5]निर्मातुरीश्वरस्यैव निराकरिष्यमाणतया तत्कर्तृकपञ्चीकरणस्याप्यसंभवात्॥

योगाचारास्तु—इदं रजतमिति भ्रमे भासमानं रजतं नार्थाकारः—पुरुषान्तराणामपि तादृशरजतानुभवप्रसङ्गात्। भ्रान्तित्वाभावप्रसङ्गाच्च। किंतु ज्ञानाकार एव। अत [6]आत्मख्यातिरेव भ्रमः। अनाद्यविद्यावशाच्च बहिरिव प्रतिभासत इति वदन्ति। तन्न-- [7]भ्रमाकारस्यैव कदाचिदिदं रजतमिति, कदाचिच्छङ्खः पीत इत्यादिभ्रमवैलक्षण्याभावप्रसङ्गात्। ज्ञानवैलक्षण्यस्य विषयवैलक्षण्याधीनतया भ्रमविषयीभूतज्ञानस्य ज्ञानस्वरूपस्याविशेषात्। रजतस्य ज्ञानाकारत्वे अहं रजतवानिति प्रतीत्यापत्तेश्च।

ब्रह्माद्वैतवादिनस्तु—इदं रजतमिति भ्रमे न तावत्सद्रजतं भासते—तस्य कटकमुकुटाद्यर्थक्रियाकारित्वापत्तेः। नेदं रजतमिति बाधज्ञानानुपपत्तेश्च। सत्यस्य ब्रह्मवत् बाधविषयत्वायोगात्। नाप्यसत्—

---

[1] तादृशतेजोधिरूपं (क). [2] ननु च (क). [3] भ्रान्तत्वमिति (ख). [4] अभ्रास्निग्धतादेः (ख). [5] ईश्वरस्यैव (क). [6] आत्मख्यातित्वे (ख). [7] ज्ञानाकारस्यैव भ्रमे भाने (ख).

असतः शब्दजन्यज्ञानविषयत्वेऽपि प्रत्यक्षविषयत्वायोगात्। अतः सद-सद्विलक्षणमेव रजतं तत्र विषयः। तच्च रजतं प्रतीतिकाले उत्पद्यते, तदनन्तरं च नश्यति। न चैवं रूप्यमुत्पन्नं विनष्टं चेति धीप्रसङ्गः, नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतीतिश्च न स्यादिति वाच्यम्—उत्पादविनाशप्रतीतिरियं भ्रान्तिसमये आपद्यते? बाधसमये वा? नाद्यः—पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैवोत्पादविनाशप्रतीतौ प्रतिबन्धकत्वात्, विरोधिज्ञानानुदयेन तत्काले रूप्यस्याविनाशाच्च। न द्वितीयः—तदभाववत्ताज्ञानरूपबाधज्ञानस्य तद्वत्ताबुद्धाविव रजतोत्पादविनाशग्रहयोरपि प्रतिबन्धकत्वात्। न च तन्मते ब्रह्मण एकस्यैव सत्यत्वेन जगत्सामान्यस्य सदसद्विलक्षणत्वेनापणस्थरजतज्ञानं प्रमा, शुक्तिरजतज्ञानं भ्रम इति विशेषो न स्यात्—उभयोरपि मिथ्यार्थविषयकत्वेनाऽविशेषादिति वाच्यम्— पदार्थो हि त्रि-विधः—पारमार्थिको व्यावहारिकः प्रातिभासिकश्चेति। तत्र ज्ञानाबाध्यः पारमार्थिकः। तच्च ब्रह्म, तस्य केनापि बाधाभावात्। ब्रह्मज्ञानबाध्यो व्यावहारिकः। स च घटपटादिरूपः प्रपञ्चः। तस्य ब्रह्मज्ञानेन मोक्षकाले बाधाङ्गीकारात्। ब्रह्मान्यज्ञानबाध्यश्च प्रातिभासिकः—शुक्तिरूप्यादिस्तस्येयं शुक्तिरिति ब्रह्मान्यविषयकज्ञानेन बाधात्। तथा च ब्रह्मान्यविषयकज्ञानाबाध्यार्थविषयकज्ञानत्वं प्रमात्वं। [1]तद्ज्ञानबाध्यार्थविषयकत्वं भ्रमत्वमिति लक्षणादापणस्थरजतज्ञाने प्रमात्वस्य शुक्तिरजतज्ञाने भ्रमत्वस्य चोपपत्तेः। तस्मादिदं रजत-मित्यादिभ्रमोऽनिर्वचनीयख्यातिरेव अनिर्वचनीयशब्दस्य सदसद्विलक्ष-णत्वरूपमिथ्यात्वपरत्वादिति वदन्ति। तदयुक्तं—आपणस्थरजतस्यैव शुक्तिसंसृष्टतया भ्रमे भानेन तस्य कटकमुकुटाद्यर्थक्रियाकारित्वेन तदभावोक्तेरयुक्तत्वात्। शुक्तिदेशे बाध्यस्य शुक्तौ सत्त्वविरोधित्वेप्यापणे सत्त्वाविरोधितया नेदं रजतमिति बाधेन रजतस्य सद्विलक्षणत्व-साधनस्यायुक्तत्वाच्च। पटात्यन्ताभावज्ञानकालेऽपि पटो नष्ट इति प्रतीत्युदयेन नाशबुद्धौ अत्यन्ताभावज्ञानस्याप्रतिबन्धकतया बाधकज्ञान-काले नाशप्रतीतेर्वारयितुमशक्यत्वाच्च। किंच शुक्तौ रजतोत्पादकसामग्र्य-भावाद्रजतोत्पत्तिर्न सम्भवति। न च शुक्त्यवच्छिन्नचैतन्यगतस्य शुक्त्यज्ञानस्य भावरूपस्य रजताकारेण परिणामाङ्गीकारान्नानुपपत्तिरिति

---

[1] तदज्ञान (क).

वाच्यम्- भवदभिमताज्ञानस्य रूपादिमद्रजताकारेण परिणामासम्भवाच्च। न च स्वलक्षणयोरेवोपादानोपादेयभाव इति नियमानङ्गीकारात्, रूपादिशून्यस्यापि रूपादिमदुपादानत्वं भावरूपस्याप्यभावोपादानत्वं च निर्वहतीति वाच्यम्—भवद्भिस्तन्नियममभ्युपगम्यैव मिथ्याभूतस्य जगतो मिथ्याभूतेनोपादानेन भाव्यमिति जगदुपादानज्ञानकल्पनेन तादृशनियमत्यागेऽपसिद्धान्तापातात् । सुवर्णघटादिकं प्रति सुवर्णमेवोपादानं । मृद्घटादिकं प्रति मृदेवेत्यन्वयव्यतिरेकाभ्यां तादृशनियमस्य लोकसिद्धत्वाच्च । प्रमाभ्रमलक्षणवर्णनमपि न युक्तं—प्रमाणलक्षणस्य ब्रह्म क्षणिकमिति भ्रमेऽतिव्याप्तेः । ब्रह्मण्यारोपितक्षणिकत्वस्य ब्रह्म [1] न क्षणिकमिति ब्रह्मज्ञानबाध्यत्वेऽपि तदन्याबाध्यत्वात्। भ्रमलक्षणस्य नेदं रजतमिति प्रमायामतिव्याप्तेश्च । तद्विषयीभूतरजतस्य ब्रह्मान्यज्ञानबाध्यत्वात्। विस्तरेण चैतन्मतमुत्तरत्र निरसिष्यते ।

प्राभाकरास्तु—इदं रजतमिति भ्रमस्थले इदंपदार्थे शुक्तौ चक्षुस्सन्निकर्षे सतीदमिति [2] पुरोवृत्तिप्रत्यक्षम् । ततश्चाकचक्यादिरूपरजतसादृश्यदर्शनेनोद्बोधकेन सहितात् पूर्वानुभूतरजतसंस्काराद्रजतस्मरणम्। तत इदं रजतमिति विशिष्टज्ञानं जायते। ततः प्रवृत्तिरिति नैयायिकादिभिरुच्यते । तत्र ज्ञानद्वयेनैव प्रवृत्तिभ्रमव्यहारयोर्निर्वाहे मध्ये विशिष्टज्ञानकल्पनमफलं, गौरवग्रस्तं च। न च रजतार्थप्रवृत्तौ रजतत्वावच्छिन्नप्रकारतानिरूपितेदंत्वावच्छिन्नविशेष्यताशालिज्ञानस्य कारणतया तादृशज्ञानस्यैव भ्रमव्यवहारविषयतया च तदुभयोपपत्तये विशिष्टज्ञानं कल्पनीयमिति वाच्यम्-ग्रहणस्मरणात्मकज्ञानद्वयीय[3]विषयतयोः परस्परं निरूप्यनिरूपकभावस्वीकारेण ज्ञानद्वयस्यापि रजतत्वावच्छिन्नप्रकारतानिरूपितेदंत्वावच्छिन्नविशेष्यताशालित्वेन प्रवृत्तिव्यवहारयोरुपपत्तेः । मध्ये विशिष्टज्ञानं कल्पयित्वा तदीयविषयतयोर्निरूप्यनिरूपकभावकल्पनापेक्षया ज्ञानद्वयीयविषयतयोरेव तथात्वकल्पनस्य युक्तत्वात्। तस्माद्विवेकाख्यातिरेव युक्ता। विवेकस्य ग्रहणस्मरणयोर्भेदस्याख्यातिरग्रह इत्यर्थ इति वदन्ति। तदपि न-रजतस्य स्मरणमात्राङ्गीकारे रजतं पश्यामीति प्रतीत्यनुपपत्तिः । रजतं स्मरामीति प्रतीत्यापत्तिश्च। एवमिदं रजतमिति ज्ञानद्वयं मम जातमिति प्रतीत्यापत्तिः । एकं ज्ञान-

---

[1] क्षणिकमिति (ख). [2] पूर्ववृत्ति (ख). [3] विषयीयविषयतयोः (ख).

मिति प्रतीत्यनुपपत्तिश्च। अतो भ्रमस्थले ख्यात्यन्तराणामनुपपत्तेर्विपरीतख्यातिरेव युक्ता। विपरीतख्यातित्वं च तदभाववति तत्प्रकारकज्ञानत्वमेव। इदं रजतमिति भ्रमे तादात्म्येन शुक्त्यभाववतीदमर्थे तेन सम्बन्धेन तदवगाहित्वात्। नन्वापणस्थरजतस्य चक्षुस्सन्निकर्षाभावात्कथं भ्रमे भानं सम्भवति। [1]न च चक्षुःप्राप्यकारित्वस्य निरसिष्यमाणतया चक्षुस्सन्निकर्षाभावेऽपि चाक्षुषमुपपद्यत इति वाच्यम्। तथा सत्यत्यन्तविप्रकृष्टपदार्थानामपि चाक्षुषापत्तिवारणायाभिमुखदेशवृत्तित्वस्य [2] नियामकतया वाच्यतया आपणस्थरजते तदभावेन चाक्षुषानुपपत्तिरिति चेन्न—आभिमुख्यमात्रस्य चाक्षुषे नियामकत्वे सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञारूपचाक्षुषे पूर्वानुभूतदेशवृत्तित्वरूपतत्ताया भानानुपपत्तिरतः पूर्वानुभवजन्यस्मृतिविषयत्वमपि तत्र नियामकं वाच्यम्। तथापणस्थरजते आभिमुख्याभावेऽपि स्मृतिविषयत्वसत्त्वाच्चाक्षुषत्वोपपत्तिः। न च प्रत्यभिज्ञायाः स्मृत्युपस्थापितार्थावगाहित्वसम्भवेऽपि प्रत्यक्षे तन्न सम्भवतीति वाच्यम्—भ्रमस्यापि प्रत्यभिज्ञारूपत्वेन प्रत्यक्षत्वानुपगमात्। न च प्रत्यभिज्ञायास्तत्तावगाहित्वनियमाद्भ्रमस्य प्रत्यभिज्ञात्वं न सम्भवतीति वाच्यम्—वृक्षोऽयमित्यादिज्ञानानामपि प्रत्यभिज्ञात्वेन वक्ष्यमाणतया तादृशनियमासिद्धेः। रजताकारेण शुक्तेर्भानं तु दोषाधीनमिति न काप्यनुपपत्तिः। अथैवं नैयायिकाभिमताऽन्यथाख्यातेरेव विपरीतख्यातिरिति नामान्तरं स्याद्वादिभिरुक्तं भवतीति चेत्सत्यं—नैयायिकमते रजतत्वाकारेण शुक्तेर्भ्रमे भानं रजतस्य च न भानमिति स्वीकृतेः। तत्रापणे जातिव्यक्त्योर्द्वयोरेवानुभूतत्वेन संस्कारस्योभयविषयकत्वाच्चाकचक्यादिरूपसादृश्यस्य व्यक्तावेव सत्त्वाच्च व्यक्तेरपि स्मृतत्वावश्यकतया स्मृतत्वरूपनियामकस्य जातिव्यक्त्योर्द्वयोरेव सत्त्वेन भ्रमे व्यक्तेर्भानं नास्तीत्यत्र नियामकं दुर्लभम्। स्याद्वादिनां च सामान्यविशेषयोर्भेदाभेदाङ्गीकारेण व्यक्तेरपि कथंचिद्भ्रमे भानान्नानुपपत्तिः। किञ्च ख्यात्यन्तरवादिनां सर्वेषामपि विपरीतख्यातिर्दुर्वारा। अख्यातिपक्षे निर्विषयज्ञानस्य सविषयत्वेनासत्ख्यातिपक्षेऽसद्रजतस्य सत्त्वेन, प्रसिद्धार्थख्यातिपक्षे आशु विनाशिनो रजतस्य स्थिरत्वेन, आत्मख्यातिपक्षे ज्ञानाकारस्य विषयाकारत्वेन, अनिर्वचनीयख्यातिपक्षे मिथ्याभूतरजतस्य सत्यत्वेन, विवेकाख्यातिपक्षे ज्ञानद्वयस्यैकत्वेन भानाङ्गीकारात्।

---

[1] ननु (क). [2] नियामकताया (ख).

असत्ख्यात्यादिपक्षेष्वसद्रजतस्य सत्त्वादिना भ्रमे भानानङ्गीकारे भ्रमोत्तरं तत्र रजतार्थिप्रवृत्त्यनुपपत्तेः । तस्मात्ख्यात्यन्तरवादिना[1]मवर्जनीयत्वान्निर्दुष्टत्वाच्च भ्रमस्थले विपरीतख्यातिरेव स्वीकार्या । एवं च प्रकारसंश्लिष्टतया परिणतविशेष्यरूपार्थविषयकत्वनिवेशनं विपर्ययवारणाय युक्तमेवेति दिक् ।

ननूक्तरीत्याऽपूर्वार्थव्यवसायस्यैव प्रमात्वे भगवद्ज्ञाने केवलाख्ये उक्तलक्षणस्याव्याप्तिः—तस्य निश्चितार्थविषयकत्वेनापूर्वार्थविषयकत्वाभावात् । न चार्थेषु प्रतिक्षणं विभिन्नाः पर्याया उत्पद्यन्ते । तदुक्तम्—

अनादिनिधने द्रव्ये स्वपर्यायाः प्रतिक्षणम् ।
उन्मज्जन्ति निमज्जन्ति जलकल्लोलवज्जले ॥ इति ॥

तथा च तत्तत्पर्यायविशिष्टतया पूर्वमग्रहान्नाव्याप्तिरिति वाच्यम्—तथा सति केवलज्ञानस्य सदा कतिपयार्थग्राहित्वेन कदापि सर्वविषयकत्वानुपपत्तेरिति चेन्न—अपूर्वार्थविषयकत्वं च सर्वविषयकत्वाभावगृहीतग्राहित्वोभयाभाववत्वं धारावाहिकद्वितीयादिज्ञानेषूभयसत्त्वान्नातिव्याप्तिः । केवलज्ञाने च गृहीतग्राहित्वसत्त्वेऽपि सर्वविषयकत्वाभावा[2]विरहेणोभयाभावसत्त्वादपूर्वार्थतानिर्वाहः । न चैवमपि स्मृतेः प्रामाण्यानुपपत्तिः—अनुभवगृहीतस्यैव तत्र भानेन गृहीतग्राहित्वसर्वविषयकत्वाभावोभयस्यैव सत्त्वादिति वाच्यम्—गृहीतपदेन स्वाव्यवहितपूर्ववृत्तिस्वसमानाधिकरणज्ञानविषयत्वस्यैव विवक्षितत्वेनानुभवस्य स्मृत्यव्यवहितपूर्ववृत्तित्वाभावेनादोषात् । नन्वेवमप्युक्तलक्षणस्य नयेऽतिव्याप्तिः—न च नयस्य वस्त्वंशग्राहित्वेनानेकान्तात्मकवस्तुग्राहित्वाभावान्नातिव्याप्तिः । अर्थपदेनानेकान्तात्मकवस्तुनोऽत्र विवक्षितत्वादिति वाच्यम्—अन्योन्यविशेष्यविशेषणभावापन्नधर्मधर्म्युभयविषयके जीवस्सुखीत्यादिज्ञानरूपनैगमनयेऽतिव्याप्तेः—तस्यानेकान्तात्मकवस्तुविषयकत्वात् । उक्तं च—

तथा च न प्रमेयत्वं ध्रौव्यैकान्तादिषु क्वचित् ।
नयैरपि गुणीभूतानेकान्तस्य प्रवेदनात् ॥ इति ॥

मैवं—नयस्य प्रमाणैकदेशत्वेन प्रमाणाभिन्नतया तस्यापि लक्ष्यत्वात् । तदुक्तम्—

[3]नाप्रमाणं प्रमाणं वा नयो ज्ञानात्मको मतः ।
स्यात्प्रमाणैकदेशस्तु सर्वथाप्यविरोधतः ॥ इति ॥

---

[1] अनिर्वचनीयत्वात् (क). [2] विरहेण (क). [3] माप्रमाणं (क).

यदि च "प्रमाणनयैरधिगम" इति तत्त्वार्थसूत्रादुदाहृतश्लोकेन प्रमाणमपि नेत्युक्तेश्च नयस्य प्रमाणभिन्नत्वावगमादलक्ष्यत्वमित्युच्यते, तदा प्रमाणैकदेशाभिन्नत्वस्यापि निवेशान्नातिव्याप्तिरिति बोध्यं। ननूक्तरीत्या प्रमाया अपूर्वार्थव्यवसायत्वसिद्धावपि स्वव्यवसायत्वं कथं सिध्यतीत्यत्राह—

## स्वोन्मुखतया प्रतिभासनं स्वव्यवसायः ॥ ६ ॥

स्वस्य उन्मुखता स्वोन्मुखता। स्वशब्दः प्रमाणज्ञानपरः। उन्मुखता—व्यवहारप्रयोजकता—व्यवहारजनकतावच्छेदकतेतियावत्। वैशिष्ट्यं तृतीयार्थः। प्रतिभासनं विषयतेत्यर्थः। स्वविषयकव्यवहारजनकतावच्छेदकस्वनिरूपितविषयतावत्वं स्वव्यवसायत्वमिति फलितम्। प्रतिभासनं स्वव्यवसाय इति समानाधिकरणनिर्देशो नानुपपन्नः, धर्मधर्मिणोर्भेदाभेदसत्त्वात्। अत्र निर्विकल्पकीयतुरीयविषयताव्यावृत्त्यर्थमवच्छेदकान्तोपादानम्। अत्र दृष्टान्तमाह—

## अर्थस्येव तदुन्मुखतया ॥ ७ ॥ इति ॥

अत्र प्रतिभासनं व्यवसाय इत्यनुषज्यते। अर्थविषयकव्यवहारजनकतावच्छेदकार्थनिरूपितविषयतावत्वम्। यथा अर्थव्यवसायत्वं, तद्वदेव स्वव्यवसायत्वमपीत्यर्थः। यथा अर्थव्यवहारसत्त्वादर्थज्ञानमावश्यकं तथा स्वव्यवहारसत्त्वात्स्वविषयकज्ञानमप्यावश्यकम्। व्यवहारे व्यवहर्तव्यज्ञानस्य हेतुत्वात्। स्वव्यवहारनिर्वाहाय स्वविषयकज्ञानान्तरकल्पने गौरवमनवस्था चेति। स्वस्यैव स्वविषयकत्वं युक्तमिति भावः।

अत्र साङ्ख्याः—ज्ञानं न व्यवसायात्मकमचेतनत्वाद्घटवत्। न चाचेतनत्वमसिद्धं—ज्ञानमचेतनं प्रधानपरिणामत्वात् घटवदित्यनुमानेन तत्सिद्धेः। न च ज्ञानस्यात्मधर्मत्वाभावेऽहं जानामीति प्रतीतिविरोध इति वाच्यम्—मन्मतेऽहंपदस्या[1]हङ्कारात्मकप्रधानपरिणामपरतया तत्र वृत्तिरूपज्ञानसत्त्वेनाविरोधात्। इन्द्रियवृत्त्यनुमानादिद्वाराऽन्तःकरणस्य घटाद्याकाराकारितावृत्तिर्जायते। तद्वृत्तिरेव ज्ञानमुच्यते। तदाश्रयत्वं

[1] आहारात्मक (क).

च्चान्तःकरणस्य न तु चेतनस्यात्मन इति। न चैवं चेतनोऽहं जानामीत्यादि-प्रतीत्यनुपपत्तिरिति वाच्यम्—अग्न्ययोगोलकयोः परस्परानुप्रवेशलक्षण संयोगवशेनायो दहतीति व्यवहारवच्चेतनो [1]जानामीत्यस्योपपत्तेः। न चैवमप्यन्तःकरणपुरुषयोर्भेदाग्रहवतां तादृशव्यवहारानुपपत्तिरिति वाच्यम् घटाकारवृत्तेः पुरुषपरिणामत्वाभावेऽपि प्रतिबिम्बसम्बन्धेन पुरुषे सत्त्वात्तथाव्यवहारोपपत्तेः। वृत्तिरूपज्ञानस्य पुरुषे प्रतिबिम्बितत्वादेव पुरुषेण ज्ञानस्य भानोपपत्तिः। न चैवमर्थस्यापि पुरुषेणैव भानसम्भवादन्तःकरणकल्पनं व्यर्थमिति वाच्यम्—पुरुषस्य पुष्करपलाशवन्निर्लिप्तत्वेन [2]स्वतोऽर्थाकारधारित्वायोगेन अर्थाकारधारिण्या ज्ञानस्य वृत्तेः प्रतिबिम्बादेवार्थभानस्य वक्तव्यतयान्तःकरणस्यावश्यकत्वात्। उक्तं च—

"बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते" इति॥

"बुद्ध्यध्यवसितं वृत्तिद्वारा स्वस्मिन्प्रतिबिम्बितमित्यर्थः" इति वदन्ति। तन्न—प्रथमानुमाने हेतुभूतस्याचेतनत्वस्यास्वप्रकाशरूपत्वे [3]साध्यहेत्वोरैक्यप्रसङ्गात्। अर्थाकारसजातीयाकारवत्त्वमचेतनत्वमिति न युक्तं--अमूर्तस्य ज्ञानस्याकाशादेरिवाकारासम्भवात्—आकारस्य मूर्तधर्मत्वात्। आत्मभिन्नत्वमचेतनत्वमित्यपि न—सर्वथा भेदविवक्षायामसिद्धेः। आत्मज्ञानयोर्भेदाभेदाङ्गीकारेणाऽभेदाऽसमानाधिकरणभेदरूपस्य सर्वथा भेदस्य स्याद्वादिनामसिद्धेः। ज्ञानस्यात्मधर्मत्वस्वप्रकाशत्वादिवादिनं प्रत्येवोक्तानुमानस्य वक्तव्यतया हेतोरुभयवादिसिद्धत्वावश्यकत्वेन स्वमतमात्रे तादृशहेतुसिद्धेरप्रयोजकत्वात्। जडपरिणामत्वहेतोरुभया[4]सिद्धत्वाद्वितीयानुमानमपि निरस्तम्। न च ज्ञानस्यात्मपरिणामत्वे आत्मनोऽनित्यत्वापत्तिरिति वाच्यम्—कथंचिदनित्यत्वस्येष्टत्वात्। अयो दहतीतिवच्चेतनो जानातीति व्यवहारो भेदाग्रहादित्ययुक्तं—तत्रायोगोलकस्य वह्न्यनुप्रवेशेनानुष्णाशीत[5]स्पर्शादिपूर्वपर्यायाभास्वररूपपरित्यागेन उष्णस्पर्शभास्वररूपाद्यात्मकपर्यायोत्पत्त्याऽयो दहतीति व्यवहारस्यारोपमन्तरेणैवोपपत्तेः। रूपपरावृत्तिजनकसंयोगस्यैव दाहशब्दार्थतया तस्योष्णस्पर्शाधीनत्वेनायोगोलके उष्णस्पर्शवति सत्त्वोपपत्तेः। न च घटादेः पाकवशेन श्यामाकारपरित्यागेन रक्तपर्यायोत्पत्तौ तस्य घटावस्थानपर्यन्त-

[1] जानाति–क. [2] सतो–क. [3] बाधाद्यहेतोः–ख. [4] असिद्धत्वं–क. [5] स्पर्शं च भास्वररूपादिपूर्वपर्यायपरित्यागेन.

मवस्थानवदयोगोलकेऽप्युष्णस्पर्शाद्यवस्थानापत्तिरिति वाच्यम्—पर्याया-णामौपाधिकानौपाधिकभेदेन भिन्नतया औपाधिकानामुपाध्यपगमानन्तर-मेव नाशस्य स्फटिकलौहित्यादिस्थले दृष्टत्वेन प्रकृतेऽपि तथा निर्वाहात्—वृत्तेरात्मनि प्रतिबिम्बवर्णनमप्ययुक्तं—चाक्षुषयोरेव जलचन्द्राद्योर्बिम्ब-प्रतिबिम्बभावदर्शनेऽप्यचाक्षुषे आत्मन्यचाक्षुषवृत्तेः प्रतिबिम्बस्य गगने वायुप्रतिबिम्बवदसम्भवात्। न चाक्षुषस्यापि शब्दस्य प्रतिध्वनिरूपः प्रतिबिम्बो दृश्यत इति वाच्यम्–तत्र शब्दान्तरोत्पत्तेरेव प्रतिध्वनिपदार्थ-त्वेन प्रतिबिम्बविरहात्। एतेन ज्ञानस्य घटादिविषयकत्वं घटादिप्रति-बिम्बवत्वमेव। दर्पणं मुखविषयकमित्यादौ प्रतिबिम्बस्य विषयताव्यव-हारनियामकत्वदर्शनेन तद्वदेवात्र कल्पयितुं युक्तत्वादिति बौद्धमतम-पास्तं, अचाक्षुषे ज्ञाने प्रतिबिम्बासम्भवात्। निरसिष्यते चैतन्मतमतज्ज्ञ-न्यमपि तत्प्रकाशकं प्रदीपवदिति सूत्रे॥

चार्वाकास्तु—ज्ञानं न स्वव्यवसायात्मकं—भूतपरिणामत्वात् घटा-दिवत्। न चासिद्धो हेतुः—भूतातिरिक्तवस्तुनि प्रमाणाभावेन ज्ञानस्य तत्परिणामत्वासम्भवात्। तथाहि—पृथिव्यापस्तेजोवायुरिति चत्वारि तत्त्वानि। तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवदिति बार्हस्पत्यं सूत्रम्। अयमर्थः—प्रत्यक्षसिद्धत्वाच्चत्वार्येव तत्त्वानि। न तावदाकाशं—रूपादि-शून्यस्य तस्य प्रत्यक्षासम्भवात्। अनुमानस्य चाप्रमाणत्वात्। तानि च शरीरेन्द्रियविषयभेदेन प्रत्येकं त्रिविधानि। तेभ्यश्चैतन्यम्। अत्राभिव्य-ज्यत इति क्रियाध्याहार इति केचित्। उत्पद्यत इत्यध्याहार इत्यन्ये।

नन्वनेकेषां पृथिव्यादीनामेकचैतन्यस्याभिव्यक्तावुत्पत्तौ न हेतुत्वं सम्भवतीत्यत्र दृष्टान्तेन परिहारमाह—किण्वादिभ्य इति। यथा किण्वा-दीनां मद्याङ्गानामनेकेषामेकमदशक्तावभिव्यञ्जकत्वमुत्पादकत्वं वा तद्व-दित्यर्थः। न चैतन्मते जडशरीरस्य कस्यचित्सुखं कस्यचिद्दुःखमिति व्यवस्थानुपपत्तिः—कारणाभावात्। [1] अनादिजीवपदार्थानां च [2] भवा-न्तरार्जितस्य पुण्यस्य सुखं प्रति, पापस्य च दुःखं प्रति, कारणत्वान्निय-मोपपत्तिरिति वाच्यम्—समुद्रगतानां जलबुद्बुदानां नियामकपुण्यादि-विरहितानामपि स्थूलत्वसूक्ष्मत्वादिवैचित्र्यवत्स्वभावादेव शरीरसुख-दुःखादिवैचित्र्योपपत्तेः। न च चैतन्यविलक्षणस्य देहस्य तदुपादा-

---

[1] अनादिजीववादिनां (क). [2] भावान्तरजस्य (ख).

नत्यमयुक्तं—सजातीययोरेवोपादानोपादेयभावनियमादिति वाच्यम्—प्रदीपाद्युपादानकेन कज्जलेन व्यभिचारात्तादृशनियमासिद्धेः । रूपवत्त्वेन तत्र साजात्योपपादने प्रकृतेऽपि सत्त्वादिना साम्यसम्भवात् । न च चेतनाचेतनयोरुपादानोपादेयभावो न दृष्ट इति वाच्यम्—गोमयाद्वृश्चिकोत्पत्तिदर्शनेन तादृशनियमासिद्धेः । न चैवं घटादावपि चैतन्योत्पत्ति स्यादिति वाच्यम्—मदशक्तौ पिष्टोदकगुडधातक्यादीनामेव [1] हेतुत्वात्कायाकारेण परिणतभूतानामेव चैतन्ये हेतुत्वेन घटादौ तदापत्तिविरहात् । न चैवं मृतशरीरेऽपि चैतन्योपलम्भप्रसङ्ग इति वाच्यम्—शरीरे चैतन्यपरिणामं प्रति प्राणसंयोगस्य सहकारिकारणत्वेन तदभावोपपत्तेरित्याहुः । तन्न—भूतपरिणामत्वस्य ज्ञाने उभयवाद्यसिद्धत्वेन हेतुत्वासम्भवात् । अनुमानादीनामपि प्रामाण्यस्य व्यवस्थापयिष्यमाणतया चत्वार्येव तत्त्वानीत्यवधारणस्यायुक्तत्वात् , तत्त्वान्तराणामपि प्रमाणादिना सिद्धेर्वक्ष्यमाणत्वात् । प्रदीपकज्जलयोर्विजातीयत्ववचनमयुक्तं—द्वयोरपि पुद्गलत्वेन साजात्यात् । गोमयवृश्चिकयोरचेतनचेतनयोरुपादानोपादेयत्वाभिधानमनुपपन्नं—गोमयस्याचेतनस्याऽचेतनं वृश्चिकशरीरं प्रत्येवोपादानत्वात् । किञ्चाहं सुखी, अहं दुःखीत्यादिप्रत्यक्षेणैव देहातिरिक्त आत्मा सिध्यति । न च तादृश[2]प्रत्यक्षस्य देहविषयत्वात्तदतिरिक्तात्मविषयत्वमसिद्धं—अहं स्थूलोऽहं कृश इत्यादिप्रत्ययस्य देहविषयत्वदर्शनादिति वाच्यम् [3]अन्धकारावस्थितस्येन्द्रियव्यापारविरामदशायामप्यहं सुखीति प्रत्ययस्य जायमानत्वेन तस्य देहविषयत्वासम्भवात्—स्वव्यवसायात्मकत्वेन किञ्चिद्बाधमिति द्रष्टव्यम् ।

ननु ज्ञानस्य प्रत्यक्षविषयत्वे तस्य प्रमितौ कर्मत्वेन करणत्वासम्भवात् करणभूतं ज्ञानान्तरं कल्पनीयम् । तस्यापि प्रत्यक्षत्वे करणान्तरस्य कल्पनीयतया अनवस्था । तस्याऽप्रत्यक्षत्वे प्रथमज्ञानस्यैवाप्रत्यक्षत्वकल्पनमुचितम् । न चैकस्यैव ज्ञानस्य कर्मत्वकरणत्वयोरङ्गीकारान्नानवस्था, न वा प्रत्यक्षत्वानुपपत्तिरिति वाच्यम्—तयोर्विरुद्धत्वेनैकत्र समावेशायोगादित्याशङ्कां तयोरेकत्र प्रतीतिसिद्धत्वान्न विरोध इत्यभिप्रायेण परिहरति—

---

[1] हेतुत्ववत् (ख). [2] प्रत्ययस्य (ख). [3] अन्धकारावस्थितेन्द्रिय (क).

घटमहमात्मना वेद्मीति ॥ ८ ॥

कर्मवत्कर्तृकरणक्रियाप्रतीतेः ॥ ९ ॥ इति

उक्तप्रतीतौ घटमित्यनेन प्रमेयस्यैवाहमित्यनेन प्रमातुरात्मनेति प्रमाणस्य वेद्मीति प्रतीतेश्च प्रत्यक्षताया अनुभवसिद्धत्वादित्यर्थः । यथात्मनः स्वसंवेदने कर्तृत्वं करणत्वं च भवद्भिरभ्युपगम्यते, एवं ज्ञानस्यापि कर्तृत्वकरणत्वयोरविरोध इति भावः ॥

अत्र भाट्टाः— ज्ञानं न प्रत्यक्षविषयः, कर्मत्वकरणत्वयोर्विरोधात् । किंतु प्राकट्यापरपर्यायज्ञाततयानुमेयम् । ज्ञातता च प्रत्यक्षसिद्धा—घटो ज्ञात इति प्रतीतेः । सा च ज्ञानजन्यावश्याभ्युपगन्तव्या, अन्यथा ज्ञानक्रियाजन्यफलशालित्वाभावेन घटस्य कर्मत्वानुपपत्तेः—कर्मत्वस्य क्रियाजन्यफलशालित्वरूपत्वात् । ग्रामं गच्छतीत्यादौ गमनक्रियाजन्यसंयोगरूपफलशालित्वस्य ग्रामादौ [1]सत्त्ववत् । घटं जानातीत्यादावपि क्रियाजन्यफलस्य वाच्यत्वात् । तादृश[2]ज्ञाततायां ज्ञानं निमित्तकारणं, घटादिकं समवायिकारणम् । असमवायिकारणं तु तैर्न स्वीक्रियते । तादृशज्ञाततारूपकार्येण स्वकारणभूतं ज्ञानमनुमीयते । प्रयोगश्च—घटत्वप्रकारकघटनिष्ठा ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटत्वप्रकारकघटनिष्ठज्ञाततात्वात् ; यन्नैवं तन्नैवमिति व्यतिरेकव्याप्त्या प्रथमं ज्ञानसिद्धिः । तदनन्तरं च घटनिष्ठा ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटत्वप्रकारकघटनिष्ठज्ञाततात्वात् । यत्र यत्प्रकारकयन्निष्ठज्ञाततात्वं तत्र तत्प्रकारकतद्विशेष्यकज्ञानजन्यत्वमिति सामान्यव्याप्तौ पटनिष्ठज्ञातताया दृष्टान्तत्वसम्भवेनान्वयव्याप्त्यैव द्वितीया[3]ऽनुमाने ज्ञानसिद्धिरिति वदन्ति । तन्न—ज्ञातो घट इति [4] प्रत्यक्षज्ञानस्यैव विषयतासम्बन्धेनार्थे भानात्तदतिरिक्तायामर्थधर्मभूतज्ञाततायां मानाभावात् । अन्यथा रूपादिवत्सर्वसाधारण्येन ज्ञाततायाः प्रत्यक्षतापत्तिः । न च विषयतासम्बन्धेन सम्बद्धस्य ज्ञानस्यैव ज्ञाततारूपत्वे ज्ञातो घट इति चाक्षुषप्रत्यक्षानुपपत्तिः रूपादिशून्यस्य ज्ञानस्य चाक्षुषे भानासम्भवादिति वाच्यम्–भवदभ्युपगतज्ञाततायाा अपि रूपादिशून्यत्वेन चाक्षुषानुपपत्तिसाम्यान्मूर्तप्रत्यक्ष एव रूपादेः कारणतया अमूर्तस्य ज्ञानस्य रूपविरहेऽपि चाक्षुषोपपत्तेश्च ।

---

[1] सत्त्वात् (क). [2] ज्ञाततायां च (क). [3] अनुमानेन सिद्धिरिति (क). [4] प्रत्यक्षे (ख).

करणभूतज्ञानक्रियाजन्यं फलभूतज्ञानमज्ञाननिवृत्तिं वादाय घटं जानातीत्यत्र कर्मत्वोपपत्त्या तदर्थं ज्ञाततांकल्पनानपेक्षणादतीतघटं जानाति, भाविघटं जानातीत्यादौ भूतभाविघटयोर्वर्तमानज्ञाततां [1] प्रत्युपादानत्वासम्भवेन तत्र फलभूतज्ञानमादायैव भवद्भिरपि कर्मताया निर्वाह्यत्वात्। तत्र समवायिकारणाभावेन ज्ञाततायाः उत्पत्त्यसम्भवात् । अनुमानोपपादनमपि न युक्तं—ज्ञानस्यात्यन्तपरोक्षत्वे साध्यस्याप्रसिद्धया प्रथमानुमानासम्भवेन तन्मूलकद्वितीयानुमानस्य सुतरामसम्भवात् । किं चोक्तानुमाने घटादिज्ञानजन्यत्वसाधने पुरुषान्तरीयज्ञानजन्यत्वमादायापि साध्योपपत्त्या स्वीयज्ञानानुमित्यनुपपत्तिः । न च घटत्वप्रकारकघटनिष्ठस्वीयज्ञातता स्वीयज्ञानजन्या स्वीयतादृशज्ञाततात्वादित्यनुमानेन स्वीयज्ञानानुमितिसम्भव इति वाच्यम्—आत्मनोऽप्रत्यक्षत्वेन स्वीयज्ञातत्वरूपहेतोः प्रत्यक्षासम्भवात् । आत्मनोऽप्रत्यक्षत्वमङ्गीकृत्य तद्घटितहेतोः प्रत्यक्षत्वोपपादने च प्रत्यक्षविषयभूतात्मभिन्नस्य ज्ञानस्यातीन्द्रियत्वासम्भवात् स्वव्यवसायात्मकत्वं ज्ञानस्य सिद्धमेव। एतेनात्मा न प्रत्यक्षविषयः कर्मत्वेनाप्रतीयमानत्वात् करणज्ञानवदिति प्राभाकरमतं निरस्तम् । प्रत्यक्षविषयत्वेन प्राभाकराभ्युपगतायां फलभूतप्रमितौ व्यभिचारात् । प्रमितिभिन्नत्वनिवेशेऽपि न व्यभिचारवारणं, प्रमितेरपि द्रव्यरूपेण प्रमितिपर्यायभेदवत्वात् । अभेदासमानाधिकरणभेदनिवेशे चासिद्धिः, आत्मन्यपि तादृशभेदाभावादिति । यद्यपीदानींतनप्राभाकरग्रन्थेषु नैयायिकादिग्रन्थेषु आत्मनः प्रत्यक्षत्वमङ्गीकृत्यैव प्राभाकरमतमुपवर्णितम् । तेषां मितिमात्रमेयविषयकप्रत्यक्षसामान्यवादितया तेषां त्रिपुटीप्रत्यक्षवादित्व सिद्धेः। तथापि प्राभाकरप्राचीनमते आत्मनः प्रत्यक्षत्वानङ्गीकारान्मार्ताण्डन्यायमणिदीपिकयोः प्राभाकरमते आत्मप्रत्यक्षत्वानङ्गीकारस्योक्तत्वादस्माभिरपि तदनुसारेण प्राभाकरमतमुपवर्णितमिति ध्येयम्। ननु घटमहमात्मना वेद्मीति प्रतीत्या ज्ञानस्य प्रत्यक्षविषयत्वं सिध्यतीत्युक्तम्। तदयुक्तं—विचारासहत्वात्—घटमहमात्मना वेद्मीति प्रतीतेरित्यस्य कोऽर्थः ? न तावत्तादृशशब्दाभिन्नप्रतीतेरित्यर्थः। शब्दाभेदस्य प्रतीतौ बाधात्। किंतु तादृशशब्दजन्यप्रतीतेरित्यर्थो वाच्यः । स चायुक्तः—शब्दजन्यप्रतीतेः स्वविषयप्रत्यक्षमूलकत्वाभावेन तत्प्रत्यक्षासाधकत्वात् ।

---

[1] प्रत्युपपादनत्वासम्भवेन (क).

स्वविषयप्रत्यक्षमन्तरेणैवाङ्गुल्यग्रे हस्तियूथशतमास्त इति वाक्यप्रयोगदर्शनेन वाक्यजन्यबोधस्य प्रत्यक्षपूर्वकत्वनियमाभावात् । वाक्यप्रयोगे वाक्यार्थज्ञानमात्रस्य परोक्षसाधारणस्य हेतुत्वादित्याशङ्कां निराकरोति—

शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवत् ॥ १० ॥

शब्दानुच्चारणेऽपि शब्दोच्चारणाभावेऽपि स्वस्यानुभवनं स्वविषयकप्रत्यक्षं, शब्दोच्चारणाजन्यमेव स्वविषयकप्रत्यक्षमर्थप्रत्यक्षवत् घटमहमात्मना वेद्मीत्यनेन विवक्षितम् । तथा च घटमहमात्मना वेद्मीति प्रतीतेरित्यनेन तादृशशाब्दबोधं गृहीत्वा तादृशशाब्दबोधेन तन्मूलभूतं प्रत्यक्षमाक्षिप्यत इति न विवक्षितं येन शाब्दबोधस्य प्रत्यक्षपूर्वकत्वनियमो नास्तीति व्यभिचारोद्घाटनं बाधकं भवेत् , किन्तु तादृशप्रत्यक्षमेव। तत्र च घटमहमात्मना वेद्मीत्यनेन तादृशशब्दजन्यशाब्दबोधसमानविषयकत्वमेव विवक्षितम् । अत एव घटवद्भूतलमिति प्रत्यक्षं, पर्वतो वह्निमानित्यनुमितिरित्यादिव्यवहारः शास्त्रकृतां व्यवहार उपपद्यते । अन्यथा प्रत्यक्षानुमानयोः शब्दजन्यत्वाभावेन तादृशव्यवहारो बाधितः स्यादिति भावः । उक्तं च मार्तण्डे—"तच्छब्दोच्चारणं पुनः प्रतिभातप्रमात्रादिस्वरूपप्रदर्शनपरम्[1]" इति। घटमहमात्मना वेद्मीत्यादिशब्दस्य तज्जन्यशाब्दबोधसमानविषयकत्वपरतया प्रत्यक्षे प्रमात्रादिविषयकत्वमस्तीति ज्ञापनाय प्रत्यक्षादिप्रतीतिस्थलेऽपि शब्दोच्चारणमित्यर्थः ।

अत्र नैयायिकाः—चक्षुःसन्निकर्षानन्तरमयं घट इत्यर्थमात्रविषयकं प्रत्यक्षं ज्ञानं जायते। तदनन्तरं च घटमहमात्मना वेद्मीति पूर्वज्ञानविषयकं प्रत्यक्षमनुव्यवसायनामकं जायते । अतो ज्ञानस्य स्वसमानाधिकरणस्वोत्तरप्रत्यक्षविषयत्वमेव, न तु स्वविषयत्वम् । अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वस्पर्शवदर्थान्तरग्राहकस्य ज्ञानस्य स्वग्राहकत्वायोगात् । न हि सुतीक्ष्णोऽपि खड्गः स्वं छिनत्ति, सुशिक्षितोऽपि वा नटबटुः स्वस्कन्धमारोहति । तद्वदेव ज्ञानं न स्वात्मानं गृह्णाति । प्रयोगश्च—ज्ञानं न स्वनिरूपितविषयतावत् प्रमेयत्वाद्धटवदिति । न च स्वनिरूपित-

---

1 प्रतिभाति (ख).

विषयतावत एव नैयायिकमते अप्रसिद्धत्वेन तद्भेदाप्रसिद्ध्या तत्साधनं न सम्भवतीति वाच्यम्—ईश्वरज्ञानस्य तादृशस्य प्रसिद्धेः । न चैवं तत्र व्यभिचारः—स्वविषयकत्वाभावस्य विशेषणत्वात् । न च ज्ञानं स्वविषयं ज्ञानत्वात् ईश्वरज्ञानवदित्यनेनोक्तानुमानस्य सत्प्रतिपक्षतेति वाच्यम्—सर्वविषयकत्वस्य नित्यज्ञानस्य वोपाधित्वात् । न च ज्ञानस्य ज्ञानान्तरवेद्यत्वं—तस्यापि तथेत्यनवस्थापत्तिः, पूर्वज्ञानमुत्तरज्ञानस्य ग्राहकमुत्तरज्ञानं पूर्वस्येत्यङ्गीकारेऽन्योन्याश्रय इति वाच्यम्—अर्थसिद्धये तद्ज्ञानस्य तद्ज्ञानसिद्धयेऽनुव्यवसायस्यापेक्षणेऽपि ज्ञानधाराया अपेक्षाविरहेणानवस्थान्योन्याश्रययोरभावात्प्रत्युत ज्ञानस्य स्वव्यवसायात्मकत्व पक्षे स्वस्य स्वविषयकत्वाङ्गीकारेणात्माश्रयात्तस्माद्ज्ञानं ज्ञानान्तरगम्यं न स्वव्यवसायरूपमिति वदन्ति । तन्न—प्रथमतोऽर्थज्ञानं ततो ज्ञानज्ञानमित्यङ्गीकारे ज्ञानार्थयोर्युगपदनुभवस्य सर्वानुभवसिद्धस्यानुपपत्तेः । प्रथमं ममार्थानुभवः, तदनन्तरं ज्ञानानुभव इति प्रतीत्यापत्तेश्च । न च दलानां क्रमेण च्छेदनोत्पत्तावपि नैरन्तर्याच्छेदनैक्यभ्रमवदत्रापि ज्ञानैक्य भ्रम इति वाच्यम्—तत्र प्रत्येकदलदर्शनानन्तरं नैकं छेदनमिति बाधज्ञानेन भ्रमत्वसिद्धावपि ज्ञानं नैकमिति बाधज्ञानाभावेन ज्ञानैक्यानुभवस्य भ्रमत्वकल्पनायोगात् । अन्यथा सोऽयं घट इत्यैक्यप्रत्यभिज्ञाया भ्रमत्वं कल्पयित्वा क्षणिकत्वकल्पनस्य दुर्वारतापत्तेः । अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्येत्यादिकमपि न युक्तं, ईश्वरज्ञानस्य स्वविषयकत्वानुपपत्तेः ।

अनुमानमपि न युक्तं—सर्वे शाब्दबोधाः शब्दजन्या इति वाक्यजन्यबोधस्य शाब्दबोधसामान्यविषयकत्वेन स्वविषयकतया तत्र सर्वविषयकत्वाभावे सति प्रमेयत्वस्य सत्त्वेन व्यभिचारस्य दुर्वारत्वात् । [1] प्रतिपक्षानुमाने उपाध्युद्भावनमपि न युक्तं—उक्तशाब्दबोधे स्वविषयकत्वसत्त्वेन तत्र सर्वविषयकत्वसत्त्वेन तत्र सर्वविषयकत्वनित्यज्ञानत्वयोरभावेन उपाधेस्साध्यव्यापकता [2] भावात् अनवस्थावारणमपि न सत् । तृतीयज्ञानाकल्पने द्वितीयज्ञानासिद्ध्या तदसिद्धौ प्रथमज्ञाना[3]सिद्ध्याऽर्थाऽसिद्धेर्दुष्परिहारत्वात् । स्वस्य स्वविषयत्वे आत्माश्रयकथनमप्ययुक्तं, भवतामपीश्वरज्ञाने उक्तशाब्दबोधे च तस्य दुर्वारत्वात् । एतावता

---

1 सत्प्रतिपक्षानुमाने (क). 2 भङ्गात् (क). 3 अर्थसिद्धेः (क).

प्रत्यक्षेण ज्ञानस्य स्वव्यवसायात्मकत्वं प्रसाध्यानुमानेन तत्साधनं सूचयन्नुपसंहरति—

को वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥ ११ ॥

को वा लौकिकः परीक्षको वा तेन ज्ञानेन प्रतिभासितुं शीलं यस्य स तथोक्तस्तं प्रत्यक्षं प्रत्यक्षविषयमिच्छन् विषयिधर्मस्य विषये उपचारात् तदेव ज्ञानमेव तथा प्रत्यक्षत्वेन नेच्छेत् अपित्विच्छेदेव। अन्यथा अप्रामाणिकत्वप्रसङ्गादित्यर्थः। अत्रोदाहरणमाह—

प्रदीपवत् ॥ १२ ॥

इदमत्रानुमानमभिप्रेतं—ज्ञानं स्वभिन्नस्वसजातीयप्रयोज्यप्रत्यक्षताकं स्वसम्बन्धादर्थे प्रत्यक्षताहेतुत्वात्प्रदीपप्रभावत्। अत्र साजात्यं ज्ञानत्वप्रभात्वान्यतररूपेण ग्राह्यं, स्वसम्बन्धात् घटादौ प्रत्यक्षताहेतुभूतायाः प्रदीपप्रभायाः स्वप्रत्यक्षतायां प्रभान्तरानपेक्षत्वात्, स्वसम्बन्धाद्घटादौ प्रत्यक्षताहेतुभूतस्य ज्ञानस्य स्वप्रत्यक्षतायां ज्ञानान्तरानपेक्षत्वस्य युक्तत्वात्; यस्य स्वसम्बन्धादर्थान्तरे प्रत्यक्षताहेतुत्वं तस्य स्वसजातीयानपेक्षप्रत्यक्षताकत्वमिति व्याप्तिसिद्धेः। अथवा स्वसम्बन्धादर्थान्तरे यद्धर्महेतुत्वं यस्य तस्य स्वसजातीयानपेक्षतद्धर्मवत्त्वमिति सामान्यव्याप्तिरभिमता। शिलातलादौ स्वसम्बन्धाच्छैत्यहेतोर्जलस्य स्वसजातीयजलान्तरानपेक्षशैत्यवत्वस्य स्वसम्बन्धात्स्वाधिकरणपात्रादावुष्णत्वहेतोः प्रदीपस्य स्वसजातीयप्रदीपान्तरानपेक्षोष्णत्ववत्वस्य च दर्शनात्, को वा तत्प्रतिभासिनमिति सूत्रशैल्या उक्तविशेषव्याप्तिरिव सामान्यव्याप्तिरपि सूच्यते। जलसम्बन्धिशिलातलं शीतमिच्छन् जलं तथा नेच्छेदित्याद्यर्थस्यापि सारूप्येण बोधनात्। "एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते" इत्यादावितरजनानाश्रितस्य राजकीयस्य पुरुषविशेषस्य सारूप्येण प्रतीतेरालङ्कारिकैरङ्गीकारात्। प्रदीपवदिति सूत्रे प्रथमव्याप्तिपक्षे प्रत्यक्षताहेतुत्वमादाय, द्वितीयपक्षे उष्णताहेतुत्वमादाय, दीपस्य दृष्टान्ततापरमिति बोध्यं। ननु प्रदीपवदिति सूत्रे प्रदीपस्यार्थप्रत्यक्षहेतुत्वाभिधानमयुक्तं। "नार्थालोकौ कारणम्" इति सूत्रे आलोकस्य प्रत्यक्षहेतुताया निराकरिष्यमाणत्वेन पूर्वोत्तरसूत्रयोर्विरोधापत्तेरिति

चन्न-प्रदीपवदिति सूत्रे दीपस्य तमोरूपावरणापनयनद्वारा हेतुत्वस्य विवक्षितत्वात्। नार्थालोकाविति सूत्रे नैयायिकमत इव साक्षाद्धेतुत्वं नास्तीत्यभिप्रायेणा[1]ऽविरोधात्। लघुवृत्तिकृतस्तु ज्ञानं स्वावभासने स्वातिरिक्तसजातीयार्थान्तरानपेक्षं प्रत्यक्षार्थगुणत्वे सत्यदृष्टानुयायिकरणत्वात्प्रदीपभासुराकारवदित्यनुमानमत्राभिप्रेतमिति वदन्ति। तेषां प्रदीपवदिति सूत्रेणैवोक्तानुमानं सूच्यत इत्याशयः। पूर्वसूत्रेण तदुक्तहेतोरसूचनात्। अत्र साध्ये घटज्ञानस्य घटावभासने स्वातिरिक्तसजातीयानपेक्षत्वस्य सत्त्वात् सिद्धसाधनमिति। तद्वारणाय स्वावभासन इति। स्वावभासने स्वातिरिक्तेन्द्रियाद्यपेक्षत्वाद्बाध इति तद्वारणाय सजातीयेति। इन्द्रियस्य ज्ञानत्वेन सजातीयत्वाभावान्न दोषः, स्वावभासने स्वातिरिक्तं द्रव्यत्वेन सजातीयम्। यच्चक्षुरादितदपेक्षे परशौ छिदाकरणे व्यभिचारवारणाय हेतौ सत्यन्तम्। स्वावभासने गुणत्वेन सजातीयं यच्छ्रावणप्रत्यक्षं तदपेक्षे शाब्दबोधकरणे घटमानयेत्यादिशब्दे व्यभिचारवारणाय सत्यन्ते प्रत्यक्षार्थेति। शब्दस्य गुणत्वेप्याकाशस्य प्रत्यक्षविषयत्वाभावान्न दोषः। प्रत्यक्षपदेनास्मदादिप्रत्यक्षमेव ग्राह्यम्। तेनाकाशस्येश्वरप्रत्यक्षविषयत्वेऽपि न क्षतिः। मानसप्रत्यक्षविषयीभूतात्मगुणयोः सुखदुःखकरणयोर्व्यभिचारः। देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तभोगहेतुत्वात्, देवदत्तप्रयत्नजन्यवस्तुवदित्याद्यनुमानस्य गुणत्वेन स्वसजातीयस्य स्वावभासने अपेक्षणादतस्तद्वारणायादृष्टानुयायीत्यदृष्टस्य तत्सहकृतत्वाभावान्न दोष इति ध्येयम्। प्रमाणस्य स्वापूर्वार्थव्यवसायात्मकत्वमुक्तं लक्षणं समर्थितं, ततस्तादृशं प्रामाण्यं स्वतः परतो वेति विचारे प्रामाण्यं स्वतः अप्रामाण्यं तु परत इति मीमांसकाः। अप्रामाण्यं स्वतः प्रामाण्यं तु परत इति सौगताः। उभयं स्वत इति साङ्ख्याः। उभयं परत इति नैयायिकाः। अत उक्तैकान्तवादनिरासायोभयमपि कथंचित्स्वतः कथंचित्परत इति स्याद्वादिसिद्धान्तं निरूपयितुमाह—

तत्प्रामाण्यं स्वतः परतश्च ॥ १२ ॥ इति ॥

अत्राभ्यासदशायामनभ्यासदशायामिति पदद्वयमध्याहर्तव्यम्। अयमर्थः—तस्य प्रामाण्यं तत्प्रामाण्यम्। तच्छब्देन स्वापूर्वेत्यादिलक्षण

---

[1] विरोधात् (ख).

लक्षितं प्रमाणं परामृश्यते । उक्तप्रमाणगतं प्रामाण्यमभ्यासदशायां स्वतः, अनभ्यासदशायां परत इति । अभ्यासदशायामिवानभ्यासदशायामपि प्रामाण्यस्य स्वतो ग्रहणाङ्गीकारे अनभ्यस्तमरुप्रदेशजलज्ञाने जाते ममोत्पन्नं जलज्ञानं प्रमा वा न वेति संशयो न स्यात्, प्रामाण्यस्य निश्चितत्वात्। अभ्यासदशायामपि प्रामाण्यस्य ज्ञानान्तरेणैव ग्रहणे तद्ज्ञान प्रामाण्यं ज्ञानान्तरेण, ज्ञानान्तरप्रामाण्यमपि ज्ञानान्तरेणेत्यनवस्थापत्तिः। स्याद्वादिमते च नानवस्था । अनभ्यासदशायां प्रथमज्ञानप्रामाण्यस्य ज्ञानान्तरेण ग्रहणेऽपि द्वितीयादिज्ञानेषु कस्य[1]चिदभ्यासदशापन्नस्य सम्भवेन तद्गतप्रामाण्यस्य स्वतो ग्रहणाङ्गीकारात् ।

अत्र मीमांसकाः—प्रामाण्यं स्वत एव गृह्यत इति वदन्ति । प्रामाण्यस्य स्वतो ग्राह्यत्वं च यावद्ज्ञानग्राहकग्राह्यत्वं। यथा घटग्राहकेण ज्ञानेन घटत्वमपि गृह्यते, तद्वद्ज्ञानग्राहकेण ज्ञानेन ज्ञानगतं प्रमाणत्वमपि गृह्यते । अत्र नैयायिकमतेऽपि ममोत्पन्नं ज्ञानं प्रमाणं सफलप्रवृत्तिजनकत्वादित्यनुमानेन ज्ञानग्राहकेण तद्गतप्रामाण्यस्य ग्रहात् । स्वतस्त्ववारणाय ज्ञानग्राहकेषु यावत्वमुपात्तम् । तन्मते ज्ञानग्राहकेणानुव्यवसायादिना [2]तद्ग्रहणान्न तदापत्तिः । न चेदं ज्ञानं [3]प्रमेति ज्ञानस्यापि यावद्ज्ञान ग्राहकान्तर्गतत्वात् प्रामाण्ये तद्ग्राह्यत्वाभावात् यावद्ज्ञानग्राहकग्राह्यत्वं न सम्भवतीति वाच्यम्—[4]अप्रामाण्यग्राह्यत्वस्यापि ग्राहके विशेषणात् निरुक्तं स्वतो ग्राह्यत्वं भाट्टप्राभाकरमुरारिमिश्रभेदेन त्रिविधानामपि मीमांसकानामनुमतम् । तत्र भाट्टमते—ज्ञानग्राहकं ज्ञाततालिङ्गमनुमानं ज्ञानस्यातीन्द्रियत्वाभ्युपगमात् । तेन तद्गतप्रामाण्यमपि गृह्यते । प्राभाकरमते—ज्ञानं मितिमात्रमेयविषयकम् । घटमहं जानामीत्यनुभूयमानत्वात्त्रिपुटीप्रत्यक्षवादाङ्गीकारात्। त्रयाणां पुटानां समाहारस्त्रिपुटी। मितिमात्रमेया इति यावत् तत्प्रत्यक्षेत्यर्थात् । अतो ज्ञानस्य [5]स्वयं प्रकाशत्वाद् ज्ञानग्राहकं स्वमेव । तेन स्वगतं प्रामाण्यमपि गृह्यत इति । मुरारिमिश्रमते—प्रथमतोऽयं घट इत्यर्थव्यवसायात्मकं ज्ञानम् । ततो घटमहं जानामीति ज्ञानव्यवसायात्मकमनुव्यवसायनामकं ज्ञानमङ्गीक्रियते ।अतो ज्ञानग्राहकेणानुव्यवसायेन तद्गतं प्रमात्वमपि गृह्यते। तथा च यावद्ज्ञान

---

[1] अज्ञानदशापन्नस्य (क). [2] तदग्रहात् (ख). [3] अप्रमा (ख). [4] अप्रामाण्याग्राहकत्वस्यापि (ख). [5] स्वं (क).

ग्राहकसामग्रीग्राह्यत्वरूपं प्रामाण्यस्य स्वतस्त्वमुपपन्नमिति । तत्र भाट्ट-मतमयुक्तं—ज्ञाततायास्तल्लिङ्गकानुमानस्य च पूर्वमेव [1] निरस्तत्वात् । किञ्च ज्ञातताजन्यतासम्बन्धेन ज्ञानवती ज्ञातत्वादित्यनुमानेन प्रमात्व-विशिष्टज्ञानस्यानुमितिसम्भवः । यद्धर्मावच्छिन्नस्य साध्यता तद्धर्माव-च्छिन्नस्यैवानुमितौ भानात्, अन्यथा [2] वह्निसाध्यकस्थलेऽपि महानसी-यवह्निमानित्यनुमित्यापत्तेः । न च ज्ञातताजन्यतासम्बन्धेन प्रमावति [3] ज्ञातत्वादिप्रमात्वावच्छिन्नसाध्यकानुमानमेवास्तामिति वाच्यम्—ज्ञातता-त्वस्य भ्रमजन्यज्ञाततायामपि सत्त्वात्तत्र प्रमाजन्यत्वाभावेन व्यभिचारा-पत्तेः । न च ज्ञाततावत्प्रमितताया अपि स्वीकारात्प्रमिततात्वहेतुकं प्रमात्वावच्छिन्नसाध्यकमनुमानमस्त्विति वाच्यम्—तथा सत्यप्रमिततामपि स्वीकृत्याप्रामाण्यस्यापि स्वतो ग्राह्यतापत्तिरिति । एवं प्राभाकरमतमपि न युक्तम् । रूपादिशून्यस्यात्मनश्चाक्षुषे भानासम्भवेन घटमहं जानामीति चाक्षुषप्रत्यक्षानुपपत्तेः । न च स्याद्वादिनामप्यनुपपत्तिरियं समाना, मूर्त-प्रत्यक्ष एव रूपस्य कारणत्वे चास्माकमपि तथेति वाच्यम्—अमूर्तप्रत्यक्षे नियामकाभावे कालाकाशादीनामपि चाक्षुषापत्तिः । स्याद्वादिनाममूर्त-चाक्षुषे स्वाभिन्नत्वस्य नियामकतयात्मनश्चाक्षुषाभिन्नत्वात् प्रत्यक्षोपपत्तिः भवन्मते च चाक्षुषात्मनोर्भेदाङ्गीकारेणोक्तनियामकानुपपत्तेः । स्वाधि-करणत्वस्य नियामकत्वे च स्वस्य प्रत्यक्षानुपपत्तिः । क्वचित्स्वाभिन्नत्वं क्वचित्स्वाधिकरणत्वं नियामकमित्यङ्गीकारे च गौरवम् । मुरारिमिश्रमत-मपि न युक्तं—पूर्वज्ञानस्यात्मतत्त्वज्ञानविषयकत्वं नास्ति, द्वितीयस्यास्ती त्यत्र नियामकाभावात् । न च पूर्वज्ञानस्य चाक्षुषत्वादात्मतद्गुणयोर्न तद्विषयत्वमुत्तरस्य च मानसत्वात्तयोस्तद्विषयत्वं सम्भवति, मनस्संयोग-स्यात्ममनस्संयुक्तसमवायस्य च तद्गुणे सत्त्वादिति वाच्यम्—नित्यनिरंश-मनसोऽप्रामाणिकतया वक्ष्यमाणत्वात् । प्रामाणिकत्वेऽपि निरंशयोरात्म-मनसोरेकदेशेन सर्वात्मना वा संयोगासंभवात् । आत्मनां भवन्मते विभु-त्वेन एकैकपुरुषमनस्संयोगस्य सर्वात्मसु सत्त्वेन एकपुरुषीयमनसा सर्वा-त्मनां तद्गुणानां च प्रत्यक्षप्रसङ्गात् । किंच—त्रिष्वपि मीमांसकमतेषु अनभ्यासदशायां ममोत्पन्नं जलज्ञानं प्रमा वा न वेति संशयानुपपत्तिः । न चेयमनुपपत्तिः प्राभाकरमत एव—तन्मते ज्ञानस्य स्वसंवेदनरूपत्वेन

---

[1] निरुक्तत्वात् (ख). [2] वह्निसाधकस्थले (ख). [3] ज्ञातत्वादिति (ख).

ज्ञानोत्पत्तौ तद्ग्रहस्य नियतत्वात्, भाट्टमिश्रमतयोस्तु नानुपपत्तिः, यत्र संशयस्तत्र पूर्वं ज्ञानस्यैव [1]ग्रहाकल्पनात् तद्धर्मस्यापि ग्रहणाभावेन संशयोपपत्तेरिति वाच्यम्-तत्स्थले पूर्वं ज्ञानस्य ग्रहणाभावेऽपि संशयानुपपत्तेर्दुर्वारत्वात्, संशये धर्मिज्ञानस्य कारणत्वात्। अन्यथा सन्निकृष्टेऽपि स्थाणौ संशयोपपत्तेः। न च धर्मीन्द्रियसन्निकर्षस्य संशयहेतुतयैव निर्वाहे मध्ये धर्मिज्ञानकल्पनं, संशयं प्रति तद्धेतुत्वकल्पनं चायुक्तमिति वाच्यम्—तुरगादौ वेगेन गच्छत अनेकवृक्षेष्विन्द्रियसन्निकर्षेऽपि यत्रैव [2]धर्मिज्ञानं तत्रैव पीनत्वादि संशयो नान्यत्रेति नियमनिर्वाहाय संशये धर्मिज्ञानस्य हेतुताया आवश्यकत्वात्। तथा च जलज्ञानं प्रमा न वेति संशयस्थले जलज्ञानं गृहीतं चेत्तन प्रामाण्यमपि गृहीतमिति तत्संशयानुपपत्तिः। तादृशज्ञानमगृहीतं चेद्धर्मिज्ञानाभावात्संशयानुपपत्तिरित्युभयथापि संशयानुपपत्तेः। अनभ्यासदशायां प्रामाण्यस्य स्वतो ग्राह्यत्वकल्पनमयुक्तमेव। नैयायिकास्त्वभ्यासदशायामपि प्रामाण्यं परत एव गृह्यते, परं चानुमानं, तच्च—ममोत्पन्नं जलज्ञानं प्रमासमर्थं—प्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथा मरीचिकायां जलज्ञानं, तथेदं ज्ञानं प्रमा, करादिमति पुरुषत्वप्रकारकत्वात्, यन्नैवं तन्नैवं—यथा स्थाणौ पुरुषज्ञानमिति केवलव्यतिरेक्यनुमानेनैव प्रथमतः प्रमात्वं सिध्यति, तदनन्तरं च गृहीतप्रामाण्यपूर्वकज्ञानदृष्टान्तेनाऽन्वयव्यतिरेकेणापि सिध्यतीति वदन्ति। तन्न—जलत्ववति जलत्वप्रकारकत्वरूपस्य पुरुषत्ववति पुरुषत्वप्रकारकत्वरूपस्य वा प्रमात्वस्यानुमितेः पूर्वमप्रसिद्धत्वेन तादृशसाध्यघटितव्याप्तिज्ञानासम्भवेन प्रमात्वविधेयतानुमित्यसम्भवात्। न चेदं जलमिति ज्ञानानन्तरं जलमहं जानामीत्यनुव्यवसायो जायते, तादृशानुव्यवसायेन जलज्ञानगतं जलत्ववति जलत्वप्रकारकत्वरूपं प्रामाण्यं गृह्यत इति न [3]साध्याप्रसिद्धिरिति वाच्यम्—अनुव्यवसायस्य भवन्मते मानसप्रत्यक्षरूपतया तस्यात्मतद्गुणाति[4]रिक्तग्राहकत्वेन जलादिग्राहकत्वासम्भवेन [5]तद्धटितप्रामाण्यग्रहणायोगात्। अथ मानसज्ञानेऽपि पूर्वगृहीतानां घटजलादीनां भानं सम्भवति, ज्ञानरूपप्रत्यासत्त्योपस्थितानां बहिरर्थानामपि मानसे भानसम्भवात्। सुरभिश्चन्दनखण्ड इति

---

[1] ग्रहकल्पनात् (ख). [2] धर्मज्ञानं (क). [3] साध्यप्रसिद्धिः (क). [4] अतिरिक्ताग्राहकत्वेन (क). [5] तदघटित (ख).

चाक्षुषप्रत्यक्षे सौरभस्याप्युपस्थितस्य भानदर्शने प्रत्यभिज्ञायां पूर्वगृहीत-तत्ताया भानदर्शनेन पूर्वगृहीतस्थले स्वयोग्यस्यैव ग्राहकमिन्द्रियमिति नियमाभावादिति चेन्न—भवन्मते विशिष्टबुद्धौ विशेषणज्ञानस्य कारण-तया जलत्ववद्विशेष्यकत्वस्य पूर्वज्ञानाभावेन तद्घटितप्रामाण्यस्यानुव्यव-साये भानासम्भवात्। न चानुव्यवसायेन जलत्ववान्व्यवसायांशे विशेष्यतासम्बन्धेन गृह्यते, जलत्वं च प्रकारतासम्बन्धेन गृह्यते, तथा च विशेष्यत्वप्रकारत्वयोः संसर्गत्वात्पूर्वं न तद्ज्ञानापेक्षा तत्प्रकारकबुद्धौ तद्ज्ञानस्य हेतुताविरहादिति वाच्यम्—तद्वद्विशेष्यकत्वे सति तत्प्रकार-कत्वस्य प्रामाण्यरूपत्वे रङ्गरजतयोरिमे रजतरङ्ग इति ज्ञानस्यापि प्रमाण-त्वापत्तिरिति तद्वारणाय तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्व-पर्यन्तस्य प्रामाण्यरूपताया वाच्यतया तादृशप्रामाण्ये विशेष्यत्वप्रकार-त्वयोः प्रकारतयैव घटकत्वेन पूर्वं विशेष्यत्वादिज्ञानाभावेनानुव्यवसायेन तादृशप्रामाण्यग्रहणासम्भवात्। न च प्रथमानुव्यवसाये विशेष्यत्व-प्रकारत्वादीनामुपस्थितत्वात् द्वितीयानुव्यवसायेन प्रामाण्यग्रहणं सम्भव-तीति वाच्यम्—इदं जलमिति ज्ञानानन्तरं ज्ञानत्वज्ञानाभावेन जलमहं जानामीत्यनुव्यवसायस्योत्पत्त्यसम्भवेन व्यवसायानन्तरं ज्ञानत्वनिर्विकल्प कस्य स्वीकरणीयतया ततः प्रथमानुव्यवसायस्य ततो द्वितीयानुव्यवसा-यस्य च कल्पने द्वितीयानुव्यवसायकाले जलज्ञानस्यानवस्थानेन तद्गत-प्रामाण्यग्रहणासम्भवात्। न च प्रथमं जलज्ञानं, ततो ज्ञानत्वनिर्विकल्पकं, ततश्च प्रथमानुव्यवसायः; पुनर्जलज्ञानं, ततो द्वितीयानुव्यवसाय इति कल्पनान्नानुपपत्तिरिति वाच्यम्-मनस्तत्संयोगयोर्निरस्तत्वेनात्मान्तर साधारण्येनातिप्रसक्तत्वेन च तस्यात्मतद्गुणमानसे हेतुत्वकल्पनस्यानु-चितत्वात्। अनुव्यवसायेन [1] प्रामाण्यग्रहस्याभ्यासदशायामेव वक्तव्यतया तत्रानुमानेन प्रामाण्यसाधनस्य विफलत्वेनाभ्यासदशायां स्वतः प्रामाण्यं गृह्यत इति स्याद्वादिमत एव पर्यवसानाच्च। किं च प्रामाण्यस्य परत एव ग्रहणमित्यङ्गीकारेऽनवस्था दुर्वारा। न च त्रि-चतुरादिज्ञानानन्तरमपेक्षाविरहात्परतः प्रामाण्यवादिनामपि नानवस्थेति वाच्यम्-चरमज्ञानस्य प्रामाण्यप्रतिपत्त्यभावे द्विचरमज्ञानप्रामाण्यप्रतिपत्त्य भावः। तदभावे त्रिचरमज्ञानप्रामाण्यप्रतिपत्त्यभाव इत्येवं क्रमेण प्रथम-

---

[1] प्रामाण्यग्रहे (क).

ज्ञानस्यापि प्रामाण्यप्रतिपत्त्यभावप्रसङ्गात्। तस्मात्प्रामाण्यस्य परतस्त्वैकान्तो न युक्तः। अप्रामाण्यमप्यभ्यासदशायां स्वतो गृह्यते। पित्तज्वरविशिष्टस्य पुंसः कस्यचिन्निपीते मधुरेऽमाधुर्यग्राहकं ज्ञानमप्रमाणं सदेवानुभूयत इत्यप्रामाण्यस्यापि परतो ग्राह्यत्वैकान्तो न साधीयान्। एवं प्रामाण्यमुत्पत्तौ परत एव—ज्ञानसामान्यकारणातिरिक्तचक्षुर्नैर्मल्यादिकारणजन्यं प्रामाण्यमित्यर्थः। विजातीयकार्यस्य विजातीयकारणजन्यत्वावश्यकत्वात् । घटसामान्यकारणातिरिक्तकपालगत[1]नैल्यादिकारणजन्यत्वस्य नीलघटे सत्त्वात्तत्प्रामाण्यमिति सूत्रे उत्पत्तौ स्वकार्ये चेति पदाध्याहारेण प्रामाण्यमुत्पत्तौ परतस्स्वकार्येऽनभ्यासदशापेक्षया परतः, अभ्यासदशापेक्षया स्वत इति व्याख्यानांतरस्याभिप्रेतत्वात् ।

अत्र मीमांसकाः—प्रामाण्यं स्वत एवोत्पद्यते—ज्ञानसामान्यकारणातिरिक्तकारणजन्यत्वं प्रामाण्यस्योत्पत्तौ स्वतस्त्वं। न च चक्षुषो ज्ञानसामान्यकारणत्वाभावात्तज्जन्ये प्रामाण्ये स्वतस्त्वानुपपत्तिरिति वाच्यम्—भ्रमाजनक[2]कारणजन्यत्वस्य स्वतस्त्वरूपतया दोषाभावात् । न चेन्द्रियगतनैर्मल्यस्य प्रत्यक्षप्रमात्वे हेतुगताव्यभिचरितत्वस्यानुमितिगतप्रमात्वे आप्तोक्तत्वस्य शाब्दबोधगतप्रमात्वे हेतुत्वाद्भ्रमाजनकजन्यत्वरूपं परतस्त्वमेव प्रामाण्यस्यासङ्गतमिति वाच्यम्—यत इन्द्रियगतनैर्मल्यादीनां न प्रामाण्यं प्रति हेतुत्वं, ज्ञाने प्रामाण्यस्य स्वाभाविकत्वात्, किंतु ज्ञानगतप्रामाण्यं विरोधि । तत्प्रयोजकाश्चेन्द्रियदोषहेतुगतव्यभिचारशब्दगतानाप्तोक्तत्वादयः। तत्प्रयोजकत्वमेव नैर्मल्यादीनां। यथा—स्वभावसिद्धे कूपान्तर्गतजले गगनादौ न कूपखननस्य हेतुत्वं, किंतु जलादिप्रसरणविरोध्यावरणनिरासकत्वमेव। तद्वत्—अप्रामाण्यं तु परत एवोत्पद्यते, ज्ञानकारणातिरिक्तदोषजन्यत्वादित्याहुः। तन्न—अन्वयव्यतिरेकाभ्यामाप्तोक्तत्वस्य शाब्दप्रामाण्यं प्रति हेतुताया अनुभवसिद्धत्वेन प्रामाण्ये परतस्त्वस्य दुरपन्हवत्वात्। तन्न्यायेन प्रत्यक्षादावपि तथात्वकल्पनस्य युक्तत्वात्। न च तत्र गुणानां प्रामाण्यविरोध्यप्रामाण्यप्रयोजकदोषाभावसम्पादकत्वमेव, न तु प्रामाण्यहेतुत्वमिति वाच्यम्। तथा सत्यप्रामाण्यस्यापि स्वतस्त्वापत्तेः। दोषाणां नाप्रामाण्यहेतुत्वं, किंत्व-

---

[1] नैर्मल्यादि (ख). [2] कारणाजन्यत्वस्य (ख).

प्रामाण्यविरोधिप्रामाण्यहेतुगुणाभावसम्पादकत्वमेवेत्यस्य वक्तुं शक्यत्वात्। पित्तादिदोषसत्त्वे भ्रमसत्त्वं, तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां भ्रमे दोषस्य हेतुत्वे च आप्तोक्तत्वादावप्यन्वयव्यतिरेकाभ्यांप्रमाहेतुत्वमङ्गीकार्यमिति प्रामाण्यस्योत्पत्तौ परतस्त्वमावश्यकमिति सङ्क्षेपः॥

माणिक्यनन्दिगुरुणा करुणाकरेण
सूत्राणि यानि रचितानि मितेस्स्वरूपे।
तेषां मदीयवचसा विशदीकृतानां
माधुर्यपूरलहरीं विबुधाः पिबन्तु॥

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेळुगुळपुरनिवासरसिकस्वामिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां प्रमाणस्वरूपपरिच्छेदः प्रथमः

---

## अथ द्वितीयः परिच्छेदः

---

अथ प्रमाणसामान्यलक्षणपूर्वकस्वरूपनिरूपणेन स्वरूपविप्रतिपत्तिं निरस्य सकलप्रमाणसंग्राहकसङ्ख्याप्रतिपादनेन सङ्ख्याविप्रतिपत्तिं निरस्यन् प्रमाणविशेषलक्षणं व्युत्पादयितुमुपक्रमते—

**तद्द्वेधा ॥ १ ॥**

**प्रत्यक्षपरोक्षभेदात् ॥ २ ॥**

तच्छब्देन प्रमाणं परामृश्यते। प्रत्यक्षपरोक्षशब्दौ प्रत्यक्षत्वपरोक्षत्वपरौ। भेदशब्दो व्याप्यधर्मपरः। अभेदः पञ्चम्यर्थो धात्वर्थे प्रकारेऽन्वेति। तथा च प्रत्यक्षत्वपरोक्षत्वरूपप्रमाणत्वव्याप्यधर्मभिन्नप्रकारद्वयवत्प्रमाणमित्यर्थः। न च प्रत्यक्षानुमानागमभेदेन त्रैविध्यस्य रामानुजीयैरुपमानमन्तर्भाव्य, चातुर्विध्यस्य नैयायिकैरर्थापत्तिमन्तर्भाव्य, पाञ्चविध्यस्य प्राभाकरैरनुपलब्धिमन्तर्भाव्य, षाड्विध्यस्याद्वैतिभिस्सम्भवैतिह्यावन्तर्भाव्य, अष्टविधत्वस्य पौराणिकैरङ्गीकारात् द्वित्वसङ्ख्यायाः कथं सकलप्रमाणसङ्ग्राहकत्वमिति वाच्यम्—अनुमानागमादीनां परोक्षेऽन्तर्गतत्वेन द्वित्वसङ्ख्याया विरोधविरहात्। न च लाघवात्प्रत्यक्षमेकमेव प्रमाणं, तत्रैव सर्वप्रमाणानामन्तर्भावसम्भवादित्यङ्गीकारो युक्त इति वाच्यम्-प्रत्यक्षत्वस्यानुमानसाधारण्याभावेन तत्रानुमानादीनामन्तर्भावासम्भवेन द्वैविध्यकथनस्य युक्तत्वात्।

अत्र चार्वाकाः—प्रत्यक्षातिरिक्तप्रमाणस्याभावाद्द्वैविध्यकथनमयुक्तं —अनुमित्यात्मकप्रमितेरेवाभावेन तत्करणस्य प्रमाणत्वासम्भवात्। न च वह्न्यर्थिनः पुरुषस्य धूमदर्शनेन पर्वतविशेष्यक वह्निप्रकारकप्रवृत्तिदर्शनात् तस्य पर्वतविशेष्यकवह्निज्ञानं जातमिति कल्पनीयम्—तद्विशेष्यकतत्प्रकारकप्रवृत्तौ तद्विशेष्यकतत्प्रकारकज्ञानस्य हेतुत्वात्, तच्च ज्ञानमनुमितिरूपमिति तत्करणतयानुमानस्य प्रामाण्यमावश्यकमिति वाच्यम्--तत्र धूमज्ञानेन वह्निसंशयोत्पत्त्या तादृशसंशयादेव वह्न्यर्थिनः प्रवृत्त्युपपत्तेः। स्थाणुत्वतदभावसहचरितोच्चैस्त्वज्ञानादयं स्थाणुर्न वेति संशय-

वत् वह्नितदभावसहचरितधूमज्ञानात्पर्वते वह्निसंशयसम्भवात् । तत्संशये तत्तदभावसमानाधिकरणधर्मवत्ता ज्ञानस्य हेतुत्वात् । धूमे महानसादौ वह्निसामानाधिकरण्यस्य गोपालघटिकाशक्रमूर्धादौ वह्न्यभावसामानाधिकरण्यस्य ग्रहात् । [1]तथा चोक्तसंशयस्य प्रमात्वाभावान्न तत्करणस्य प्रामाण्यं । न च संशयात्सकम्पप्रवृत्तिसम्भवेऽपि निष्कम्पप्रवृत्तेरसम्भवाद्वह्न्यर्थिनो निष्कम्पप्रवृत्तिनिर्वाहाय पर्वते वह्निनिश्चय आवश्यक इति वाच्यम्--अनुमितिकारणत्वेनाभिमतस्य हेतौ साध्याविनाभावनिश्चयस्यासम्भवेनानुमितेरसम्भवात् । विवादापन्नं सर्वमामलकं कषायरसोपेतमामलकत्वात्, परिदृष्टामलकवदिति स्वभावलिङ्गस्य कालान्तरदेशान्तरजातामलकेषु गुडादिसंसृष्टामलकेषु वा कषायरसव्यभिचारदर्शनेनाविनाभावनिश्चयायोगात् । वृक्षोऽयं शिंशुपात्वादिति स्वभावलिङ्गस्य लताचूतवल्लताशिंशुपासम्भावनया वृक्षत्वाविनाभावनिश्चयासम्भवात् । धूमादिरूपकार्यलिङ्गस्यापि गोपालघटिकादौ व्यभिचारेण वह्न्यविनाभावनिश्चयायोगात् । न च यत्र धूमस्तत्राग्निर्यत्राग्निर्नास्ति तत्र धूमोऽपि नास्तीत्यन्वयव्यतिरेकसहचारज्ञानाभ्यामविनाभावनिश्चयः सम्भवतीति वाच्यम्—कतिपयाधिकरणेषु सहचारज्ञानस्य व्यभिचारस्थलेऽपि सम्भवात् सर्वाधिकरणेषु [2]सहचारग्रहस्यासर्वज्ञानामसम्भवात् । तदर्थं सर्वज्ञतास्वीकारे चानुमानवैयर्थ्यात् । उक्तं च—

भवन्नप्यविनाभावः परिच्छेत्तुं न शक्यते ।
जगत्त्रयगताशेषपदार्थालोचनाद्विना ॥
यतः प्रत्यक्षतो विश्वं पश्यन्ति हि भवादृशाः ।
किं दिव्यचक्षुषां तेषामनुमाने प्रयोजनम् ॥ इति ॥

तस्मादनुमित्यात्मकप्रमितेरभावान्नानुमानं प्रमाणमिति प्रमाणद्वैविध्यकथनमयुक्तमिति वदन्ति । तन्न-प्रत्यक्षमात्रप्रामाण्यवादिनाऽनुमानप्रामाण्यस्य वक्तुमयुक्तत्वात् । न ह्यनुमानस्य प्रामाण्याभावः प्रत्यक्षेण गृह्यते—न तावद्बाह्यप्रत्यक्षेण तस्य ज्ञानतद्धर्माविषयकत्वेनानुमानविषयकत्वाभावात्तद्गतप्रामाण्यविषयकत्वासम्भवात् । नापि मानसप्रत्यक्षेण—मनसोऽतीन्द्रियस्य भवद्भिरनङ्गीकारेण तज्जन्यप्रत्यक्षस्यैव भवन्मतेऽसत्त्वात् । अनुमानेनानुमानाप्रामाण्यसाधने व्याघातात् । अनुमानं

[1] तथा चेत्तत्र वह्निसंशयस्य (क). [2] सहचारस्य (ख).

न प्रमाणमिति भवदीयानुमानं प्रमाणं? न वा? आद्येऽनुमानविशेषस्य प्रामाण्याङ्गीकारात्प्रत्यक्षमेकमेव प्रमाणमिति भवत्सिद्धान्तव्याघातः। द्वितीयेऽनुमानप्रामाण्येन किञ्चिद्बाधकमिति। अविनाभावनिश्चयस्तूहाख्यप्रमाणेन भवतीति तर्कात्तन्निश्चय इति सूत्रे प्रतिपादयिष्यते। व्याप्तिग्रहणाङ्गीकारे सर्वज्ञत्वापत्तिस्तु न युक्ता। सर्वज्ञत्वं हि न तावत्सर्वविषयकज्ञानवत्वं। सर्वं वस्त्वित्यादिवाक्येन सर्वविषयकबोधे जाते श्रोतुस्सर्वज्ञत्वापत्तेः। किंतु वस्तुत्वव्याप्या यावन्तो धर्मास्त[1]त्प्रकारकसाक्षात्कारवत्वं। तथा च सामान्याकारेण सर्वविषयकज्ञानस्य वस्तुत्वव्याप्यतत्तद्व्यक्तित्वादिप्रकारकत्वाभावात् प्रत्यक्षत्वाभावाच्च न तदापत्तिरिति। अतोऽनुमानस्य प्रमाणत्वात्प्रमाणमेकमेवेत्ययुक्तम्।

सौगतास्तु—अस्तु प्रमाणद्वैविध्यं, तच्च प्रत्यक्षानुमानभेदादेव, सामान्यविशेषभेदेन प्रमेयस्य द्विविधत्वेन तद्ग्राहकप्रमाणस्यापि द्विविधत्वस्य युक्तत्वात्। तत्र प्रत्यक्षं विशेषग्राहकमनुमानं च सामान्यग्राहकमिति। न चानुमानस्य सामान्यमात्रग्राहित्वे वह्न्यर्थिनोऽनुमानेन विशेषे प्रवृत्तिर्न स्यादिति वाच्यम्-अनुमितौ सामान्यस्य भानेऽपि सामान्येन विशेषस्य मानसज्ञानं जायते, तेन प्रवृत्तिरित्यभ्युपगमात्। न च परंपरया प्रवृत्त्युपपादनापेक्षयाऽनुमितेर्विशेषविषयकत्वमङ्गीकृत्य साक्षात्तदुपपादनं युक्तमिति वाच्यम्-धूमादेर्वह्निसामान्येन व्याप्तिसत्त्वेऽपि वह्निविशेषेण व्याप्त्यभावेन व्यापकस्यैवानुमितौ भानेनाव्यापकस्य विशेषस्यानुमितौ भानायोगात्। अतस्सामान्यविषयानुमित्या विशेषस्य मानसज्ञानात्प्रवृत्तिरित्याहुः। तन्न-सामान्यविशेषात्मा तदर्थो विषय इति सूत्रे प्रमेयसामान्यस्य सामान्यविशेषरूपतया वक्ष्यमाणत्वेन प्रमेयद्वैविध्यासिद्धेः। किञ्च धूमादिरूपकार्यलिङ्गस्थले कारणभूतस्य वह्निविशेषस्य शिंशुपात्वादिरूपस्वभावलिङ्गस्थले तादृशस्वभावाश्रयस्य वृक्षविशेषस्य च व्यापकत्वेनोभयत्र सामान्यस्य व्यापकत्वाभावेनानुमितौ सामान्यस्य भानमप्रामाणिकम्। न हि कारणत्वं स्वभावाश्रयत्वं च सामान्यस्य सम्भवति। सामान्यस्य तन्मतेऽपोहरूपतया कारणत्वाद्यसम्भवात्। एवमागमोपमादीनामनुमाने अन्तर्भावासम्भवादपि प्रत्यक्षानुमानभेदेन प्रमाणद्वैविध्यमयुक्तम्। न च शब्दस्य न स्वासम्बन्धार्थग्राहित्वं, तथा सति घटादिशब्दा-

---

[1] तत्प्रकारकवत्व (क).

दपि पटादेर्बोधप्रसङ्गात्। तथा च सम्बन्धार्थग्राहकत्वाच्छब्दस्यानुमाने अन्तर्भावो युक्त इति वाच्यम् तथा सतीन्द्रियसम्बन्धार्थग्राहिणः प्रत्यक्षस्याप्यनुमानेऽन्तर्भावप्रसङ्गात्। न चाविनाभावसम्बन्धेन सम्बन्धार्थग्राहकत्वमनुमानत्वे प्रयोजकं, इन्द्रियस्य घटाद्यर्थेनाविनाभावाभावान्नानुमानत्वमिति वाच्यम् स्वर्गे इन्द्रोऽस्तीत्यादिशब्दस्य भूलोकस्थस्य स्वर्गस्थेन्द्रादिरूपार्थेन देशतोऽविनाभावाभावात्। रावणशङ्खचक्रवर्त्यादिशब्दानां भूतभविष्यदर्थप्रतिपादकानां स्वप्रतिपाद्यार्थेन कालतोऽप्यविनाभावाभावात् शब्दस्याप्यनुमानत्वासम्भवात्।

अत्र वैशेषिकाः-आगमप्रमाणस्य हि न पदार्थज्ञानं फलं, पदार्थानां वाच्यवाचकभावसम्बन्धेन पदसम्बन्धितया पूर्वं गृहीतत्वेन पदज्ञाने सति पदार्थस्मरणस्य हस्तिदर्शनेन हास्तिपकस्मरणवत्सम्भवात्, एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मरणे हेतुत्वात्, तादृशस्मरणस्य च यथार्थानुभवत्वरूपप्रमात्वाभावेन प्रमाणफलत्वायोगात्। किंतु परोपस्थापितानां पदार्थानां परस्परसंसर्गज्ञानं. तथा च पदानां पदार्थव्याप्यत्वाभावेऽपि न क्षतिः। न च पदार्थसंसर्गस्यापि देशान्तरकालान्तरीयस्य पदव्यापकत्वं न सम्भवतीति संसर्गज्ञानस्याप्यनुमितित्वमयुक्तमिति वाच्यम्—स्वविषयकज्ञानपूर्वकत्वसम्बन्धेन संसर्गस्य पदनिष्ठतया पदेष्वा ाांक्षादित्वेन समुदायत्वसत्त्वेन तेन तदनुमानसम्भवात्। वक्ता हि पदार्थानां संसर्गं बुध्वैव वाक्यं प्रयुङ्क्ते इति वाक्यस्य पदार्थसंसर्गज्ञानपूर्वकता। प्रयोगश्च—घटमानयेत्यादिपदानि घटानयनादीनां परस्परसंसर्गज्ञानपूर्वकाण्याकाङ्क्षादिमत्पदसमुदायत्वात्, मदीयवाक्यवदिति। तथा चागमस्यानुमान एवान्तर्भाव इति वदन्ति। तन्न—इदं रजतमिति वाक्याद्रजतार्थिनो रजतादौ प्रवृत्त्यनुपपत्तेः। इदंपदार्थविशेष्यकरजतत्वप्रकारकज्ञानस्यैव रजतार्थिन इदंपदार्थविशेष्यकप्रवृत्तौ कारणत्वात्। अन्यथेदं रजतमिति प्रत्यक्षादिज्ञानादिव रजतज्ञानवान् चैत्र इत्यादिज्ञानादपि प्रवृत्त्यापत्तेः। भवन्मते इदं रजतमिति वाक्यं रजतसंसर्गज्ञानपूर्वकमित्येवानुमित्युत्पत्तेः।

अत्र नव्यवैशेषिकाः—उक्तस्थले इदं रजतमिति वाक्यं रजतसंसर्गज्ञानपूर्वकमित्यनुमितिर्न स्वीक्रियते येनोक्तवाक्यात्प्रवृत्त्यनुपपत्तिः स्यात्। किं तु इदंपदार्थस्तादात्म्येन रजतवान् समानविभक्तिकरजतपदसमभिव्याहृतेदंपदोपस्थाप्यत्वात् मदीयवाक्यार्थवदिति। न चैवं भ्रान्तोच्चरितेदं रजतमिति वाक्यं प्रतिपद्येदंपदार्थे तादात्म्येन रजताभावाद्व्यभिचार

इति वाच्यम्—अबाधितत्वरूपयोग्यताया अपि हेतुकोटौ निवेशा-दित्याहुः। तन्न—यत्रेदं रजतं न वेति सन्देहस्तत्रेदं रजत मिति वाक्याच्छाब्दबोधानुपपत्तेः। तत्राबाधितत्वरूपयोग्यताया निश्चयाभावेन तद्घटितहेतोरनिश्चयात्। विशेष्ये प्रकारवत्त्वस्यैवाबाधि-तत्वरूपतया इदमर्थे रजतसन्देहदशायामिदमर्थे तादात्म्येन रजतवत्त्व-रूपयोग्यताया निश्चयासम्भवादिति। तथा चागमस्यानुमानेऽन्तर्भावा-सम्भवात्प्रत्यक्षानुमानभेदेन प्रमाणद्वैविध्यमयुक्तम्। एवमुपमानस्याप्यनु-मानेऽन्तर्भावो न सम्भवति। तथा हि—नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयसमागमे अयं गोसदृश इति ज्ञानं जायते। तदनन्तरम-नेन सदृशी मदीया गौरिति प्रमा जायते। तत्रान्वयव्यतिरेकाभ्यां गवय-निष्ठगोसादृश्यज्ञानं करणम्। गोनिष्ठगवयसादृश्यज्ञानं फलम्। न चेदं प्रत्यक्षेण भवति—गोव्यक्तेस्तद्देशावृत्तित्वात्। नाप्यनुमानं—गवयनिष्ठगोसा-दृश्यस्य गोवृत्तित्वाभावेन गवि गवयसादृश्यसाधकत्वायोगात्। अथ मदीया गौरेतद्गवयसदृशी, एतद्गवयनिष्ठसादृश्यप्रतियोगित्वात्। यो यन्निष्ठसादृश्यप्रतियोगी स तत्सदृशः, यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानान्मदीया गौर्गवयसदृशीति ज्ञानं सम्भवतीति चेन्न-गवि गवयनिष्ठगोसादृश्यप्रतियोगित्वज्ञानाभावेऽप्यनेन सदृशी मदीया गौरिति ज्ञानस्यानुभवसिद्धत्वेन तस्यानुमानत्वासम्भवात्। उक्तं च मार्तण्डे-यदा च तादृशो गौस्तदा न तस्य तद्धर्मतया ग्रहणमस्तीति। अनेन सदृशी मदीया गौरिति ज्ञानात्पूर्वं गोधर्मतया गवयनिष्ठसादृश्य-प्रतियोगित्वस्य ज्ञानं नास्तीत्यर्थः। यद्यपि पक्षधर्मत्वाभावेऽपि हेतोरनु-मितिजनकताया वक्ष्यमाणत्वाद्गवयनिष्ठगोसादृश्यस्य गोनिष्ठत्वाभावेऽप्य-र्थानुपपत्तिबलेनैव गोनिष्ठगवयसादृश्यानुमापकत्वं सम्भवति। तथापि स्याद्वादिमते तथाङ्गीकारेणानुमानान्तर्भावसम्भवेऽपि परेषां मते हेतोः पक्षधर्मत्वनैयत्यस्याङ्गीकारादुपमानस्यानुमानान्तर्भावो न युक्त इति मार्ता-ण्डाभिप्रायः। एतेन नाप्यनुमानरूपता लिङ्गाभावात्। गवयगतं सादृश्यं लिङ्गमिति चेन्न--व्यधिकरणासिद्धत्वप्रसक्तेः। न च व्यधिकरणासिद्धस्य गमकत्वं काककार्ष्ण्यादिवदिति न्यायकुमुदचन्द्रोदयसन्दर्भोऽपि व्याख्यातः। तस्यापि परमते उपमानस्यानुमानान्तर्भावासम्भवपरत्वात्। अत एव न्यायकुमुदचन्द्रोदये स्वमते उपमानस्य प्रत्यभिज्ञायामन्तर्भावमभिधायानु-मानेप्यन्तर्भावोऽभिहित इति ध्येयम्। एवमर्थापत्तिरपि प्रमाणान्तरम्।

तथा हि—उपपाद्यज्ञानजन्योपपादक[1]ज्ञानमर्थापत्तिः। यथा दिवाऽभुञ्जानस्य देवदत्तस्य पीनत्वज्ञानेन रात्रिभोजनज्ञानं। तत्र उपपाद्यभूतपीनत्वज्ञानं करणम्। उपपादकरात्रिभोजनज्ञानं फलम्। रात्रिभोजनाभावप्रयुक्ताभावप्रतियोगित्वं पीनत्वे रात्रिभोजनोपपाद्यत्वम्। पीनत्वाभावप्रयोजकाभावप्रतियोगित्वं रात्रिभोजनस्य पीनत्वोपपादकत्वम्। दिवाऽभुञ्जानस्य रात्रिभोजनाभावे पीनत्वाभाव इति तदभावयोः प्रयोज्यप्रयोजकभावप्रतीतेः। सा षड्विधा-प्रत्यक्षजन्या, अनुमानजन्या, उपमानजन्या, आगमजन्या, अर्थापत्तिजन्या, अनुपलब्धिजन्या चेति। तत्र प्रत्यक्षात्मकोपपाद्यज्ञानजन्या यथा-वह्नौ दाहविषयकप्रत्यक्षेण तज्जनकतावच्छेदकशक्तिज्ञानं। अनुमानपूर्विका यथा-आदित्यो गतिमान् देशान्तरसंयोगवत्वात् बाणवदित्यनुमानेन गतिमत्वविषयकेणादित्यो गमनशक्तिमानिति ज्ञानं। उपमानपूर्विका यथा-मदीया गौरेतद्गवयसदृशीत्याकारकोपमितिविषयत्वेनोपमितिविषयतावच्छेदकशक्तिकल्पनम्। एवमन्याप्युदाहार्या। उक्तार्थापत्तिज्ञानं न तावत्प्रत्यक्षं-शक्तेरतीन्द्रियत्वेन प्रत्यक्षस्य तद्विषयकत्वायोगात्। नाप्यनुमितिः-तन्मूलभूतव्याप्तिज्ञानस्य प्रत्यक्षेणासम्भवात्। शक्तिसाधकानुमितिहेतुव्याप्तेरतीन्द्रियशक्तिघटितत्वात्, अनुमानेन व्याप्तिग्रहणाङ्गीकारे तदनुमानमूलभूतव्याप्तेरप्यनुमानान्तरेण ग्रहणावश्यकतथाऽनवस्थापत्तेश्च। न च साध्याभावप्रयुक्ताभावप्रतियोगित्वस्यैव स्याद्वादिमते व्याप्तित्वादर्थापत्तिहेतुभूतमुपपाद्यत्वज्ञानं प्रत्यक्षेणानुमानेन वा न युज्यत इति वाच्यम्—ऊहाख्यप्रमाणेन व्याप्तिग्रहणस्य वक्ष्यमाणत्वेनोक्तोपपाद्यत्वस्याऽपि तेन ग्रहणसम्भवेनार्थापत्तेरनुमानान्तर्भावसम्भवात्। अतः परेषामर्थापत्तेरनुमानेऽन्तर्भावासम्भवाद्वैशेषिकोक्ता प्रमाणसङ्ख्या न युक्ता।

अत्र वैशेषिकाः—अर्थापत्तेरनुमान एवान्तर्भावः। न च तद्धेतुभूतव्याप्तिज्ञानासम्भवः, प्रत्यक्षेणैव तत्सम्भवात्। प्रत्यक्षं हि द्विविधं लौकिकमलौकिकं चेति। तत्र लौकिकं संयोगसंयुक्तसमवायादिषड्विधसन्निकर्षजन्यम्। अलौकिकं च त्रिविधं—ज्ञानलक्षणाजन्यं, सामान्यलक्षणाजन्यं, योगजधर्मजन्यं चेति। तत्र चक्षुषा सुरभिश्चन्दनखण्ड इति प्रत्यक्षमाद्यं। तत्र सौरभांशे [2]चक्षुषः स्वतो ग्रहणसामर्थ्याभावेन पूर्वं घ्राणेन गृहीत-

---

[1] ज्ञानकल्पनं (ख). [2] चक्षुषा (ख).

स्यैव ग्रहणं वाच्यमिति ज्ञानलक्षणा सौरभांशग्रहणे हेतुः। ज्ञानलक्षणा च ज्ञानमेव। धूमवह्न्यादिदर्शने सति धूमत्ववह्नित्वादिसामान्येन सकलवह्निधूमानां ज्ञानं द्वितीयम्। योगजधर्मसहायेन मनसाऽतीतानागतसर्वप्रत्यक्षं तृतीयं। तथा च दिवाभोजनाभावविशिष्ट[1]पीनत्वस्य रात्रिभोजननिरूपितव्याप्तेः सामान्यलक्षणाजन्यप्रत्यक्षेण सर्वोपसंहारेण ग्रहणसम्भवादर्थापत्तेरनुमानेऽन्तर्भावस्सम्भवति। न च सामान्यलक्षणाजन्यप्रत्यक्षे सामान्याश्रयं यत्किञ्चिद्व्यक्तौ लौकिकप्रत्यक्षस्य कारणतया [2]धूमादिना यत् किंचिदेकव्यक्तिप्रत्यक्षेण सर्वे धूमा इति तादृशप्रत्यक्षसम्भवेन तत्र व्याप्तिग्रहणसम्भवेऽपि शक्त्याद्यतीन्द्रियपदार्थनिरूपितव्याप्तेस्तेन ग्रहणायोगादतीन्द्रियशक्त्यादिविषयकार्थापत्तेरनुमानेऽन्तर्भावो न सम्भवतीति वाच्यम्—करणतातिरिक्तशक्तेरप्रामाणिकतया तद्विषयकार्थापत्तेः प्रमाणत्वासम्भवात्।

ननु मण्यादिसमवधानकालीनवह्निना दाहापत्तिवारणाय दाहं प्रति मणेः प्रतिबन्धकत्वं वाच्यम्। तच्च कार्यानुकूलशक्तिविघटकत्वमिति मणेः प्रतिबन्धकत्वान्यथानुपपत्त्या मणिनाशाद्वह्निगता दाहजनकतावच्छेदिका शक्तिरभ्युपगन्तव्येति चेन्न—उभयवादिसिद्धमण्यभावस्य दाहं प्रति कारणतयैव मणिसमवधानकाले वह्निना दाहापत्तिवारणसम्भवेन तदर्थं शक्तिविशिष्टवह्नेः कारणत्वकल्पनात्। अन्यथा अनन्तशक्तितन्नाशादीनां कल्पनीयतया गौरवात्। प्रतिबन्धकत्वं तु कारणीभूताभावप्रतियोगित्वमिति मण्यभावस्य कारणतयैव मणेः प्रतिबन्धकतानिर्वाहान्न प्रतिबन्धकत्वान्यथानुपपत्त्यापि शक्तिसिद्धिः। अतोऽतीन्द्रियविषयकार्थापत्तेरसम्भवादैन्द्रियकविषयकार्थापत्तेश्चानुमानेऽन्तर्भूतत्वात्प्रत्यक्षानुमानभेदेन प्रमाणद्वैविध्यं युक्तमित्याहुः। तन्न—सर्वे धूमा इत्यादिज्ञानस्य प्रत्यक्षत्वे घटं साक्षात्करोमीतिवत्सर्वान् धूमान् साक्षात्करोमीति प्रतीत्यापत्तेस्तद्ज्ञानस्योहाख्यप्रमाणताया एव युक्तत्वात्। एवं प्रतिबन्धकाभावस्यापि कार्यमात्रे कारणतां स्वीकृत्य शक्तिखण्डनं न युक्तं। यत्र चैत्रं प्रति दाहो मा जायतामिति मन्त्रः कृतः, तत्र दाहं प्रति मन्त्राभावस्य कारणत्वे मैत्रं प्रत्यपि तद्वह्निना दाहानुपपत्तेः। न च दाहं प्रति मन्त्रस्योद्देश्यतासम्बन्धेनैव प्रतिबन्धकता। तत्र चैत्र एवोद्देश्यतासम्बन्धेन

1 पीनत्वे (क). 2 धूमादि (ख).

मन्त्रसत्त्वेन मैत्रादौ तत्सम्बन्धावच्छिन्नमन्त्राभावसत्त्वेन दाहोपपत्तिरिति वाच्यम्—एतद्दिनपर्यन्तं चैत्रस्य दाहो न जायतामिति यत्र मन्त्रः कृतः तत्र मन्त्रनाशानन्तरं मन्त्राभावसत्त्वेन चैत्रस्यापि दाहापत्तेः। न च तत्र दिनस्यैव प्रतिबन्धकत्वात्तत्र मध्ये न दाहापत्तिरिति वाच्यम्—तथा सति तद्दिने पुरुषान्तरस्यापि दाहानुपपत्तेः। अत्र पदार्थानां विचित्रशक्तेरावश्यकत्वाद्दाहकार्थापत्तेः परमतेऽनुमानेऽन्तर्भावासम्भवात्पराभिमता सङ्ख्या न युक्तैव। एवमभावप्रमाणस्यातिरिक्तस्य सत्त्वाच्च सा न युक्ता। तथा हि—ज्ञानकरणाजन्याभावविषयकप्रमात्वमभावप्रमाया लक्षणं। अत्राजन्यान्तोपादानादभावविषयकानुमितिशाब्दबोधयोर्नातिव्याप्तिः। तादृशप्रमारूपेण परिणममानं च ज्ञानमभावप्रमाणम्। यद्यपीदं स्याद्वादिमते प्रत्यक्षेऽन्तर्भूतम्। तथापि वैशेषिकमते तस्य प्रत्यक्षेऽन्तर्भावासम्भवादतिरिक्तता दुर्वारा। तन्मते प्रत्यक्षे इन्द्रियसन्निकर्षस्य कारणत्वाभ्युपगमादभावेन साकमिन्द्रियाणां सन्निकर्षासम्भवात्। न चाभावाधिकरणयोर्विशेषणतानामकस्य स्वरूपसम्बन्धस्य स्वीकाराद्भूतलादौ घटाद्यभावस्य चक्षुस्संयुक्तविशेषणतादिसन्निकर्षः सम्भवतीति वाच्यम्—विशेषणताया भूतलस्वरूपत्वेऽभावस्वरूपत्वे वा घटवद्भूतलेऽपि घटाभावप्रतीत्यापत्तेः, अभावस्य तत्सम्बन्धस्य च सत्त्वात्। एवं घटसत्तादशायामपि कपाले घटप्रागभावध्वंसयोः प्रतीत्यापत्तिः। अभावस्वरूपस्य कपालस्वरूपस्य वा प्रागभावध्वंससम्बन्धस्य घटसत्तादशायामप्यप्रत्यक्षत्वात्।

अत्र वैशेषिकाः—अभावश्चतुर्विधः—प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति। तत्र घटो भविष्यतीति प्रतीतिविषयोऽभावः प्रागभावः। तस्य चानादित्वे सति सान्तत्वं लक्षणम्। अत्र घटादावतिव्याप्तिवारणाय सत्यन्तम्। अत्यन्ताभाववारणाय विशेष्यम्। घटो नश्यतीति प्रतीतिविषयीभूतोऽभावः प्रध्वंसाभावः। तस्य च सादित्वे सत्यनन्तत्वं लक्षणम्। अत्यन्ताभाववारणाय सत्यन्तम्। घटादिवारणाय विशेष्यम्। भूतले घटो नास्तीत्यादिप्रतीतिविषयोऽभावोऽत्यन्ताभावः। तस्य च नित्यत्वे सत्यन्योन्याभावभिन्नाभावत्वं लक्षणम्। प्रागभावादिवारणाय सत्यन्तम्। अन्योन्याभाववारणाय विशेष्यम्। घटः पटो न भवतीति प्रतीतिविषयीभूतोऽभावोऽन्योन्याभावः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावस्य

लक्षणम्। तादात्म्येन सतो घटस्य पटादावभावो हि घटाद्यन्योन्याभाव इति तत्र लक्षणसङ्गतिः। एवं च घटसत्तादशायां कपाले प्रागभावप्रध्वंसाभावयोर्न प्रतीत्यापत्तिः। तदानीं प्रागभावस्य नाशात्, ध्वंसस्य चानुत्पत्तेः। एवं घटवद्भूतले घटाभावप्रतीत्यापत्तिरपि न युक्ता। घटानधिकरणकालावच्छिन्नभूतलस्यैव घटाभावसम्बन्धत्वेन तद्दशायामभावस्य सत्त्वेऽपि निरुक्तस्वरूपसम्बन्धाभावेनैव तादृशप्रतीत्यापत्तिवारणात्। शुद्धभूतलस्वरूपस्य सम्बन्धत्वानुपगमात्। अतश्चक्षुषस्संयुक्तविशेषणतादिना घटाद्यभावस्य प्रत्यक्षोपपत्तेर्नाभावप्रमाणस्यातिरिक्तता। न चैवं यत्र सन्निकृष्टाधिकरणान्तरवृत्तेर्घटादेर्भूतलादावारोपस्तत्रापि भूतले घटाभावप्रत्यक्षापत्तिः। तद्भूतलस्य घटानधिकरणत्वेन घटानधिकरणकालावच्छिन्नभूतलात्मकस्वरूपसम्बन्धस्य घटाभावस्य च सत्त्वादिति वाच्यम्—यदधिकरणेऽभावप्रत्यक्षं तदधिकरणगतस्य विषयतासम्बन्धावच्छिन्नप्रतियोग्युपलम्भाभावस्यापि कारणत्वात्। उक्तारोपस्थले भूतले विषयतासम्बन्धेन प्रतियोग्यारोपसत्त्वेन तदभावविरहात्। न च भूतलादौ परमाण्वादेरतीन्द्रियस्याप्यभावप्रत्यक्षं स्यादिति वाच्यम्—प्रतियोग्युपलम्भपदेन प्रतियोगिविषयकस्य लौकिकप्रत्यक्षस्य विवक्षितत्वात् परमाण्वादिविषयकलौकिकप्रत्यक्षस्याप्रसिद्ध्या तदभावरूपाया योग्यानुयोग्यानुपलब्धेरभावेन परमाण्वाद्यभावप्रत्यक्षासम्भवात्। परमाण्वादौ घटाभावादेः प्रत्यक्षं तु परमाणुस्वरूपस्य स्वरूपसम्बन्धत्वकल्पनादेव वारणीयमिति वदन्ति। तन्न—अधिकरणातिरिक्ताभावस्याप्रामाणिकत्वात्। न च घटाभावस्य भूतलस्वरूपत्वे सघटभूतलेऽपि घटाभावप्रतीत्यापत्तिरिति वाच्यम्—यादृशपर्यायविशिष्टस्य भूतलस्य भवन्मते घटाभावनिरूपितस्वरूपसम्बन्धत्वं तादृशपर्यायविशिष्टभूतलस्यैवात्यन्ताभावस्वरूपत्वोपगमात्तावतैव निर्वाहेऽनन्ताभावकल्पने गौरवात्। किं च घटाभावस्य भूतलातिरिक्तत्वे घटाभावेऽपि घटाभावोऽतिरिक्तस्तत्राप्यतिरिक्त इत्यनवस्थापत्तिः। न च घटाभावे विद्यमानघटाभावोऽधिकरणस्वरूप एवाभावाधिकरणकाभावस्याधिकरणस्वरूपत्वादिति वाच्यम्—प्रथमपर्यायेऽधिकरणातिरिक्ततामभ्युपगम्य द्वितीयपर्यायेऽधिकरणस्वरूपत्वकल्पनापेक्षया प्रथमत एव तथात्वकल्पनस्य युक्तत्वात्। घटत्वाव्यवहितपूर्ववृत्तिमृत्पिण्डत्वादिपर्यायविशिष्टद्रव्यस्य तादृशपर्या-

यस्य वा घटप्रागभावरूपत्वमुत्तरपर्यायविशिष्टद्रव्यस्य तादृशपर्यायस्य वा ध्वंसत्वमित्येतावतैव घटो भविष्यति, घटो नष्ट इत्यादिप्रतीतिनिर्वाहे तदतिरिक्तानन्तप्रागभावानन्तध्वंसानां कल्पनस्यानुचितत्वात्। एवं घटाद्यन्योन्याभावोऽपि पटादिगतपटत्वादिरूप एव। यद्धर्मावच्छिन्नतादात्म्यभ्रमं प्रति यद्धर्मप्रकारकज्ञानस्य प्रतिबन्धकता तद्धर्मस्यैव तद्धर्मावच्छिन्नभेदरूपत्वात्। पटत्वादिप्रकारकज्ञानस्य घटतादात्म्यभ्रमं प्रति, शुक्तित्वादिप्रकारकज्ञानस्य च रजततादात्म्यभ्रमंप्रति प्रतिबन्धकत्वेन पटत्व शुक्तित्वादेर्घटत्वरजतत्वाद्यवच्छिन्नप्रतियोगिताकभेदरूपताया युक्तत्वात्। पटादौ घटादिभेदस्यातिरिक्तत्वे घटभेदोप्यतिरिक्तस्तद्भेदोऽप्यतिरिक्त इत्यनवस्थापत्तिः। अतो घटादिव्यावर्तकधर्म एव घटादिभेद इति युक्तम्। एवमतिरिक्ताभावं प्रत्यधिकरणस्वरूपमेव विशेषणतासम्बन्ध इति न युक्तम्। सह्यं प्रति विन्ध्यस्यैवातिरिक्ताभावं प्रति भूतलस्य सम्बन्धत्वासम्भवात्। अतोऽतिरिक्ताभाववादिमतेऽभावे सन्निकर्षासम्भवात्। अभावप्रमाणस्य प्रत्यक्षेऽन्तर्भावायोगात्तदभिमतप्रमाणसंख्या न युक्तैव। न चाधिकरणनिष्ठस्य प्रतियोग्युपलम्भाभावस्यैवाभावप्रमितौ साधकतमत्वेनाभावप्रमाणत्वात्तस्य ज्ञानरूपप्रत्यक्षप्रमाणेन सहाभेदः स्याद्वादिपक्षेऽपि न सम्भवतीति वाच्यम्—ज्ञानातिरिक्तं प्रमाणं न भवतीत्यर्थस्य प्रागेव प्रपञ्चितत्वेन प्रतियोग्युपलम्भाभावस्य प्रमाणताया निरस्तप्रायत्वात्। न चैवमपि सम्भवैतिह्ययोः प्रमाणान्तरयोः सत्त्वात् कथं प्रत्यक्षपरोक्षभेदेनापि द्वैविध्यमिति वाच्यम्—सम्भवैतिह्ययोः प्रत्यक्षानुमानान्यतरान्तर्भूतत्वात्। तत्र सम्भवो द्विविधः—सम्भावनारूपो निश्चयरूपश्च। तत्राद्य इन्द्रस्तर्जन्या सुमेरुमुद्धर्तुं शक्नोतीत्यादिसम्भावना सत्यवचनजन्यरूप इत्यागमप्रमाणान्तर्भूतः। द्वितीयस्तु सहस्रमस्तीत्युक्तेऽत्र शतं सम्भवतीति बोधः। स चानुमानमेव। इदं सहस्रत्वं शतघटितसमुदायनिष्ठं, सहस्रत्वात्, प्राग्गुणितसहस्रत्ववदिति लिङ्गजन्यत्वात्। इह वृक्षे यक्षस्तिष्ठतीत्यादिवाक्यजन्यज्ञानमैतिह्यम्। तच्च यथार्थं चेदागमो नो चेत्तदाभासः। एवं चेष्टापि न प्रमाणान्तरं—द्वित्वादिबोधेच्छया कृतस्य संयुक्ताङ्गुलिद्वयादिनिर्देशस्य सङ्केतवशेन द्वित्वादिशब्दस्मृतिद्वारा द्वित्वादिबोधजनकत्वेनागमप्रमाण एवान्तर्भूतत्वात्। अन्यथा सङ्केतवशेन वर्णस्मृतिपूर्वकपदस्मृतिद्वाराऽर्थबोधकस्य लिप्यादेरपि प्रमाणान्तरतापत्तेः। अतः प्रत्यक्षपरोक्षभेदेन द्वित्वसङ्ख्या सर्व-

प्रमाणसंग्राहकत्वात्समुचितेति दिक् । अथेदानीं प्रथमप्रमाणभेदस्य प्रत्यक्षस्य लक्षणमाह---

विशदं प्रत्यक्षम् ॥ ३ ॥

अत्र हिताहितेत्यादिसूत्रात् ज्ञानमित्यनुवर्तते। तेन विशदज्ञानत्वं प्रत्यक्षस्य लक्षणं लभ्यते । विशदज्ञानत्वं च विषयत्वान्तराप्रयोज्यविषयताकत्वमिति वक्ष्यते। न च नैयायिकोक्तज्ञानलक्षणाजन्यप्रत्यक्षसामान्यलक्षणाजन्यप्रत्यक्षयोरव्याप्तिः। सुरभिश्चन्दनखण्ड इति चाक्षुषज्ञानीयसौरभविषयतायाः पूर्वानुभूतसौरभस्मरणविषयताप्रयोज्यत्वात् । सामान्यलक्षणाजन्यज्ञानीयाया अपि सर्वे घटा इति प्रत्यक्षविषयताया अप्येकस्मिन् घटे घटत्वग्रहविषयताप्रयोज्यत्वादिति वाच्यम्—तत्र प्रथमस्योपनीतभानत्वेनाभिमतस्य प्रत्यभिज्ञारूपत्वेन द्वितीयस्योहाख्यप्रमाणत्वेन तयोः प्रत्यक्षत्वाभावात्। अन्यथा सौरभं साक्षात्करोमि सर्वान् घटान् साक्षात्करोमीत्यादिप्रतीत्यापत्तेः। विषयतान्तरप्रयोज्यविषयताकज्ञानस्यापि प्रत्यक्षेऽन्तर्भावेऽनुमानस्यापि तथात्वापत्तेर्दुर्वारत्वात्। तथा हि—वह्निव्याप्यवत्तापरामर्शरूपविशेषदर्शनमूलकवह्न्युपनीतभानादेव पर्वतादौ वह्न्याद्यर्थिपुरुषप्रवृत्तिनिर्वाहान्नानुमानस्य पृथक्प्रामाण्यम् । न चान्वयव्याप्तिज्ञानकाले साध्यज्ञानस्यावश्यकत्वाद्वह्न्यादिविषयकोपनीतभानोपपत्तावपीतरभेदज्ञानशून्यकालीनेतरत्व---व्यापकीभूताभावप्रतियोगिपृथिवीत्ववति पृथिवीत्यादिव्यतिरेकव्याप्तिज्ञानकाले इतरभेदज्ञानाभावात्तदुपनीतभानासम्भवेन तत्र प्रमित्यन्तरस्वीकार आवश्यक इति वाच्यम्—अभावत्वादिसामान्यलक्षणसन्निकर्षबलादितरभेदगोचरप्रत्यक्षोपपत्तेः। एवं घटमानयेति वाक्यश्रवणानन्तरं घटकर्मत्वानयनकृत्यादीनां परस्परसंसर्गावगाहिज्ञानमपि प्रमित्यन्तरं न स्यात्। शाब्दबोधस्थले पूर्वं पदार्थोपस्थितेरावश्यकतया तादृशमानसोपनीतभानेनैव निर्वाहात्। न च संसर्गोपस्थितेरनैक्यात् कथं संसर्गबोध इति वाच्यम्—बाधाभावादिबला[1]दस्यापि संसर्गतया भानसम्भवात्। न च तदुपनीतभानं प्रति तदुपनायकज्ञानत्वेन हेतुत्वे व्यभिचार इति वाच्यम्—सांसर्गिकविषयताभिन्नालौकिकविषयताया एव जन्यतावच्छेद-

[1] बलात् कस्यापि (क).

कत्वेन व्यभिचाराभावात्। शाब्दबोधात्मकप्रमित्यन्तरस्वीकारे तन्निर्वाहकबहुतरकार्यकारणभावकल्पनापेक्षया सांसर्गिकविषयताभेदनिवेशे लाघवस्यातिस्फुटत्वात् योग्यताज्ञानस्य शब्दसामान्ये हेतुतया संसर्गविषयकयोग्यताज्ञानसत्त्वात्। सांसर्गिकविषयताभेदानिवेशेऽपि क्षत्यभावाच्च। एवं गवये गोसादृश्यज्ञानजन्यमनेन सदृशी मदीया गौरिति ज्ञानमप्युपनीतप्रत्यक्षमेव स्यात्तथा चाविशदज्ञानस्यापि प्रत्यक्षत्वाङ्गीकारे प्रत्यक्षमेकमेव प्रमाणं स्यादिति चार्वाकमतप्रवेशापत्तिर्दुर्वारा॥

अत्र नैयायिकाः-लिङ्गपरामर्शोत्तरोत्पन्नप्रमित्युत्तरमनुमिनोमीत्यनुव्यवसायस्तावदनुभवसिद्धः। तद्विषयीभूतानुमितित्वजातिविशेषावच्छिन्नकरणतयानुमानस्य प्रमाणान्तरत्वमावश्यकम्। एवं शब्दश्रवणानन्तरं जायमानज्ञानोत्तरं शब्दयामीत्यनुव्यवसायोत्पत्त्या तद्विषयतया सिद्धशाब्दत्वाख्यजातिविशेषावच्छिन्नकरणतया शाब्दप्रमाणसिद्धिः। एवमुपमिनोमीत्यनुव्यवसायबलादुपमानस्यापि प्रमाणान्तरत्वमिति वदन्ति। तन्न—उक्तानुव्यवसायैरनुमितित्वादिजातिसिद्धावपि तासां चाक्षुषत्वादिवत्प्रत्यक्षत्वव्याप्यतासम्भवेनानुमानादीनां प्रत्यक्षान्तर्भावाविरोधात्। न चानुमित्यादीनां प्रत्यक्षविशेषत्वेऽनुमित्यनन्तरं साक्षात्करोमीत्यादिप्रत्ययापत्तिरिति वाच्यम्—सुरभिश्चन्दनमित्यादिज्ञानानां प्रत्यक्षत्वेऽपि तदनन्तरं सौरभं साक्षात्करोमीत्यादिप्रतीत्यभाववदनुमित्यनन्तरमपि वह्निं साक्षात्करोमीत्यादिप्रतीत्यभावोपपत्तेः। तादृशप्रतीतौ लौकिकप्रत्यक्षस्यैव विषयताकल्पनासम्भवात्। किं चानुमितिसामग्रीकाले प्रत्यक्षवारणायानुमितिसामग्र्याः प्रत्यक्षं प्रति प्रतिबन्धकत्वं कल्पनीयमनुमितित्वादीनां प्रत्यक्षत्वव्याप्यत्वे तद्दशायामनुमित्यात्मकप्रत्यक्षस्यैवोत्पत्त्या तदकल्पनेन लाघवं च। अतो विशदज्ञानस्य प्रत्यक्षत्वमयुक्तमेव।

ननु किमिदं वैशद्यं? न च वर्णसंस्थानादिनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताकत्वमेव वैशद्यं। उक्तं च लघीयस्त्रये—

अनुमानाद्यतिरेकेण विशेषप्रतिभासनम्।
तद्वैशद्यं मतं बुद्धेरवैशद्यमतः परम्॥ इति॥

अनुमानादिभ्योऽतिरेकेणाधिक्येन यद्विशेषाणां नियतदेशकालसंस्थानाद्यर्थाकाराणां प्रतिभासनं तद्बुद्धेर्वैशद्यमित्यर्थ इति वाच्यम्—वर्णसंस्थानादिविशिष्टो घट इति शब्दजन्यबोधे निरुक्तलक्षणसत्त्वेनातिव्याप्तेः। न च ज्ञानान्तराप्रयोज्याया वर्णसंस्थानादिप्रकारता तन्निरूप-

कत्वं वैशद्यं, शाब्दबोधीयवर्णादिप्रकारता च पदजन्यपदार्थोपस्थितिप्रयोज्येति नातिव्याप्तिः प्रत्यक्षनिरूपितवर्णादिप्रकारताया इन्द्रियप्रयोज्यत्वेऽपि ज्ञानान्तराप्रयोज्यत्वात्तत्र लक्षणसङ्गतिरिति वाच्यम्—तथा सति प्रकारतायां ज्ञानान्तराप्रयोज्यत्वनिवेशेनैव व्याप्तिज्ञानप्रयोज्यविषयताकानुमानादेर्वारणसम्भवे प्रकारतायां वर्णादिनिष्ठत्वनिवेशवैफल्यात्। तन्निवेशेऽनुमानज्ञानादीनां स्वांशे वैशद्यानुपपत्तेश्च, स्वांशे वर्णादिप्रकारकत्वाभावात्। अतो ज्ञानान्तराप्रयोज्यविषयताकत्वमेव निष्कृष्टं वैशद्यं। तदेव च लघीयस्त्रयकारिकाविवक्षितमित्यभिप्रेत्याह—

**प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम् ॥ ४॥**

अस्य गोर्द्वितीयेन भवितव्यमित्युक्ते गौरेव द्वितीयोऽन्विष्यते। अश्वादीनां द्वितीयत्वाविशेषेऽप्यश्वो गर्धभश्च नान्विष्यते। अतो द्वितीयादिपदानां सजातीयद्वितीयादिबोधकत्ववत् अव्यवधानपदस्यापि सजातीयाव्यवधानबोधकत्वात्, प्रतीत्यन्तराव्यवधानमेवाव्यवधानपदेनोच्यते। अत एवोपर्युपरि स्वर्गपटलानीत्यत्र वीप्सयाऽव्यवधानबोधानुपपत्तिः। स्वर्गपटलानां मध्ये देशव्यवधानसत्त्वादित्याशङ्क्य सजातीयाव्यवधानस्य विवक्षितत्वान्नानुपपत्तिरिति समाहितं। तथा च प्रतीत्यन्तराव्यवधानेन भासनं प्रतीत्यन्तराप्रयोज्यविषयताकत्वं ज्ञानस्य वैशद्यमित्यर्थः। अत्र विषयतावत्त्वमात्रं प्रत्यक्षलक्षणभूतं वैशद्यमित्युक्ते परोक्षज्ञानेऽतिव्याप्तिरतः प्रतीत्यन्तराप्रयोज्येति। वह्न्यादिनिष्ठानुमितिविषयताया व्याप्तिज्ञानीयविषयताप्रयुक्तत्वाच्छाब्दबोधविषयतायाः पदार्थोपस्थितिविषयताप्रयुक्तत्वात् स्मृतिविषयताया अनुभवविषयताप्रयुक्तत्वेन प्रतीत्यन्तराप्रयोज्यत्वाभावान्नातिव्याप्तिः। अप्रयोज्यविषयताकत्वमित्युक्तेऽसम्भवः। प्रत्यक्षविषयताया अपीन्द्रियप्रयोज्यत्वादतः प्रतीत्यन्तरेति। प्रतीत्यप्रयोज्यविषयताकत्वनिवेशेप्यसम्भवः प्रत्यक्षविषयतायाः स्वात्मकप्रतीतिप्रयोज्यत्वादतः अन्तरेति। न चैवमीहादिज्ञानेऽव्याप्तिः तदीयविषयताया अवग्रहादिप्रयोज्यत्वेन प्रतीत्यन्तराप्रयोज्यविषयताकत्वाभावादिति वाच्यम्—भिन्नभिन्नेन्द्रियव्यापारादेवावग्रहेहादीनामुत्पत्त्या ईहादिकं प्रत्यवग्रहादेर्हेतुत्वाभावात्। ईहादाववग्रहादेर्हेतुत्वेऽपीहाविषयतायामवग्रहविषयतायाः कारणत्वाभावेन विषयत्वान्तराप्रयोज्यविषयताकत्वस्यैव वैशद्यरूपतासम्भवाच्च। उक्तं च मार्तण्डे—

अपरापरेन्द्रियव्यापारादेवावग्रहादीनामुत्पत्तेस्तत्र तदपेक्षत्वासिद्धेरेकमेव-चेदं विज्ञानमवग्रहाद्यतिशयवदपरापरचक्षुर्व्यापारादुत्पन्नं सत्स्वतन्त्रतया स्वविषये प्रवर्तत इति प्रमाणान्तराव्यवधानमत्रापि प्रसिद्धमेव। अनुमानादिप्रतीतिस्तु लिङ्गादिप्रतीत्यैव जनिता सती प्रवर्तत इत्यव्यवधानेन प्रतिभासनाभावान्न प्रत्यक्षतेति। अनुमित्यादिविषयताया व्याप्त्यादिज्ञानविषयताप्रयोज्यत्वादीहादिविषयतायाश्चेन्द्रियप्रयोज्यत्वेन विषयत्वान्तराप्रयोज्यत्वाभावान्नानुमित्यादौ विषयत्वान्तराप्रयोज्यविषयताकत्वरूपवैशद्यस्यातिव्याप्तिरीहादावव्याप्तिर्वेति भावः। अत्र लघुवृत्तौ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यमिति सूत्रं पठित्वा व्याख्यातम्। तत्र प्रतीत्यन्तरेत्यंशस्य विशेषवत्तया वेत्यंशस्य बृहद्वृत्तावपठितत्वाच्च तदंशद्वयं प्रक्षिप्तमिति बोध्यम्।

अत्र नैयायिकाः—साक्षात्करोमीति प्रतीतिविषयीभूतं लौकिकविषयतावत्त्वमेव वैशद्यम्। लौकिकसन्निकर्षदोषे तदन्यतरप्रयोज्यविषयता लौकिकविषयता। [1]लौकिकसन्निकर्षाश्च संयोगसंयुक्तसमवायादयः। चक्षुस्संयुक्तघटादौ घटं साक्षात्करोमीति प्रत्ययात्। शुक्तिरूप्यादौ लौकिकसन्निकर्षविरहेऽपि रजतं साक्षात्करोमीति प्रतीते रजतादावपि तादृशविषयतोपपत्तये दोषनिवेश इति वदन्ति। तन्न—ईश्वरप्रत्यक्षे निरुक्तविषयताविरहेणाव्याप्तेः। जन्यप्रत्यक्षलक्षणाङ्गीकारेऽपि भवदभिमतोपनीतप्रत्यक्षयोगिप्रत्यक्षादावव्याप्तेः। लौकिकप्रत्यक्षत्वाङ्गीकारे चेदं रजतमिति भ्रमेऽतिव्याप्तेः। न च प्रमात्वे सति लौकिकविषयतावत्त्वं लौकिकप्रत्यक्षलक्षणमिति वाच्यम्—अयं घट इत्यादिचाक्षुषप्रत्यक्षेऽव्याप्तेः। चक्षुषः प्राप्यकारित्वाभावेन तत्प्रत्यक्षस्य चक्षुस्सन्निकर्षाजन्यतया तत्प्रयोज्यविषयताविरहात्। चक्षुषः प्राप्यकारित्वे गोलकोपरि पतिततृणादिप्रत्यक्षजनकत्वापत्तिः। त्वगिन्द्रियस्य स्वोपरि पतितपदार्थग्राहकत्वदर्शनात्। एवं शाखाचन्द्रमसोस्तुल्यकालग्रहणानुपपत्तिः। गतिक्रमेण प्राप्यग्रहणे प्रथमतश्शाखायास्तदनन्तरं च चन्द्रस्य ग्रहणं स्यादिति युगपद्ग्रहणानुभवविरोधः। किं च—चक्षुषः प्राप्यकारित्वे स्वापेक्षयाऽधिकपरिमाणवत्पर्वतादिग्राहकत्वानुपपत्तिः। प्राप्यकारिणस्त्वगिन्द्रियस्य स्वसम्बद्धप्रदेशमात्रग्राहकत्वदर्शनात्। अतश्चक्षुषः प्राप्यकारित्वमयुक्तमिति।

---

1 लौकिकसन्निकर्षाच.

अत्र नैयायिकाः—चक्षुः प्राप्यकारि, इन्द्रियत्वात्त्वगिन्द्रियवदित्यनुमानेन चक्षुषः प्राप्यकारित्वं सिध्यति। न च मनसा व्यभिचारः। तस्यापि स्वसंयुक्तात्मतत्समवेतसुखादिग्राहकत्वेन प्राप्यकारित्वात्। न च चक्षुषः प्राप्यकारित्वे चक्षुर्गताञ्जनादिग्रहणार्थमञ्जनाद्यपेक्षानुपपत्तिरिति वाच्यम्—दीपस्य प्रभाद्वारा प्राप्तार्थप्रकाशकत्वेऽपि दीपकलिकान्तर्गताऽग्राहकत्ववद्रश्मिद्वारा चक्षुषः प्राप्यकारित्वेऽपि चक्षुर्गताञ्जनाद्यग्राहकत्वोपपत्तेः। शाखाचन्द्रमसोस्तुल्यकालग्रहणं चासिद्धम्। तेजसो लाघवातिशयेन वेगातिशयदर्शनेन शाखाचन्द्रग्रहणयोः कालसन्निकर्षेणोत्पत्त्या शतपत्रदलच्छेदयौगपद्यभ्रमवद्यौगपद्यभ्रमोपपत्तेः। चक्षुषः स्वल्पत्वेऽपि तत्प्रसृतरश्मीनां विपुलत्वेन पर्वतादिग्राहकत्वोपपत्तेः। चक्षुषः तेजस्त्वेन रश्मिमत्वे बाधकविरहात्। न च चक्षुषस्तेजस्त्वमसिद्धं चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकत्वात्प्रदीपवदित्यनुमानेन तेजस्त्वसिद्धेः। अत्र रूपग्राहकत्वादित्येवोक्ते मनसि व्यभिचारः, अतो रूपस्यैवेति। रूपेतराग्राहकत्वे सति रूपग्राहकत्वस्य तदर्थत्वान्मनसि रूपेतरग्राहके व्यभिचारः। तावन्मात्रोपादाने स्वरूपासिद्धिः। चक्षुषो घटादिग्राहकत्वेन रूपेतराग्राहकत्वाभावादतो मध्यान्तम्। तथा च रूपादिपञ्चमध्यघटकीभूतं यद्रूपेतरं रसादि तदग्राहकत्वे सति रूपग्राहकत्वादित्यर्थः। रसाग्राहकत्वे सति रूपग्राहकत्वात्। गन्धाग्राहकत्वे सति रूपग्राहकत्वादित्यादिहेतौ तात्पर्यं। तेन हेतुघटकपदानां व्यभिचारवारकतयैव सार्थक्यस्य वक्तव्यतया मध्यान्तस्य व्यभिचारवारकत्वेऽपि न क्षतिः, मध्यान्तभागस्यैवानिवेशादिति वदन्ति। तन्न—चक्षुषस्तेजस्त्वरश्मित्वयोः स्वीकारेऽन्धकारादावपि तेजोन्तरनिरपेक्षतया घटादिग्राहकत्वापत्तेः। रश्मिद्वारा घटादिविषयदेशं गत्वा घटादिप्रत्यक्षजनकत्वरूपप्राप्यकारित्वासम्भवात्। उक्ततेजस्त्वसाधकानुमाने चक्षुःपदेन गोलकस्य विवक्षायां बाधः। नैयायिकैरपि तस्य तेजस्त्वानङ्गीकारात्, तदतिरिक्तचक्षुषश्चानुमानात्पूर्वमसिद्ध्या आश्रयासिद्धिः। आलोकस्य रूपादिप्रत्यक्षप्रतिबन्धकतमोनिरासकत्वमेव, न तु रूपादिग्रहे कारणत्वमित्यस्य वक्ष्यमाणतया दृष्टान्ते प्रदीपे साधनवैकल्यं च। एवं चक्षुर्न तैजसं भास्वररूपरहितत्वात्, उष्णस्पर्शरहितत्वाद्वा घटादिवदित्यनुमानेन तेजस्त्वसाधकानुमानस्य सत्प्रतिपक्षता। चक्षुषः प्राप्यकारित्वे स्फटिकाद्यन्तरितार्थग्रहणानुपपत्तिश्चेति। तच्च प्रत्यक्षं

द्विविधं—मुख्यसांव्यवहारिकभेदादिति विभागं मनसि निधाय सांव्यवहारिकप्रत्यक्षस्योत्पादिकां सामग्रीं तद्भेदं च प्राह—

इन्द्रियानिन्द्रियनिमित्तं देशतस्सांव्यवहारिकम् ॥ ५ ॥

अत्र विशदं प्रत्यक्षमित्यनुवर्तते। तत्र समीचीनोऽबाधितः प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः प्रयोजनमस्येति सांव्यवहारिकम्। सफलप्रवृत्तिजनकतावच्छेदकविषयताकमित्यर्थः। न चैवमबाधितप्रवृत्त्यादिजनकतावच्छेदकविषयताकस्यानुमानादेरपि सांव्यवहारिकपदेन बोधापत्तिरिति वाच्यम्-पङ्कजादिपदवत्सांव्यवहारिकपदस्य प्रत्यक्षविशेषे रूढेरपि स्वीकारात्। तथा च सांव्यवहारिकं प्रत्यक्षमिति लक्ष्यनिर्देशः। देशतो विशदमिति लक्षणं। ज्ञानान्तरविषयत्वाप्रयोज्यकतिपयपदार्थनिष्ठविषयताकत्वम्। सर्वविषयकत्वाभावे सति [1]विषयत्वान्तराप्रयोज्यविषयताकत्वं सांव्यवहारिकप्रत्यक्षस्य लक्षणं [2]पर्यवसन्नम्। अत्र मुख्यप्रत्यक्षवारणाय सत्यन्तं। अनुमानादिवारणाय विशेष्यं। यद्यप्यनुमानादीनामपि स्वांशे देशतो विशदत्वादतिव्याप्तिर्दुर्वारा। तथाप्यनुमानादीनामपि स्वांशे सांव्यवहारिकप्रत्यक्षत्वस्येष्टत्वान्न तत्रातिव्याप्तिः। प्रत्यक्षपरोक्षविभागस्तु विषयांशे—प्रत्यक्षपरोक्षत्वाभ्यामेव विषयांशे। सांव्यवहारिक[3]प्रत्यक्षलक्षणं तु सर्वविषयकत्वाभावे सति विषयत्वान्तराप्रयोज्यस्वभिन्ननिष्ठविषयताकत्वं बोध्यम्। तेनानुमानादिज्ञानस्य विषयत्वान्तराप्रयोज्यविषयनिष्ठविषयताकत्वेऽपि स्वभिन्ननिष्ठतादृशविषयताकत्वाभावान्नातिव्याप्तिरिति वा बोध्यम्। सांव्यवहारिकप्रत्यक्षस्य कारणकथनद्वारेण विभागसूचनायेन्द्रियानिन्द्रियनिमित्तमित्युक्तं। इन्द्रियजन्यं मनोजन्यं चेति सांव्यवहारिकप्रत्यक्षं द्विविधमित्यर्थः। यद्यपीन्द्रियजन्यप्रत्यक्षस्यापि मनोजन्यत्वान्मनोजन्यत्वेन्द्रियजन्यत्वाभ्यां प्रत्यक्षविभागो न युक्तः। तथापीन्द्रियाजन्यत्वे सति मनोजन्यत्वरूपमनोमात्रजन्यत्वेन्द्रियजन्यत्वाभ्यां विभजनान्नानुपपत्तिः। तत्रेन्द्रियं द्रव्यभावेन्द्रियभेदात् द्वेधा। तत्र द्रव्येन्द्रियं गोलकादिपरिणामविशेषपरिणतरूपरसगन्धस्पर्शवत्पुद्गलात्मकं। पृथिव्यप्तेजोवायूनामपि पुद्गलद्रव्यपरिणामत्वेन द्रव्यान्तरत्वाभा-

---

[1] विषयत्वाप्रयोज्य (क). [2] पर्यवसानं (क). [3] प्रत्यक्षणात् (क).

वात्। पृथिवीजलादीनां द्रव्यान्तरत्वे जलादेर्मुक्ताफलाद्यात्मना परिणामानुपपत्तेः। विवेचयिष्यते चेदं विषयपरिच्छेदे। लब्ध्युपयोगात्मकं भावेन्द्रियं। आवरणक्षयोपशमप्राप्तिरूपार्थग्रहणशक्तिर्लब्धिः। पिशाचपरमाण्वादीनां प्रत्यक्षत्ववारणायोक्तलब्धेः प्रत्यक्षकारणत्वावश्यकत्वात् रूपादिग्रहणाभिमुख्यरूपव्यापार उपयोगः। अन्यासक्तचेतसस्सन्निहितरूपादिप्रत्यक्षवारणाय तत्कारणत्वावश्यकत्वात्।

अत्र नैयायिकाः--घ्राणेन्द्रियं पार्थिवं, रसाग्राहकत्वे सति गन्धग्राहकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। अत्र मनसि व्यभिचारवारणाय सत्यन्तं। गगनादौ व्यभिचारवारणाय विशेष्यं। एवमग्रेऽपि। रसनं जलीयं, रूपाग्राहकत्वे सति रसग्राहकत्वात्, सक्तुरसाभिव्यञ्जकनवशरावोदकवत्। चक्षुस्तैजसं, रसाग्राहकत्वे सति रूपग्राहकत्वात्, प्रदीपवत्। स्पर्शनं वायवीयं, रूपाग्राहकत्वे सति स्पर्शग्राहकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्। श्रोत्रं स्वग्राह्यगुणसजातीयगुणवत्, इन्द्रियत्वाच्चक्षुरादिवदित्यनुमानैर्घ्राणादीनां पार्थिवत्वादिसिद्धेः पौद्गलिकत्वमयुक्तमिति वदन्ति। तन्न-प्रथमानुमानगतहेतोस्तैलाभ्यक्तपुरुषगतगन्धाभिव्यञ्जकैरादित्यरश्मिभिर्व्यभिचारात्। द्वितीयानुमानगतहेतोर्जलीयत्वाभाववति लवणे व्यभिचारात्। तृतीयानुमानस्य पूर्वमेव निरस्तत्वात्। चतुर्थानुमानहेतोः सलिलशीतस्पर्शाभिव्यञ्जकेषु कर्पूरेषु व्यभिचारः। दृष्टान्तश्च साधनविकलः व्यजनपवनस्य [1] वेगेन शरीरोपरि निपततः तत्संयुक्तसूक्ष्मस्वेदसलिलकणानां शरीरान्तःप्रवेशहेतुत्वेऽपि स्पर्शग्राहकत्वाभावात्। प्रविष्टानां च सलिलानां शैत्यस्यान्तर्गतत्वगिन्द्रियप्रवेशेन स्फुटमवगमात्। पञ्चमानुमाने इन्द्रियत्वेन भवदभ्युपगते मनसि व्यभिचारः। न च मनोभिन्नत्वस्यापि हेतुकोटौ निवेशान्न व्यभिचार इति वाच्यम्—तथापि शब्दे नभोगुणत्वस्य निराकरिष्यमाणतयाऽनुमानस्य बाधितत्वादिति। उक्तं सांव्यवहारिकप्रत्यक्षं चतुर्विधं-अवग्रहेहावायधारणाभेदात्। तत्र चक्षुराद्युन्मीलनानन्तरं सत्तालोचनरूपदर्शनपूर्वकं मनुष्यत्वादिसामान्यधर्मप्रकारकं ज्ञानमवग्रहः। तदनन्तरं चैत्रेण भवितव्यमित्याकारकं चैत्रत्वादिविशेषधर्मनिष्ठोत्कटैकतरकोटिताख्यविषयताकं ज्ञानमीहा। तदनन्तरं चैत्र एवायमित्याकारकं [2] चैत्रान्य-

---

[1] प्रवेशने (क). [2] चैत्रान्यदभाव (क).

त्वाभावविशिष्टचैत्रत्वप्रकारकमवधारणात्मकज्ञानमवायः। कालान्तरस्मरण हेतुसंस्कारजनकतावच्छेदकविषयताकत्वे सत्यवधारणात्मकज्ञानं धारणा। अवायवारणाय सत्यन्तं। तत्रावग्रहो द्विविधः- अर्थावग्रहो व्यञ्जनावग्रहश्चेति। तत्र द्वित्रादीन्द्रियावयवसन्निकर्षजन्यमस्फुटार्थग्रहणं व्यञ्जनावग्रहः। [1] अल्पेन्द्रियावयवसन्निकर्षजन्यं व्यक्तार्थग्रहणमर्थावग्रहः। नवशरावपतिताल्पतोयबिन्दूना[2]मस्फुटाद्दताजनकत्वस्य बहुतोयबिन्दूनां [3]स्फुटाद्दताजनकत्वस्य च दर्शनेनाल्पेन्द्रियावयवसन्निकर्षवदिन्द्रियावयवसन्निकर्षयोः स्फुटास्फुटग्रहणहेतुत्वोपपत्तेः। न च [4] बह्विन्द्रियावयवसन्निकर्षजन्यमर्थावग्रह इति कुतो नोच्यत इति वाच्यम्—चक्षुर्मनसोरप्राप्यकारितया व्यञ्जनावग्रहजनकत्वाभाववदर्थावग्रहजनकत्वस्याप्यभावापत्तेः। न च चक्षुर्मनसोरप्यस्पष्टज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषत्वाद्व्यञ्जनावग्रहजनकत्वं, स्पष्टज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषाच्चार्थावग्रहहेतुत्वमिति चक्षुर्मनसोरप्यवग्रहद्वयजनकत्वं सम्भवतीति वाच्यम्—चक्षुर्मनसोरप्राप्यकारितयाऽप्राप्तेरविशेषेण योग्यताविशेषस्याप्ययोगेन सर्वदा स्पष्टावग्रहस्यैव जननेन व्यञ्जनावग्रहजनकत्वासम्भवात्। उक्तं च श्लोकवार्त्तिके—

नवव्यञ्जग्रहो नैव चक्षुषानिन्द्रियेण च।
अप्राप्यकारिणा तेन स्पष्टावग्रहहेतुना॥
प्राप्यकारीन्द्रियं स्वार्थे प्राप्तिभेदाद्धि कुत्रचित्।
तद्योग्यताविशेषाच्च स्पष्टावग्रहकारणम्॥
यथा नवशरावादौ द्वित्राद्यास्तोयबिन्दवः।
अव्यक्ता[5]माद्दतां क्षिप्ताः कुर्वन्ति प्राप्यकारिणः॥
पौनःपुन्येन निक्षिप्ता व्यक्तां तामेव कुर्वते।
तत्प्राप्तिभेदतस्तद्वदिन्द्रियाण्यप्यवग्रहम्॥
अप्राप्यकारिणी चक्षुर्मनसी कुरुतः पुनः।
व्यक्तामर्थपरिच्छित्तिमप्राप्तेरविशेषतः॥
यथाऽयस्कान्तपाषाणः शल्याकृष्टिं स्वशक्तितः।
करोत्यप्राप्यकारीति व्यक्तामेव शरीरतः॥ इति॥

---

[1] अतीन्द्रियावयव (क). [2] अस्फुटावृताजनकत्वस्य (ख). [3] स्फुटावृताजनकत्वस्य(ख).
[4] भवदिन्द्रियावयव (क). [5] वाद्दतां (क).

यत्तु वीरणन्दिसिद्धान्तिभिरुक्तम्—
प्राप्ताप्राप्तार्थबोधावग्रहौ व्यञ्जनार्थयोः ।
रसरूपपरिज्ञाने रसनानेत्रयोर्यथा ॥ इति ॥

तदप्युदाहृतश्लोकवार्त्तिकानुरोधेनैव योज्यम् । यथा श्रुतेः सन्निकर्ष-जन्यत्वतदजन्यत्वाभ्यां व्यञ्जनार्थावग्रहयोर्भेदे ईहादेरपि तथा भेदप्रसङ्गात् रसनादीनामर्थावग्रहजनकत्वानुपपत्तेश्चेत्यवधेयम् । ननु इन्द्रियानिन्द्रिय-निमित्तमित्ययुक्तमात्मादेरपि प्रत्यक्षकारणत्वस्य सत्त्वेन तस्याभिधातु-मुचितत्वात् । न चात्र प्रत्यक्षत्वावच्छिन्नकारणस्यैवाभिधानं, आत्मगत-गुणपर्यायकारणत्वेनात्मन आत्मधर्मत्वावच्छिन्नं प्रत्येव कारणत्वात् तत्प्रत्यक्षत्वावच्छिन्नकारणत्वाभावादिति वाच्यम् । एवमप्यर्थस्या-लोकस्य चात्राभिधानस्य दुर्वारत्वात् । विषयतासम्बन्धेन सांव्यवहारिक-प्रत्यक्षं प्रत्येव तादात्म्येनार्थस्य कारणत्वात्, केवलप्रत्यक्षेऽतीताद्यर्था-नामपि भानेन तत्र तादात्म्येनार्थस्य हेतुत्वासम्भव इति तद्वारणाय सांव्यवहारिकेति । एवं विषयतासम्बन्धेन चाक्षुषं प्रति संयोगादिना आलोकस्य कारणत्वात् । अन्यथा अन्धकारस्थघटादेरपि प्रत्यक्षापत्ते-रतोऽर्थालोकावप्यत्र कारणत्वेन वक्तव्यावित्यत आह—

## नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥ ६ ॥

परिच्छेद्यत्वात् प्रत्यक्षविषयत्वात् । तमसो यथा प्रत्यक्षविषयत्वात्त-त्कारणत्वं नास्ति, एवमर्थालोकयोरपि प्रत्यक्षविषयत्वात्तत्कारणत्वं न सम्भवतीत्यर्थः । प्रत्यक्षाविषयस्यैव चक्षुरादेः प्रत्यक्षकारणत्वदर्शनेन तद्विषयस्य कारणत्वं न सम्भवति । अन्यथा प्रत्यक्षस्य स्वयंप्रकाशत्वेन प्रत्यक्षस्यापि प्रत्यक्षहेतुताप्रसङ्गादिति भावः । ननु विषयतासम्बन्धेन सांव्यवहारिकप्रत्यक्षं प्रति तादात्म्येन विषयस्य विषयतासम्बन्धेन चाक्षुषं प्रति संयोगेनालोकस्य च हेतुत्वमावश्यकम् । विषयसत्त्वे सांव्यवहारिकप्रत्यक्षसत्त्वम् । तदभावे तदभावः । आलोकसत्त्वे चाक्षुष-सत्त्वम्, तदभावे तदभाव इत्यन्वयव्यतिरेकयोरुभयत्र सत्त्वात् । यत्र यन्निरूपितान्वयव्यतिरेकवत्त्वं, तत्र तन्निरूपितकारणत्वमिति नियमात् । अन्यथा इन्द्रियादेरपि प्रत्यक्षं प्रति कारणत्वानुपपत्तेरित्यत आह—

**तदन्वयव्यतिरेकानुविधानाभावाच्च**
**केशोण्डुकज्ञानवन्नक्तञ्चरज्ञानवच्च ॥ ७ ॥**

प्रत्यक्षे विषयस्य कारणत्वं न सम्भवति। केशोण्डुकरूपार्थाभावेऽपि विषयतासम्बन्धेन प्रत्यक्षोत्पत्त्या व्यभिचारात्। आलोकस्यापि चाक्षुषं प्रति हेतुत्वं न सम्भवति, नक्तञ्चराणां मार्जारादीनामालोकाभावेऽपि चाक्षुषोत्पत्तेरित्यर्थः। न च नयनकेशविशेष्यकं केशोण्डुकत्वप्रकारकज्ञानमेव केशोण्डुकज्ञानम्, यथा शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानमेवेदं रजतमिति ज्ञानम्, एवं च विषयतासम्बन्धेन केशोण्डुकप्रत्यक्षे तादात्म्येन नयनकेशानामेव कारणत्वान्न व्यभिचार इति वाच्यम्—नयनकेशानामेव तद्ज्ञानविशेष्यत्वे तत्केशाधिकरणप्रदेश एव [1] तद्ग्रहणापत्तेः। गगनतलावलम्बितया पुरोवस्थिततया च केशोण्डुकविषयकज्ञानस्यानुभवसिद्धस्यानुपपत्तेः। नयनकेशरहितस्य कामलिन[2]स्तद्ग्रहणानुपपत्तेश्च। इदं केशोण्डुकमिति प्रत्यक्षस्य विशेष्यतासम्बन्धेन केशेष्विव प्रकारतासम्बन्धेन केशोण्डुकेऽप्युत्पत्त्या तत्र तादात्म्येन विषयाभावेन व्यभिचारस्य दुष्परिहरत्वाच्च। एवं स्थाणुर्वा पुरुषो वेति स्थाणुविशेष्यकसंशयस्थलेऽपि पुरुषत्वरूपविषयस्याभावाद्व्यभिचारः। न च संशयविपर्यययोर्दर्शनस्मरणकारणकत्वेन प्रत्यभिज्ञारूपत्वात्प्रत्यक्षत्वाभावात्प्रत्यक्षे विषयस्य कारणत्वे व्यभिचारो न सम्भवतीति वाच्यम्-स्याद्वादिमते संशयविपर्यययोः प्रत्यभिज्ञात्वेऽपि नैयायिकादिभिः प्रत्यक्षत्वाङ्गीकारात्तन्मतमवलम्ब्यैव व्यभिचारोद्धाटनात्। न च भ्रमान्यप्रत्यक्षत्वावच्छिन्नं प्रति विषयस्य कारणत्वाङ्गीकारान्नैयायिकादिमतेऽपि व्यभिचारो न सम्भवतीति वाच्यम्—तथाप्यन्यत्र क्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसम्भवे तद्भिन्नस्यान्यथासिद्धतया भ्रमस्थले क्लृप्तनियतपूर्ववृत्तिभिरिन्द्रियादिभिरेव [3] भ्रमस्यापि सम्भवेनार्थस्यान्यथासिद्धेर्दुर्वारत्वात्। अन्यथा घटसामान्ये रासभस्य व्यभिचारितया कारणत्वासम्भवेऽपि यादृशघटेन व्यभिचारस्तद्घटे कारणताया दुर्वारत्वात्। तस्मात्प्रत्यक्षे न विषयस्य कारणत्वं, नाप्यालोकस्य चाक्षुषत्वावच्छिन्नं प्रति कारणता, तमःप्रत्यक्षे व्यभिचारात्। आलोकं विनापि नीलं तम इति चाक्षुष-

---

[1] तद्भ्रमापत्तेः (ख) [2] तादृशभ्रमानुपपत्तेश्च (ख). [1] भ्रमान्यज्ञानस्यापि (ख).

प्रत्यक्षस्य सर्वानुभवसिद्धत्वात् । न च द्रव्यनिष्ठविषयतासम्बन्धेन चाक्षुषं प्रति संयोगेनालोकस्य कारणत्वात् न व्यभिचारः, तमस आलोकाभावरूपत्वेन द्रव्यत्वाभावादिति वाच्यम्—तमसो नीलरूपात्मकगुणवत्वेन बहलत्वविरलत्वादिपर्यायवत्वेन गुणपर्ययवद्द्रव्यमित्युक्तद्रव्यलक्षणाक्रान्तत्वेन द्रव्यत्वावश्यकत्वात् । न च नीलं तम इति प्रतीतेर्भ्रमत्वं—उत्तरकालेन नीलं तम इति बाधज्ञानाभावात् । बाधज्ञानाभावेऽपि भ्रमत्वाङ्गीकारे आलोके रूपादिप्रतीतेर्भ्रमत्वमभ्युपगम्यालोकस्य विनिगमनाविरहेण तमोभावत्वं, न द्रव्यान्तरत्वमित्यस्यापत्तेर्दुर्वारत्वात् । अतस्तमसो द्रव्यत्वात्तन्निष्ठविषयतासम्बन्धेन चाक्षुषोत्पत्तौ संयोगेनालोकस्य हेतुत्वे व्यभिचारो दुष्परिहरः । एवमालोकचाक्षुषेऽपि व्यभिचारः । आलोके आलोकसंयोगाभावात् ।

अत्र नैयायिकाः—तमो भिन्नद्रव्यनिष्ठविषयतासम्बन्धेन द्रव्यचाक्षुषं प्रत्यालोकसंयोगस्य हेतुत्वाङ्गीकारात्, न तमःप्रत्यक्षे व्यभिचारः । नाप्यालोकप्रत्यक्षे व्यभिचारः, आलोकानुयोगिकतत्प्रतियोगिकोभयसाधारणालोकसंयोगत्वेन हेतुत्वाङ्गीकारादालोके आलोकप्रतियोगिकसंयोगाभावेप्यालोकानुयोगिकवायुप्रतियोगिकसंयोगसत्त्वात् । आलोकसंयोगश्च चक्षुस्संयोगावच्छेदकदेशावच्छिन्नो ग्राह्यः । तेन भित्त्यादेर्बहिर्देशावच्छेदेनालोकसंयोगवतो गृहान्तरान्धकारस्थस्य चक्षुस्संयोगेऽपि न प्रत्यक्षम् । न चान्धकारस्य चक्षूरश्मिप्रसरणप्रतिबन्धकत्वात्तादृशभित्तौ गृहान्तश्चक्षुस्संयोग एव न सम्भवतीति वाच्यं—अन्धकारपरिवृतस्य पुंसो दूरे प्रदीपसमीपस्थघटादेः प्रत्यक्षानुपपत्त्या अन्धकारस्य चाक्षुषरश्मिप्रसरप्रतिबन्धकत्वकल्पनाया असम्भवादिति वदन्ति । तन्न—मार्जारादिचाक्षुषे व्यभिचारस्यैवमपि दुर्वारत्वात् । न च मानुषप्रत्यक्षे आलोकसंयोगस्य हेतुत्वान्नोक्तव्यभिचार इति वाच्यम्--अञ्जनादिसंस्कृतचक्षुषां मनुष्याणामप्यन्धकारे चाक्षुषोत्पत्त्या व्यभिचारस्य दुर्वारत्वात् । न चालोकस्य चाक्षुषप्रत्यक्षहेतुत्वाभावे घटादिचाक्षुषार्थं प्रदीपाद्युपादानमनर्थकं स्यादिति वाच्यम्—विषयतासम्बन्धेन चाक्षुषं प्रति तमसस्संयोगेन प्रतिबन्धकतया तन्निरासार्थमेव प्रदीपाद्युपादानोपपत्तेः । प्रतिबन्धकनिरासकस्यापि चाक्षुषं प्रति हेतुत्वे काण्डपटाद्यपसरणहेतुभूतहस्तादेरपि चाक्षुषहेतुताप्रसङ्गात् । अत आलोकस्य चाक्षुषहेतुत्वमप्रामाणिकम् ॥

ननु प्रत्यक्षज्ञानमर्थजन्यमर्थप्रकाशकत्वात्। यदर्थजन्यं न भवति तदर्थप्रकाशकं न भवति, यथा तम इत्यनुमानात्प्रत्यक्षे विषयस्य कारणत्वं सिध्यति। न च परोक्षज्ञाने व्यभिचारः, अर्थविषयकविशदप्रकाराहेतुत्वस्य विवक्षितत्वेन परोक्षज्ञाने व्यभिचाराप्रसक्तेरेवं प्रत्यक्षज्ञानमालोकजन्य-मालोकप्रकाशकत्वादित्यनुमानेनालोकजन्यत्वमपि सिध्यतीत्यत आह—

अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥ ८ ॥

ताभ्यामर्थालोकाभ्यामजन्यमप्यर्थालोकयोः प्रकाशकं, यथा प्रदीपः। अर्थालोकाजन्योऽपि तयोः प्रकाशकस्तद्वदित्यर्थः। तथा चार्था लोक-जन्यत्वाभाववति प्रदीपेऽर्थालोकप्रकाशकत्वसत्त्वाद्व्यभिचार इति भावः॥

अत्र नैयायिकाः—विषयतासम्बन्धेन लौकिकप्रत्यक्षं प्रति तादा-त्म्येन विषयस्य कारणत्वमावश्यकं। अन्यथा घटतद्रूपादिप्रत्यक्षकाले तद्गतगुरुत्वादीनामपि प्रत्यक्षापत्तेः। चक्षुस्संयुक्तसमवायस्य रूपादाविव गुरुत्वादावपि सत्त्वात्। उक्तकारणत्वस्वीकारे च गुरुत्वे तादात्म्येन विषयाभावादेव न प्रत्यक्षापत्तिः। विषयत्वस्यातीन्द्रियव्यावृत्तत्वात्। न च विषयतया प्रत्यक्षं प्रति गुरुत्वादीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वा-ङ्गीकारान्नापत्तिरिति वाच्यम्—अनन्तप्रतिबन्धकत्वकल्पनापेक्षया विषय-त्वेनैककारणत्वकल्पनस्योचितत्वात्। एवं विषयत्वस्याकारणत्वे पटादौ घटादिप्रत्यक्षस्य विषयतासम्बन्धेनोत्पत्त्यापत्तिरपि न शक्यते वारयितुं तादृशकारणतास्वीकारे तु विषयतया घटादिप्रत्यक्षं प्रति तादात्म्यो न घटादिरूपविषयस्यैव हेतुतया पटादौ तादात्म्येन तदभावादेवोक्तापत्ति-वारणात्। अतो गुरुत्वादिप्रत्यक्षवारणार्थमस्य प्रत्यक्षस्यायमेव विषय इति प्रतिकर्मव्यवस्थासिद्ध्यर्थं च प्रत्यक्षे विषयस्य कारणत्वमावश्यक-मिति वदन्ति॥

सौगतास्तु—प्रत्यक्षस्य विषयजन्यत्वाभावे घटप्रत्यक्षस्य घटो विषयो न पट इति प्रतिकर्मव्यवस्थानुपपत्तिः। विषयजन्यत्वे च यस्य प्रत्यक्षस्य यद्विषयजन्यत्वं तस्य तद्विषयकत्वमिति नियमसम्भवात्। न च तज्जन्यस्यैव तद्विषयकत्वनियामकत्वं चक्षुर्जन्यप्रत्यक्षस्य चक्षुर्विषय-कत्वापत्तिरिति वाच्यम्—तदाकारधारित्वे सति तज्जन्यत्वस्य तद्विषय-

कत्वनियामकत्वाङ्गीकारादिन्द्रियजन्यत्वेऽपि प्रत्यक्षस्येन्द्रियाकारधारित्वाभावेन तद्विषयकत्वाभावोपपत्तेः । न च यादृशविषयजन्यत्वं प्रत्यक्षस्य तस्य विषयस्य प्रत्यक्षोत्पत्तिकाले नाशेन कथं तद्विषयकत्वमिति वाच्यम्—तद्विषयकत्व हि तत्समानकालीनत्वं नियामकं । प्रत्यक्षस्य स्वसमानकालीनयावत्पदार्थविषयकत्वापत्तेः । किंतु तदाकारधारित्वे सति तज्जन्यत्वं । तच्च विषयासमानकालीनस्यापि प्रत्यक्षस्योपपद्यते । तदुक्तं—

भिन्नकालं कथं ग्राह्यमितिचेद्ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षमं ॥ इति वदन्ति ॥

तदुभयमतं निराकर्तुं प्रत्यक्षे विषयस्य कारणत्वाभावेऽपि स्वमते प्रतिकर्मव्यवस्थोपपत्तिमाह—

**स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति ॥ ९ ॥**

अत्र प्रत्यक्षमित्यनुवर्तते । स्वपदं प्रत्यक्षपरं, प्रकृतवाक्यघटकक्रियाकर्तुरेव स्वपदार्थत्वात् । चैत्रः स्वपुत्रं पश्यतीत्यादौ तथा दर्शनात् । स्वस्य प्रत्यक्षस्य यान्यावरणान्युत्पत्तिप्रतिबन्धकानि कर्माणि तेषां क्षयः फलदानपरिणतिरूपोदयाभावः । तेषां सदवस्था उपशमः । तदुभयस्वरूपयोग्यतया हि शब्द एवार्थे निरुक्तयोग्यतयैव प्रत्यक्षं प्रति नियतमर्थं व्यवस्थापयतीत्यर्थः । तथा च निरुक्तयोग्यताया एव प्रतिकर्मव्यवस्थाहेतुत्वान्न तदर्थं प्रत्यक्षे विषयस्य कारणत्वमावश्यकमिति भावः । अत्रेदं बोध्यं—गुरुत्वाद्यतीन्द्रियपदार्थप्रत्यक्षवारणार्थं प्रत्यक्षे विषयस्य कारणत्वमिति नैयायिकोक्तमयुक्तं—गुरुत्वादेरप्यनुमितिशब्दबोधविषयत्वेन विषयत्वात्तत्प्रत्यक्षापत्तेरुक्तकारणतया वारणासम्भवात् । न च विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन प्रत्यक्षविषयस्य कारणत्वाद्गुरुत्वस्य प्रत्यक्षविषयत्वाभावान्नापत्तिरिति वाच्यम्—स्वस्य स्वप्रयुक्तत्वासम्भवेन गुरुत्वादेः प्रत्यक्षविषयत्वाभावात्प्रत्यक्षविषयस्याभाव इत्यस्यायुक्तत्वात् । प्रति कर्मव्यवस्थासिद्ध्यर्थं विषयस्य हेतुत्वमित्यपि न युक्तं—भ्रमान्यप्रत्यक्ष एव विषयस्य कारणतया भ्रमे विषयव्यवस्थासिद्धेरुक्तकारणत्वेनानिर्वाहात् । किञ्च प्रत्यक्षे विषयस्य कारणत्वमिति सामान्य-

कारणत्वमभिमतम्? तत्तत्प्रत्यक्षे तत्तद्विषयत्वेनेति विशेषकारणत्वमिति विशेषकारणत्वं वाऽभिमतम्? नाद्यः—पटेऽपि तादात्म्येन विषयस्य सत्त्वे तत्र घटप्रत्यक्षापत्तेर्वारणासम्भवात्। न द्वितीयः—तद्घटप्रत्यक्षं प्रति तादात्म्येन तद्घटस्य हेतुत्वे तद्घटपटोभयविषयकसमूहालम्बन-प्रत्यक्षस्य पटेऽप्युत्पत्तौ व्यभिचारात्। एवं सौगतोक्तमपि न युक्तं-उपादेये उपादानाकारधारित्वस्य सुवर्णाकारधारिणि कुण्डलादौ दृष्टत्वेन प्रत्यक्षेऽ[1]र्थाकारधारित्वस्येव स्वोपादानभूतपूर्वज्ञानाकारधारित्वस्यापि भवद्भिरभ्युपगतत्वेन तज्जन्यत्वस्यापि सत्त्वेनोत्तरज्ञानस्य पूर्वज्ञानविषय-कत्वापत्तेः। तस्मादुक्तयोग्यतैव प्रतिकर्मव्यवस्थाहेतुराश्रयणीयेति। यस्यार्थस्य यादृशप्रत्यक्षे तादात्म्येन हेतुत्वं तत्प्रत्यक्षे स एवार्थो विषय इति [2]कारणत्वमेव प्रतिकर्मव्यवस्थाहेतुरिति वदतां नैयायिकानां मतं निराकरोति—

कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः॥ १०॥

कारणस्य परिच्छेद्यत्वे प्रत्यक्षविषयत्वे कारणत्वस्य प्रत्यक्षविषयता नियामकत्वे करणादिना व्यभिचारः, इन्द्रियादेरपि कारणत्वात्प्रत्यक्ष-विषयता स्यादित्यर्थः। न च प्रत्यक्षनिरूपिततादात्म्यसम्बन्धावच्छिन्न-कारणत्वमेव प्रत्यक्षविषयतानियामकं, इन्द्रियस्य च विषयतासम्बन्धेन प्रत्यक्षे संयोगेन हेतुत्वान्न व्यभिचार इति वाच्यम्—तथापि कालिक-सम्बन्धेन कार्यसामान्यं प्रति तादात्म्येन कालस्य कारणत्वेन तादात्म्य-सम्बन्धावच्छिन्नकारणत्वस्यापि प्रत्यक्षविषयताव्यभिचारित्वादिति भावः। सूत्रे आदिपदेन काल एव विवक्षितः। न च कार्यसामान्ये तादात्म्येन कालस्य कारणत्वेऽपि प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धा-वच्छिन्नकारणत्वं प्रत्यक्षविषयतानियामकमित्युक्तौ न व्यभिचार इति वाच्यम्—वह्न्यनुमितेर्वह्निरेव विषयो न घटादिरिति प्रतिकर्मव्यवस्था-सिद्धयेऽनुमित्यादौ योग्यतायाः प्रतिकर्मव्यवस्थाहेतुत्वं, प्रत्यक्षे च निरुक्त कारणत्वस्य प्रतिकर्मव्यवस्थाहेतुत्वमित्यङ्गीकार्यतया गौरवाल्लाघवेन सर्वत्र योग्यताया एव प्रतिकर्मव्यवस्थाहेतुत्वमित्यस्य युक्तत्वात्। न चानुमितौ व्यापकत्वेन भासमानत्वं शाब्दबोधे पदोपस्थापितत्वं वह्न्यादि-

[1] अर्थाकारधारित्वस्यैव (ख). [2] कार्यकारणत्वमेव (ख).

विषयकत्वे नियामकमिति वाच्यम्—धूमव्यापकत्वस्य सकलवह्निसाधारण्येन कस्यांचिदनुमितौ कश्चिदेव वह्निर्विषय इत्यत्र योग्यताया एव नियामकत्वस्य वाच्यतया सर्वत्र तस्या एव नियामकत्वौचित्यात्। अथेदानीं मुख्यप्रत्यक्षनिरूपणस्यावसरप्राप्तत्वात्तदुत्पत्तिकारणप्रतिपादनपूर्वकं तत्स्वरूपं निरूपयति—

सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम् ॥ ११ ॥

अत्र विशदं प्रत्यक्षमित्यनुवर्तते। तत्राऽशेषतो विशदमतीन्द्रियं यद्विज्ञानं तन्मुख्यं प्रत्यक्षं—प्रमेयत्वव्यापकेतरविषयत्वाप्रयोज्यविषयताकत्वं मुख्यप्रत्यक्षस्य लक्षणमित्यर्थः। अत्र व्यापकान्तोपादानात्सांव्यवहारिकप्रत्यक्षे नातिव्याप्तिः। सर्वं प्रमेयमित्यादिवाक्यजन्यज्ञानवारणायेतरविषयत्वाप्रयोज्येति। तद्विषयतायाः पदजन्यपदार्थोपस्थितिविषयताप्रयोज्यत्वान्नातिव्याप्तिः। न चैवमवधिमनःपर्यययोरव्याप्तिः, तयोः प्रमेयत्वव्यापकविषयताकत्वाभावात्तयोरपि मुख्यप्रत्यक्षान्तर्गतत्वादिति वाच्यम्—प्रमेयत्वव्यापकत्वस्थाने स्वविषयाभिन्नवस्तुत्वव्यापकत्वस्य विवक्षितत्वात्। अवधिमनःपर्यययोरशेषवस्तुविषयकत्वाभावेऽपि स्वविषयेऽनेकगुणपर्यायात्मकद्रव्येऽशेषतो विशदत्वेनाव्याप्तिविरहात्। न चैवमयं घट इत्यादिसांव्यवहारिकप्रत्यक्षेऽतिव्याप्तिः तस्यापि स्वविषये घटेऽशेषतो वैशद्यसत्त्वादिति वाच्यम्—घटस्यान्तर्भागादौ वैशद्याभावेनाशेषतो वैशद्यासम्भवात्। अन्यथाऽयं घट इति प्रत्यक्षानन्तरमेतद्घटोऽन्तर्भागे रक्तो न वेत्यादिसंशयानुपपत्तेः। [1] स्वविषयविशेष्यकयावत्संशयनिवर्तकतावच्छेदकविषयताकत्वस्यैवाशेषतो वैशद्यपर्यवशितार्थतया तस्यावधिमनःपर्ययकेवलेषु सत्त्वात्, सांव्यवहारिकप्रत्यक्षे चाभावादव्याप्त्यतिव्याप्तिविरहात् ॥

ननूक्तमुख्यप्रत्यक्षस्येन्द्रियजन्यत्वेऽशेषतो वैशद्यं न सम्भवति, इन्द्रियासन्निकृष्टे वस्तुनि वैशद्यायोगात्; स्वविषयेऽपीन्द्रियासन्निकृष्टप्रदेशे वैशद्यायोगेन स्वविषयेऽप्यशेषतो वैशद्यासम्भवात्। यत्त्विन्द्रिय-

---

1 स्वविषयविशेष्यतया—(क).

जन्यस्यापि योगिप्रत्यक्षस्याशेषतो वैशद्यं सम्भवति, योगजधर्मस्यैव तत्रेन्द्रियसन्निकर्षतया तस्य सकलवस्तुसाधारण्यात् ॥

अथ योगजधर्मस्यात्मगतस्य कथं सकलवस्त्वनुयोगिकसम्बन्धत्वं ? न च स्वाश्रयसंयोगेन योगजधर्मस्य सकलवस्तुनिष्ठत्वात्तथात्त्वं सम्भवतीति वाच्यम्—विभुद्वयसंयोगाभावेन गगनादिषु स्वाश्रयसंयोगादिति चेन्न—तस्य स्वाश्रयसंयुक्तसंयोगेन सकलवस्तुनिष्ठत्वात्। गगनादिष्वात्मसंयोगाभावेऽप्यात्मसंयुक्तघटादिसंयोगस्य तत्राक्षतत्वात्। तथा चोक्तयोगजधर्मरूपसन्निकर्षस्य सकलवस्तुषु सत्त्वादशेषतो वैशद्योपपत्तिरिति यौगमतं। तन्न—सह्यं प्रति विन्ध्यस्येवेन्द्रियं प्रति योगजधर्मस्य सम्बन्धत्वासम्भवात्। स्वाश्रयसंयुक्तसंयोगस्य गुणादावभावे चासम्भवेन योगजधर्मस्य सकलवस्तुसाधारण्यायोगाच्च। तस्मान्मुख्यप्रत्यक्षस्येन्द्रियजन्यत्वेऽशेषतो वैशद्यं न सम्भवतीत्याशङ्कानिवारणार्थमुक्तमतीन्द्रियमिति। इन्द्रियमतिक्रान्तमिन्द्रियाजन्यमित्यर्थः ॥

नन्विन्द्रियाजन्यस्यापि मुख्यप्रत्यक्षस्याशेषतो वैशद्यं न सम्भवति कारणाभावात्, न च प्रत्यक्षस्याशेषतो वैशद्य आत्मस्वरूपमेव कारणं, आत्मनः स्वपरप्रमेयग्रहणस्वभावत्वात्, उक्तं च मार्तण्डे—स्वपरप्रमेयबोधैकस्वभावस्यात्मन इतीति वाच्यम्—तथा सति सांव्यवहारिकप्रत्यक्षेऽप्यशेषतो वैशद्यापत्तेरात्मस्वरूपकारणस्याविशेषात्। न च मण्यादेः प्रभावत्वस्य स्वाभाविकत्वेऽपि मलादिना प्रतिबन्धवदावरणेन धृतिबन्धात्सांव्यवहारिकप्रत्यक्षस्य नाशेषतो वैशद्यमिति वाच्यम्—तथा सति मुख्यप्रत्यक्षस्यापि तादृशप्रतिबन्धकसम्भवेनाऽशेषतो वैशद्यानुपपत्तेरित्याशङ्कावारणायोक्तं—सामग्रीविशेषविश्लेषिताखिलावरणमिति। सामग्री द्रव्यक्षेत्रकालभावरूपेण चतुर्विधा; द्रव्यादीनां स्वपरभेदेन द्वैविध्यादष्टविधा। तत्रोक्तशरीरनिरवद्याहारादिः परद्रव्यं। आत्मा स्वद्रव्यं। भरतविदेहादयः परक्षेत्रं। आत्मनोऽसङ्ख्यातप्रदेशसमूहः स्वक्षेत्रं। तृतीयादिकालः परकालः। मुख्यप्रत्यक्षपरिणतिकालः स्वकालः। सम्यग्दर्शनादिः स्वभावः। उपदेशकसम्यग्बोधादिः परभाव इति। उक्तसामग्र्या विशेषः साकल्यं। तेन विश्लेषितं क्षयोपशमक्षयरूपतया विघटितमखिलमवधिमनःपर्ययकेवलज्ञानसम्बन्धावरणं, अखिलं निःशेषं वा आवरणं यस्यावधिमनःपर्ययकेवलज्ञानत्रयस्य तत्तथोक्तम्। तथा च—मुख्यप्रत्यक्षस्यावरणरूपप्रतिबन्धकाभावादशेषतो वैशद्यं सम्भव-

तीति भावः। अत्रावरणत्वं तद्वस्तुविषयकतत्पुरुषीयज्ञानप्रतिबन्धकत्वे सति तद्वस्तुतत्पुरुषोभयमध्यवृत्तित्वं। स्वान्तर्गतघटादेः स्वबाह्यप्रदेशस्थचैत्रादिकं प्रत्यावरणभूते काण्डपटे तद्घटविषयकचैत्रीयज्ञानप्रतिबन्धकत्वे सति तद्घटचैत्रोभयमध्यवृत्तित्वस्य सत्त्वात् लक्षणसङ्गतेः। चैत्रतद्घटोभयमध्यवृत्तिगगनादिप्रदेशस्य चैत्रादिशरीरस्य चावरणत्ववारणाय सत्यन्तं। तद्घटविषयकज्ञानप्रतिबन्धकस्य तद्घटाभाववत्ताज्ञानस्यावरणत्ववारणाय विशेष्यं। चैत्रीयकर्मणश्चैत्रीयघटादिविषयकज्ञानप्रतिबन्धकत्वात्, पौद्गलिकत्वेन चैत्रघटोभयमध्यवृत्तित्वादावरणत्वमुपपन्नं। न च भूम्यन्तर्गतजलादिकं प्रति भूम्यादेरावरणत्वात्। केवलज्ञानस्य तद्विश्लेषपूर्वकत्वाभावेन सामग्रीविशेषविश्लेषिताखिलावरणमित्ययुक्तमिति वाच्यम्—ज्ञानावरणभूतकर्माभावे भूम्यादिरूपावरणे सत्यपि तदन्तर्गतजलादेः केवलज्ञानेन ग्रहणदर्शनेन केवलभूम्यादेर्जलादिज्ञानप्रतिबन्धकत्वघटितजलाद्यावरणत्वायोगात। कर्मविशिष्टभूम्यादेरेव तथात्वस्य वक्तव्यतया तथाविधकर्मविश्लेषेण तद्विशिष्टभूम्यादेरपि विश्लेषोपपत्तेः। शिखानाशे शिखी ध्वस्त इतिवद्विशेषणनाशे विशिष्टनाशव्यवहारात् ॥

ननु ज्ञानावरणरूपकर्मणसद्भावे किं मानमिति चेत् उच्यते—परिशुद्धस्वभावस्यात्मनो हीनविषयादिष्वभिरतिरात्मस्वरूपविरुद्धकारणपूर्विका स्वभावविरुद्धाभिरतित्वात्। कमनीयकुलकामिन्याः कुत्सितपरपुरुषे औषधाद्युपयोगजनिताभिरतिवत्। तथा शरीरादावात्मभ्रमो दोषजन्यो भ्रमत्वात्, मद्यपानरूपदोषजन्यभ्रमान्तरवदित्याद्यनुमानमेव तत्र मानं। ननूक्तानुमानाभ्यां कर्ममात्रं सिद्धं, न तु तस्य ज्ञानावरणत्वमपीति चेदुच्यते—मुख्यप्रत्यक्षातिरिक्तं ज्ञानं सावरणं, सर्वविषयप्रवृत्तियोग्यत्वे सति तदप्रवृत्तिमत्वात्। यद्यत्र प्रवृत्तियोग्यत्वे सति तत्राप्रवर्तमानं, तत्तत्र सावरणं; यथा भूम्यादौ प्रवृत्तियोग्यत्वे सति तत्राप्रवर्तमानं मेघान्तरितसूर्यकिरणादिकमित्यनुमानेन ज्ञानावरणतया कर्मणः सिद्धेः। मेघाद्यावरणाभावेऽपि भूम्यादावप्रवर्तमाने स्वर्गादौ व्यभिचारवारणाय सत्यन्तं। तथा चोक्तरीत्या आवरणसिद्धेः सम्यग्दर्शनादिरूपसामग्रीविशेषेण तथाविधावरणसामान्यनाशे जायमानं मुख्यं प्रत्यक्षं प्रतिबन्धकाभावादशेषतो विशदं भवत्येव। न चावरणे सत्यपि मुख्यप्रत्यक्षस्य वैशद्यं सम्भवति। यथा भित्त्यादिरूपावरणे सत्यप्यञ्जनासंस्कृतचक्षुषां भित्त्याद्यन्तर्हितपदा-

येषु विशदं प्रत्यक्षं जायते, अञ्जनाद्यभावविशिष्टभित्त्यादेरेव विशदप्रत्यक्ष-प्रतिबन्धकत्वात् । तथा योगजधर्माभावविशिष्टावरणकर्मण एव विशद-प्रत्यक्षप्रतिबन्धकतया योगिनां ज्ञानावरणादिकर्मवतामपि विशदं प्रत्यक्षं सम्भवतीत्यत आह—

**सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥ १२ ॥**

योगजधर्माभावविशिष्टावरणाभावस्य विशदप्रत्यक्षकारणत्वापेक्षया आवरणसामान्याभावस्य तथात्वं युक्तं लाघवादिति भावः ॥

अत्र मीमांसकाः—सकलविषयकविशदप्रत्यक्षस्य तदाश्रयपुरुषविशेषस्य वा प्रत्यक्षादिप्रमाणाविषयत्वेनाभावप्रमाणनिरस्तत्वात् मुख्यामुख्य-भेदेन प्रत्यक्षविभागो न युक्तः । तथा हि—न तावत्सर्वविषयकसाक्षात्कार-वान् आत्मा प्रत्यक्षेण गृह्यते । प्रत्यक्षं हि द्विविधं—बाह्येन्द्रियजन्यं, मनोजन्यं चेति । न तावद्बाह्यप्रत्यक्षेण सर्वज्ञात्मा गृह्यते, बाह्यप्रत्यक्षस्य रूपादि-मद्द्रव्यविषयकत्वेनात्मविषयकत्वाभावात् ॥ नापि मानसेन—तस्य स्वात्म-तद्गतज्ञानादिविषयकत्वेऽप्यात्मान्तरतद्गुणग्राहकत्वासम्भवात् । अन्यात्मनोऽन्यदीयमनसा प्रत्यक्षवारणाय विषयतासम्बन्धेन मानसप्रत्यक्षं प्रति परात्म-व्यावृत्तविजातीयमनस्संयोगस्य कारणत्वेन तादृशसंयोगस्य सर्वज्ञात्म-न्यसम्भवात् । किंच प्रत्यक्षस्य सम्बद्धवर्तमानार्थग्राहितयाऽतीतानाग-तादिसर्वार्थग्राहकत्वाभावेन तद्घटितसर्वज्ञस्य प्रत्यक्षेण ग्रहणं न सम्भवति । दण्डाग्राहकस्य [1] प्रत्यक्षस्य दण्डविशिष्टपुरुषग्राहकत्वायोगात् । नाप्यनु-मानेन सर्वज्ञसिद्धिः, सर्वज्ञव्याप्यस्य स्वभावलिङ्गस्य कार्यलिङ्गस्य वाऽभावात् । सर्वज्ञरूपसाध्यस्याप्रसिद्धत्वेन तन्निरूपितव्याप्तिग्रहासम्भ-वाच्च । नाप्यागमेन—आगमो हि श्रुतिस्मृतिभेदेन द्विविधः । न तावच्छ्रुत्या तत्सिद्धिः । तत्र कर्मकाण्डस्य कर्मपरत्वेन ब्रह्मकाण्डस्यापि कर्मकर्तृभूत-जीवप्रशंसापरत्वेन सर्वज्ञपरत्वाभावात् । नाप्युपमानेन—तस्य ज्ञात-पदार्थसदृशार्थग्राहकत्वेऽपि सर्वज्ञग्राहकत्वायोगात् । सर्वज्ञस्य सर्वो-त्कृष्टत्वेन स्वसजातीयद्वितीयरहितत्वात् । नाप्यर्थापत्त्या—सर्वज्ञमन्तरेणा-नुपपद्यमानस्य कस्यचिदर्थस्याभावात् । न च धर्माद्यतीन्द्रियार्थोपदेशः सर्वज्ञविषयकज्ञानं विनानुपपन्न इत्युपदेशान्यथानुपपत्त्या कस्यचित्सार्वज्ञ्य

[1] पुरुषस्य (क).

सिध्यतीति वाच्यं—स्वप्नार्थोपदेशवक्रमादप्युपदेशोपपत्तेः । अनादिनिधनागममूलकज्ञानेनाप्युपदेशोपपत्त्या सर्वविषयकसाक्षात्कारासाधकत्वात् । उपदेशस्य स्वप्रतिपाद्यार्थविषयकज्ञानकल्पकत्वेऽपि सर्वविषयकज्ञानाकल्पकत्वाच्च । तस्मात्सर्वज्ञस्य सदुपलम्भकप्रमाणपञ्चकाविषयत्वादभावप्रमाणस्यैव विषयत्वान्मुख्यामुख्यभेदेन प्रत्यक्षविभागो न युक्त इति वदन्ति । अत्र प्रतिविधीयते—

कश्चित्पुरुषः सकलपदार्थसाक्षात्कारवान् , सर्वपदार्थग्रहणस्वभावत्वे सति सर्वग्रहणप्रतिबन्धकाभाववत्वात् । यो यद्ग्रहणस्वभावत्वे सति यद्ग्रहणप्रतिबन्धकाभाववान्, स तद्विषयकसाक्षात्कारवान् । यथा तिमिररूपावरणशून्यं रूपग्रहणस्वभावं लोचनं रूपसाक्षात्कारवदित्यनुमानेन सर्वज्ञः सिध्यति । अत्र फलोपधायकत्वरूपजनकतासम्बन्धेन साक्षात्कारवत्वं साध्यं [1] तेन तु परिणामितासम्बन्धेन दृष्टान्ते लोचने साधनवैकल्यात् । रसग्रहणप्रतिबन्धकाभाववति लोचने रससाक्षात्कारविरहेण व्यभिचारवारणाय हेतौ सत्यन्तं । रूपग्रहणस्वभावे तिमिराद्युपहतचक्षुषि रूपसाक्षात्काराभावेन व्यभिचारवारणाय विशेष्यदलं । न चात्मनि सर्वपदार्थग्रहणस्वभावत्वमसिद्धं, आत्मनि सर्वपदार्थग्रहणस्यस्वाभाविकत्वे सर्वदा सर्वपदार्थग्रहणापत्तेरिति वाच्यं—सर्वपदार्थग्रहणस्वभात्वं हि तद्ग्रहणजनकतावच्छेदकावच्छिन्नत्वं । तच्चात्मन्यावश्यकं । अन्यथा आगमेन सर्वपदार्थग्रहणस्य सर्वविषयकव्याप्त्यादिज्ञानस्य चात्मन्यनुपपत्तेः । दाहजनकतावच्छेदकावच्छिन्नस्यापि वह्नेर्मणिसमवधानदशायां दाहाभाववत्सर्वग्रहणजनकतावच्छेदकावच्छिन्नस्याप्यात्मनः प्रतिबन्धकसमवधाने सर्वग्रहणाभावोपपत्तेः । अथोक्तहेतोः सर्वसाक्षात्काराभाववति संसार्यात्मनि व्यभिचारः । तत्र सर्वग्रहणप्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकघटोभयाभावत्वस्य पूर्वक्षणवृत्तित्वविशिष्टप्रतिबन्धकाभावस्य च सत्त्वात् । न च सर्वग्रहणप्रतिबन्धकत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाव एव विवक्षितः । तादृशप्रतिबन्धकत्वपर्याप्तावच्छेदकताकत्वं च तादृशप्रतिबन्धकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकनिरूपकत्वे सति तादृशप्रतिबन्धकत्वनिष्ठावच्छेदकतानिरूपकत्वम् । विशिष्टाभावोभयाभावयोस्तादृशप्रतिबन्धकत्वभिन्नवैशिष्ट्योभयत्वनिष्ठावच्छे-

[1] न तु (ख).

दकतानिरूपकत्वाद्धारणमिति वाच्यं — प्रतिबन्धकीभूतपौद्गलिककर्मण-स्संयोगेनात्मनि सत्त्वेऽपि सम्बन्धान्तरावच्छिन्नाभावस्य संसार्यात्मनि सत्त्वेन व्यभिचारस्य दुर्वारत्वात् । संयोगसम्बन्धावच्छिन्नज्ञान-प्रतिबन्धकाभावनिवेशनोक्तदोषवारणेऽपि काण्डपटाद्यन्तरितघटाद्यग्रा-हके घटादिग्रहणस्वभावे चक्षुषि व्यभिचारो दुर्वारः । घटावरणभूत-काण्डपटादेः संयोगेनाभावस्य चक्षुष्यक्षतत्वादिति चेन्मैवं—मध्यवृत्तिता-सम्बन्धावच्छिन्नज्ञानप्रतिबन्धकावरणत्वपर्याप्तावच्छेदकताकप्रतियोगिता-काभावस्य विवक्षितत्वात् । न चोक्तानुमाने सर्वविषयकसाक्षात्कार-रूपसाध्यस्यानुमितेः पूर्वमप्रसिद्धत्वेनोक्तसाध्यनिरूपितव्याप्तिग्रहासम्भव इति वाच्यं—सामान्यव्याप्त्यधीनानुमितौ प्रकृत[1]साधनसजातीयसाधने प्रकृतसाध्यसजातीयसाध्यनिरूपितव्याप्तिग्रहस्यैव कारणत्वात् प्रकृत-साधने प्रकृतसाध्यनिरूपितव्याप्तिग्रहणानपेक्षणात् । रूपग्रहणजनकता-वच्छेदकावच्छिन्नत्वे सति रूपग्रहणप्रतिबन्धकाभावे रूपसाक्षात्कार-निरूपितव्याप्तिग्रहादेवोक्तानुमितिनिर्वाहात् । न च विशिष्टबुद्धौ विशेषण-ज्ञानस्य कारणत्वाद्रूपादिसाक्षात्काररूपविशेषणज्ञानाभावे कथं तद्वि-शिष्टानुमितिरिति वाच्यं—विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वानुपगमात्, कस्मिंश्चित्पुरुषे सर्वपदार्थसाक्षात्कार इति साध्यविशेष्यकानुमितौ बाधकाभावाच्च ॥

ननु यत्र यज्जनकतावच्छेदकावच्छिन्नत्वे सति यत्प्रतिबन्धकाभाव-वत्वं तत्र तद्वत्त्वमिति व्याप्तया सर्वग्रहणजनकतावच्छेदकावच्छिन्नत्वे सति सर्वग्रहणप्रतिबन्धकाभावेन हेतुना सर्वग्रहणमेव सिध्यति, न सर्वसाक्षात्कार इति चेन्न—उक्तानुमानेन सर्वग्रहणसिद्धौ तादृशसर्व-विषयकज्ञानं विशदं, आवरणसामान्याभाववत्वात्, रजोनीहाराद्यावरण-शून्यघटादिज्ञानवदित्यनुमानेन तादृशज्ञानस्य विशदत्वसिद्ध्या सर्व-विषयकसाक्षात्कारस्य सिद्धेः । न च सर्वस्यापि पुरुषस्य किञ्चिदावरण सम्भवेनावरणसामान्याभावघटितपूर्वानुमानहेतुरावरणसामान्याभावरूपै-तदनुमानहेतुश्चासिद्ध इति वाच्यं—पुरुषाणां ज्ञानतारतम्यानन्यथानुप पत्त्या आवरणनाशतारतम्यस्यावश्यकतया प्रकृष्यमाणनाशप्रतियोगिन आवरणस्य क्वचिन्निश्शेषनाशावश्यकत्वात् । प्रयोगश्च—ज्ञानावरणं किञ्चि-

---

[1] साध्यसजातीय (क).

त्पुरुषनिष्ठनिश्शेषनाशप्रतियोगि कारणप्रकर्षाधीनप्रकर्षवन्नाशप्रतियोगित्वात्, पुटपाकप्रकर्षाधीनप्रकर्षवन्नाशप्रतियोगिपरिशुद्धहेमनिष्ठनिश्शेषनाशप्रतियोगिकिट्टकालिकादिवदिति । निश्शेषनाशप्रतियोगित्वं च स्वसमानाधिकरणस्वप्रतियोगिसजातीयासमानकालीननाशप्रतियोगित्वं। साजात्यं च ज्ञानावरणत्वादिना । स्वपदं नाशपरम् । संसारिगतस्य ज्ञानावरणनाशस्य स्वपदेनोपादाने स्वसमानाधिकरणं यत्स्वप्रतियोगिसजातीयं ज्ञानावरणान्तरं तत्समानकालीन एव तादृशनाशो भवति। संसारिण्येकावरणनाशेऽप्यावरणान्तरसद्भावात् । अतोऽसंसारिनिष्ठनाश एव स्वपदेनोपादेयः । असंसारिनिष्ठावरणनाशस्यापि स्वप्रतियोगिसजातीयपुरुषान्तरनिष्ठावरणसमानकालीनत्वात्तदसमानकालीनत्वं नेत्यतः स्वसमानाधिकरणत्वं स्वप्रतियोगिसजातीयविशेषणं । स्वसमानाधिकरणपर्यायसमानाधिकरणत्वात्सर्वस्यापि नाशस्य स्वसमानाधिकरणासमानकालीननाशाप्रसिद्धिरतः स्वप्रतियोगिसजातीयेति । किञ्चिन्निष्ठनिश्शेषनाशप्रतियोगित्वाभाववति पर्याये व्यभिचारवारणाय कारणप्रकर्षाधीनप्रकर्षवत्वं नाशविशेषणं। तथा च क्वचिदावरणस्य निश्शेषनाशसिद्ध्या तत्रैवावरणसामान्याभावसिद्धेस्तद्घटितहेतोर्नाश-सिद्धिरिति । कश्चित्पुरुषः सर्वविषयकसाक्षात्कारवानित्याद्यनुमानेन सर्वज्ञसिद्धौ न किञ्चिद्बाधकमिति । न च पुरुषः सर्वविषयकसाक्षात्काराभाववान्, वक्तृत्वात्पुरुषत्वात्पाण्यादिमत्वाद्रथ्यापुरुषवदित्याद्यनुमानेन पुरुषत्वावच्छेदेन सर्वसाक्षात्काराभावसाधकेन सर्वज्ञसाधकानुमानस्य सत्प्रतिपक्षतेति वाच्यं—सर्वज्ञास्वीकर्तुर्मीमांसकस्य मते सर्वविषयकसाक्षात्काराप्रसिद्ध्या तदभावाप्रसिद्धेस्तत्साधनायोगात् । न च साक्षात्कारः सर्वविषयकत्वाभाववान्, वक्तृत्वसमानाधिकरणत्वात्, पुरुषत्वसमानाधिकरणत्वात्, रथ्यापुरुषसाक्षात्कारवदित्यनुमानेन साक्षात्कारत्वावच्छेदेन सर्वविषयकत्वाभावसाधनात्सत्प्रतिपक्षत्वं दुर्वारं; सर्वविषयकत्वं चागमजन्यज्ञानव्याप्तिज्ञानयोः प्रसिद्धमिति वाच्यं—आगमजन्यज्ञानादौ वक्तृत्वसमानाधिकरणे सर्वविषयकत्वाभावविरहेण व्यभिचारस्य दुर्वारत्वात् । न च पुरुषः कतिपयपदार्थाविषयकसाक्षात्कारवान्, वक्तृत्वादित्यनुमानेन सत्प्रतिपक्षता दुर्वारा, तत्र साध्याप्रसिद्धिविरहादिति वाच्यं—केवलिनोऽपि पूर्वकालावच्छेदेनाल्पज्ञत्वसद्भावेनोक्तानुमानस्य सर्वज्ञत्वसाधकानुमानप्रतिपक्षत्वासम्भवात्, सर्वविषयकसाक्षा-

त्कारदशायामपि कतिपयपदार्थाविषयकसाक्षात्कारान्तरस्य सम्भवेन सार्वज्ञसाधनविरोधाभावाच्च । तस्मात्कश्चित्पुरुषः सर्वसाक्षात्कारवानित्यनुमानस्य प्रतिपक्षाभावात्तेन सर्वज्ञः सिध्यत्येवेत्यावरणविश्लेषजन्यं मुख्यं प्रत्यक्षमिति युक्तमेव ॥

नैयायिकास्तु सर्वविषयकं प्रत्यक्षं नावरणविश्लेषजन्यं, तदाश्रयस्येश्वरस्यानादिमुक्तत्वेनावरणसम्बन्धानर्हत्वात् । किंतु नित्यं नित्यज्ञान चिकीर्षाकृतिमत एवेश्वरत्वात् । तादृशेश्वरश्च क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्घटवदित्यनुमानेन सिद्ध्यति । नन्वत्र किं पक्षतावच्छेदकं ? न तावत् क्षितित्वं, अङ्कुरस्यापि तदाक्रान्तत्वेन पृथक् तदुपादानवैयर्थ्यात् । न च क्षितिपदं, न पृथिवीत्वजात्यवच्छिन्नपरं, येनाङ्कुरादेः पृथगुपादानवैयर्थ्यं स्यात्, किंतु भूखण्डपरम्; तथा भूखण्डाङ्कुरादीनां सर्वेषां पक्षपातालाभाय सर्वानुगतं पृथिवीत्वं पक्षतावच्छेदकमिति वाच्यम्—तथापि पृथिवीत्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे घटादावंशतस्सिद्धसाधनात् । अवच्छेदकावच्छेदेन तथात्वे परमाणौ बाधात्, तस्य नित्यत्वेन कर्तृजन्यत्वाभावात् । जन्यक्षितित्वस्य पक्षतावच्छेदकत्वे ईश्वरानङ्गीकर्तृचार्वाकादिमते जन्यपदस्य वैयर्थ्यं, तन्मते परमाणोरनङ्गीकारात् । न च पक्षकोटिप्रविष्टविशेषणानामुभयमतेऽपि प्रयोजनमपेक्षितमिति न नियमः, स्वमते बाधवारकतयैव जन्यपदसार्थक्यसम्भवादिति वाच्यम्—स्वमतेऽपि जन्यत्वस्यैव पक्षतावच्छेदकत्वसम्भवेन क्षितिपदोपादानवैयर्थ्यात् । न च जन्यत्वस्यैव पक्षतावच्छेदकत्वं सम्भवति, पक्षतावच्छेदकहेतोरैक्यप्रसङ्गेनोपनयवाक्याच्छाब्दबोधानुपपत्तेः । उदाहरणाद्व्याप्तिबोधेन पक्षधर्मताबोधार्थमेवोपनयप्रयोगात । तथा चायमित्युपनयवाक्यस्य हेतुमान् पक्ष इत्यर्थकत्वात् जन्यत्वस्यैव पक्षतावच्छेदकत्वे हेतुत्वे च स्वीकृते जन्यं जन्यमित्येवोपनयवाक्यार्थस्य स्वीकरणीयतया घटो घट इत्यादाविव बोधानुपपत्तेरिति चेन्न—कार्यत्वं हि द्विविधं—स्वरूपसम्बन्धरूपं प्रागभावप्रतियोगित्वरूपं चेति । तत्र स्वरूपसम्भन्धरूपस्य पक्षतावच्छेदकत्वात् प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुत्वेनादोषात् । साध्यमपि न स्वोपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वरूपम् । कर्तृजन्यत्वं कार्यमात्रे कृत्यादीनामेवान्वयव्यतिरेकाभ्यां हेतुत्वेन कर्तृजनकत्वे मानाभावात् । नापि स्वोपा-

दानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वं, कार्यमात्रं प्रति कृतेरेवान्वय-व्यतिरेकाभ्यां हेतुत्वेन तज्जनकज्ञानचिकीर्षयोस्तत्रान्यथासिद्धत्वात्, तत्त्रितयजन्यत्वसाधने बाधात्. स्वोपादानगोचरकृतिजन्यत्वमेव साध्यमित्यपि न युक्तम्—दृष्टान्तपक्षोभयसाधारणस्यानुगतस्वत्वस्याभावेन स्वपदेन दृष्टान्तोपादाने बाधस्य पक्षोपादाने दृष्टान्ते साध्यवैकल्यस्य च दुर्वारत्वात्। न च स्वपदमपि परित्यज्योपादानगोचरकृति जन्यत्वमेव साध्यं स्यादिति वाच्यम्—कृतित्वापेक्षयोपादानगोचरकृतित्वस्य गुरुत्वेन तदवच्छिन्नजनकत्वाप्रसिद्धेः । नापि कृतित्वावच्छिन्न-जनकतानिरूपितजन्यत्वं साध्यम्। अदृष्टद्वारा यागादिगोचरजीवीयकृति जन्यत्वस्य पक्षे सत्त्वेन सिद्धसाधनापत्तेः। किंतु विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसम्बन्धावच्छिन्न-जन्यत्वमेव साध्यम्; विशेष्यतासम्बन्धेन कपाले कुलालकृतिसत्त्वेन तत्र समवायेन घटोत्पत्तिवद्विशेष्यतया परमाणौ ईश्वरकृतिसत्त्वेन तत्र समवायेन जगदुत्पत्तिसम्भवेन समवायेन कार्यं प्रति विशेष्यतासम्बन्धेन कृतेर्हेतुत्वात्। यदि च [1] कार्यमात्रे कृतित्वेनेवान्वयव्यतिरेकाभ्यां ज्ञानत्वेनेच्छात्वेन च हेतुत्वं स्वीक्रियते, तदा तादृशज्ञानजन्यत्वमिच्छाजन्यत्वं कृतिजन्यत्वं च साध्यमस्तु। एवं च नित्यैकत्वाभ्यां ज्ञानादिसिद्धौ लाघवमिति लाघवज्ञानसहकृतोक्तानुमानान्नित्यज्ञानादिसिद्धौ, नित्यज्ञानादिकं किंचिदाश्रितं गुणत्वाद्रूपादिवदित्यनुमानेन तदाश्रयतयेश्वरसिद्धिरिति वदन्ति ॥

अत्रोच्यते—यदुक्तं स्वरूपसम्बन्धरूपकार्यत्वं पक्षतावच्छेदकं प्रागभावप्रतियोगित्वं हेतुरिति, तन्न—प्रतियोगित्वस्यापि भवन्मते स्वरूपसम्बन्धरूपत्वेन पक्षतावच्छेदकहेत्वोर्भेदानुपपत्तेः। न च प्रतियोगित्वं पदार्थान्तरमेव, न स्वरूपसम्बन्धरूपमिति वाच्यम्—सप्तपदार्थविभाग-व्याघातात्। यत्तु प्रतियोगित्वं पदार्थान्तरमेव, सप्तपदार्थविभागस्तु तत्त्वज्ञानोपयोगिज्ञानविषय[2]पदार्थानामेवेति न तद्विरोधः। अत एव विषयत्वादिकमपि पदार्थान्तरमिति नवीनैरुक्तम्। तन्न—द्रव्यादिपदार्थ-ज्ञानमेव तत्त्वज्ञानोपयोगि, न प्रतियोगित्वविषयत्वादिरूपपदार्थज्ञान-मित्यत्र नियामकाभावात्। किंच स्वरूपसम्बन्धरूपकार्यत्वस्य तत्तद्व्यक्ति-

---

[1] कार्यमात्रकृतित्वेन. [2] पदार्थान्तरम्.

स्वरूपत्वेन तत्तद्व्यक्तिविश्रान्ततया सकलकार्यानुगतपक्षतावच्छेदकत्वासम्भवः। न च तत्तद्व्यक्तिविश्रान्तानामपि स्वरूपसम्बन्धरूपजन्यताव्यक्तीनामन्यतमत्वेन अनुगतीकृतानां पक्षतावच्छेदकत्वमिति वाच्यम्—अन्यतमत्वेन जन्यताव्यक्तीनां पक्षतावच्छेदकत्वकल्पनापेक्षया जन्यगतान्यतमस्यैव पक्षतावच्छेदकत्वौचित्यात्। विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्न जनकतानिरूपित समवायसम्बन्धावच्छिन्नजन्यत्वं साध्यमित्यपि न युक्तम्—कुलालकृत्या घटस्य, कुविन्दकृत्या पटस्य उत्पत्तिवारणाय घटं प्रति कुलालकृतेः पटं प्रति कुविन्दकृतेः कारणत्वमिति विशेषकार्यकारणभावावश्यकतया कृतित्वेन कार्यत्वेन सामान्यकार्यकारणभावे मानाभावात्। न च यद्विशेषयोः कार्यकारणभावः, असति बाधके तत्सामान्ययोरपीति न्यायात् सामान्यकार्यकारणभावसिद्धिरिति वाच्यम् तादृशन्यायस्य युक्तिशून्यत्वेन अश्रद्धेयत्वात्। न च सामान्यकार्यकारणभावानङ्गीकारे कार्यसामान्याभावे कुलालादिकृत्यभावकूटस्य प्रयोजकत्वं वक्तव्यं, तत्स्वीकारे तु कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वं सम्भवतीति लाघवमिति लाघवयुक्तिमूलकत्वात् तादृशन्यायः प्रामाणिक इति वाच्यम्—विशेषाभावसामान्याभावयोर्द्वयोरप्यधिकरणस्वरूपत्वेन विशेषाभावघटातिरिक्तसामान्याभावस्य अप्रामाणिकत्वेन उक्तलाघवानवकाशात्। किंच उक्तसाध्यं ईश्वरानङ्गीकर्तृमीमांसकेन स्याद्वादिप्रभृतीन् प्रति साधनीयं, तन्मतेषु समवायानङ्गीकारात् साध्याप्रसिद्धिः। नच समवायसम्बन्धावच्छिन्नत्वमनिवेश्य विशेष्यतासम्बन्धावच्छिन्नजनकतानिरूपितजन्यत्वमात्रस्य साध्यत्वान्न साध्याप्रसिद्धिरिति वाच्यम्—आत्मनि कृत्या हस्तादौ चेष्टा। तादृशचेष्टया कपालादौ क्रिया। तया च कपालद्वयसंयोगद्वारा घटत्वरूपपर्यायो जायते इत्यस्य प्रामाणिकत्वेऽपि विशेष्यतासम्बन्धेन कृतेः कपालादौ सत्त्वस्य तेन सम्बन्धेन घटादिहेतुत्वस्य चाप्रामाणिकत्वात् घटादिरूपद्रव्यस्य नित्यत्वेन तत्रोत्पत्तेरप्रामाणिकत्वाच्च। एवं स्वमते जन्यत्वरूपपक्षतावच्छेदकाक्रान्ते ध्वंसे निरुक्तसाध्याभावाद्बाधः। ध्वंसस्योपादानाभावेन विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकताकत्वाभावात् उपादानगतविषयताया एव कृतिविशेष्यतारूपत्वात्। न च भावत्वविशिष्टजन्यत्वस्य पक्षतावच्छेदकत्वान्न बाध इति वाच्यम्-तथाप्युक्तसाध्याभाववति ध्वंसे प्रागभावप्रतियोगित्वरूपहेतुसत्त्वेन व्यभिचारस्य दुर्वारत्वात्। हेतुकोटावपि भावत्वनिवेशेन उक्तव्यभिचार-

वारणेऽपि ध्वंसस्य कृतिजन्यत्वासिद्ध्या कार्यमात्रं कृतिजन्यमिति भवदीयसिद्धान्तव्याघातः। न च ध्वंसातिरिक्तकार्यमात्रं कृतिजन्यमित्येव सिद्धान्तोऽभ्युपगम्यत इति वाच्यम्—तथा सति भिक्षुपादप्रसरणन्यायेन भूखण्डाङ्कुरादेरपि कृतिजन्यत्वं नास्ति। किंतु घटादेरेवेति स्याद्वादिमतप्रवेशस्य दुर्वारतापत्तेः। यत्तु जन्यत्वमात्रं ध्वंससाधारणमेव पक्षतावच्छेदकं कृतिजन्यत्वमात्रं साध्यं, हेतावपि भावत्ववैशिष्ट्यं नोपादेयं प्रयोजनाभावात्। एवं च ध्वंसेऽपि ईश्वरीयकृतिजन्यत्वस्य निराबाधतया कार्यमात्रस्य कृतिजन्यत्वसिद्धान्तोपपत्तिः। न च कृतिजन्यत्वमात्रस्य साध्यत्वेऽदृष्टद्वारा अस्मदादिकृतिजन्यत्वमादाय सिद्धसाधनमिति वाच्यम्—अदृष्टद्वारककृतिजन्यत्वस्यैव साध्यत्वादिति। तन्न—समवायेन कार्यं प्रति विशेष्यतासम्बन्धेन कृतेः कारणत्वमिति कार्यकारणभावातिरिक्तकार्यकारणभावस्य भवन्मतेऽभावेन ध्वंसे बाधस्य दुर्वारत्वात्। न च समवायस्वरूपान्यतरसम्बन्धेन कार्यं प्रति विशेष्यतया कृतेः कारणतास्वीकारात् विशेष्यतासम्बन्धेन कपालसम्बन्धकृत्या स्वरूपसम्बन्धेन तत्र घटध्वंसोत्पादाददृष्टद्वारककृतिजन्यत्वरूपसाध्यस्य न तत्र बाध इति वाच्यम्—ध्वंसस्योपादानाभावे विशेष्यतासम्बन्धेन कृतेः तत्र कारणत्वायोगेन बाधस्य दुर्वारत्वात्। किंच अनित्यानेककृतिसिद्धावेव नित्यकृत्यादीनां तदाश्रयेश्वरस्य चाकल्पनेन लाघवान्नित्यकृत्यादिसिद्धौ गौरवेण लाघवान्नित्यकृत्यादिसिद्धिरित्ययुक्तमेव। कार्यत्वरूपहेतुश्च स्याद्वादिमते क्षित्यादावसिद्धः द्रव्यस्य नित्यत्वाभ्युपगमात्। न च क्षित्यादिकं कार्यं सावयवत्वाद्घटवदित्यनुमानेन क्षित्यादीनां कार्यत्वं सिध्यतीति वाच्यम्—घटादिरूपद्रव्यस्यापि कार्यत्वानभ्युपगमेन दृष्टान्ते साध्यवैकल्यात्। एवं सावयवत्वस्य अवयवजन्यत्वरूपत्वे असिद्धिः क्षित्यादाववयवजन्यत्वानभ्युपगमात्। अवयवसमवेतत्वरूपत्वे कपालत्व पृथिवीत्वादौ नित्यत्वेन भवन्मतसिद्धेर्व्यभिचारः। अतः कार्यत्वरूपहेतोः क्षित्यादावसिद्धिर्दुर्वारा। एवं क्षित्यादिकं कृत्यजन्यं, चेष्टाजन्यत्वाभावात् गगनादिवदित्यनुमानेन सत्प्रतिपक्षता च। घटादौ कुलालादिकृतेरिव कुलालादिहस्तचेष्टाया अप्यन्वयव्यतिरेकाभ्यां कारणत्वदर्शनेनचेष्टाजन्यत्वस्य कुलालजन्यत्वव्यापकतया व्यापकाभावे व्याप्याभावावश्यंभावात्। न च चेष्टाजन्यत्वाभावः प्रपञ्चे असिद्धः, भवद्भिरीश्वरस्य शरीरानभ्युपगमेन तद्गतक्रियारूपचेष्टाजन्यत्वस्य प्रपञ्चेऽभावात्। न चेश्वरस्य शरीरमपि स्वीक्रि-

यत इति वाच्यम्—तच्छरीरस्य महत्त्वे अभग्नस्य तस्य पाषाणादौ प्रवेशासम्भवेन पाषाणान्तर्वर्तिभेकशरीरोत्पादकत्वानुपपत्तेः । अणुत्वे च दूरस्थकार्योत्पादकत्वानुपपत्तेः । न च नानापरमाणव एव तस्य शरीरमिति स्वीकाराद्यत्र यत्र कार्योत्पत्तिस्तत्र तत्र तत्तत्परमाणुरूपशरीरैरेव कार्यनिर्वाह इति वाच्यम्—शरीरलक्षणाभावेन तेषां शरीरत्वासम्भवात्। न च परमाणुक्रियायाः चेष्टात्वरूपजातिस्वीकारात् चेष्टाश्रयत्वरूपं शरीरलक्षणं परमाणुषु सम्भवतीति वाच्यम्—हस्तपादादिमत एव शरीरत्वेन लोकसिद्धतया तच्छून्यानां परमाणूनां शरीरत्वासम्भवात् । अन्यथा घटादिक्रियायामपि चेष्टात्वमभ्युपगम्य घटादेरपि शरीरत्वकल्पनापत्तेः। हस्तपादादिशून्यस्य शरीरत्वाभ्युपगमे लोकविरोधो नास्ति। कृत्यजन्यस्य कार्यत्वाभ्युपगमे लोकविरोध इति नैयायिकानामेव शोभते । ईश्वरस्य शरीरमनङ्गीकृत्य शरीराजन्यत्वेऽपि क्षित्यादेः कार्यत्वाभ्युपगमे कृत्यजन्यत्वेऽपि तदभ्युपगमसम्भवात् कार्यत्वेन कृत्यजन्यत्वानुमानमयुक्तमेव। यत्तु कार्यत्वेन कृतित्वेन कार्यकारणभावाभावेऽपि घटत्वेन कृतित्वेन कार्यकारणभावस्याव्याहततया सृष्ट्याद्यकालीनघटादिकं पक्षीकृत्य घटत्वहेतुना सकर्तृकत्वसाधने जीवानां सृष्ट्याद्यकाले शरीराद्युपकरणाभावेन कर्तृत्वासम्भवात् ईश्वरसिद्धिरिति । तन्न—ईश्वरानङ्गीकर्तृमते सृष्टिप्रलययोरप्यनङ्गीकारेण सृष्ट्यादिकालीनघटरूपपक्षस्याप्रसिद्धेः सृष्ट्यादिकाले शरीराद्युपकरणाभावेन जीवस्याकर्तृत्वे ईश्वरस्य सर्वदा तदभावेन अकर्तृत्वापत्तेर्दुर्वारत्वात् । यदपि कार्यत्वेन कृतित्वेन कार्यकारणभावाभावेऽपि घटत्वेन कृतित्वेन कार्यकारणभावसत्त्वात् खण्डघटः कृतिजन्यो घटत्वात् घटान्तरवदित्यनुमानेन खण्डघटजनकीभूतकृत्याश्रयतया ईश्वरसिद्धिरिति तन्न—खण्डघटस्य कुलालकृतघटापेक्षतया अतिरिक्तत्वाभावेन कुलालस्यैव तज्जनककृत्याश्रयत्वेन तदाश्रयतया ईश्वरसिद्धेरसम्भवादित्यलं पल्लवितेन ।

ब्रह्माद्वैतवादिनस्तु—सत्तारूपं ब्रह्मैव सर्वसाक्षात्कारि, सर्वावच्छिन्नचैतन्याभिन्नत्वात् । चैत्रस्य घटादिसाक्षात्कारित्वं हि घटावच्छिन्नचैतन्याभेद एव । घटसाक्षात्कारकाले इन्द्रियद्वारा अन्तःकरणवृत्तेर्घटादिविषयदेशगमनेन घटावच्छिन्नचैतन्यस्य वृत्तिरूपान्तःकरणावच्छिन्नचैतन्येन अभेदोत्पत्तेः, एकदेशस्थोपाध्योर्भेदकत्वायोगात् । गृहावच्छिन्नाकाशे घटावच्छिन्नाकाशाभेदवत् मायावच्छिन्नचैतन्ये घटाद्यवच्छिन्न-

चैतन्याभेदसम्भवात् । सर्वावच्छिन्नचैतन्याभिन्नत्वरूपं सर्वसाक्षात्कारित्वं च घटस्सन् पटस्सन्नित्यादिप्रत्यक्षेण गृह्यते । घटस्सन्निति प्रतीतौ घटसतोस्तादात्म्यभानात् । तादात्म्यस्य च भिन्नत्वे सति अभिन्नसत्ताकत्वरूपत्वेन घटावच्छिन्नसत्तारूपचैतन्याभेदस्य ब्रह्मरूपत्वे सति भानात्। न च घटादिरूपभेदस्य प्रत्यक्षगम्यत्वे आगमस्याद्वैतबोधकत्वं न सम्भवति, प्रत्यक्षविरुद्धार्थे आगमस्य प्रामाण्यायोगादिति वाच्यम्—प्रत्यक्षं हि सविकल्पकं निर्विकल्पकं चेति द्विविधम् । तत्र चक्षुरुन्मीलनानन्तरं सत्तामात्रविषयकं निर्विकल्पकं जायते । तदेव प्रमाणभूतं प्रत्यक्षं, तत्र च भेदो न भासते, अप्रमाणभूतसविकल्पकप्रत्यक्षे च भेदो भासत इति न तेनागमस्य बाधः । तदुक्तम्—

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
आहुर्विधातृ प्रत्यक्षं न निषेधृ विपश्चितः ।
नैकत्वे आगमस्तेन प्रत्यक्षेण प्रबाध्यते ॥ इति ॥

प्रत्यक्षं विधातृ-विधायकं सन्मात्रग्राहकमेवाहुः । न निषेधृ-न निषेधकं—न भेदग्राहकम् । तेन कारणेनैकत्वे प्रतिपादकतासम्बन्धेन विद्यमान आगमो न प्रत्यक्षेण बाध्यत इति द्वितीयश्लोकार्थः। तथा च प्रत्यक्षस्यापि सन्मात्रग्राहित्वेन तद्विरोधाभावात् एकमेवाद्वितीयं ब्रह्मेति श्रुत्या द्वैतं ब्रह्म सिध्यति। ब्रह्मणोऽद्वैतत्वं च सजातीयविजातीयस्वगतभेदशून्यत्वम्। तदुक्तम्—

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥
एवं भेदत्रयं प्राप्तं श्रुत्या ब्रह्मणि वार्यते ।
एकावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति ॥

ननु एकमेवाद्वितीयं ब्रह्मेति श्रुतिगतैकपदैवकाराद्वितीयपदैः सजातीयादिभेदत्रयशून्यत्वं प्रतीयत इति न युक्तम्—सद्रूपे ब्रह्मणि सजातीयभेदरूपाणां जीवानां विजातीयभेदरूपाणामचेतनानां स्वगतभेदरूपाणां सर्वज्ञत्वादीनां च सत्त्वादिति चेन्न—ब्रह्मभिन्नसामान्यस्य ब्रह्मणि कल्पितत्वेन मिथ्यात्वाद्ब्रह्मणि सजातीयभेदादीनां सत्त्वेऽपि तदभावाविरोधात्। न च ब्रह्मभिन्नसामान्यस्य मिथ्यात्वे प्रमाणाभाव इति वाच्यम्—विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवदित्यनुमानस्यैव प्रमाण-

त्वात्। तथा हि—[1] तत्र विमतमित्यस्य विप्रतिपत्तिविषयतावच्छेदकावच्छिन्नमित्यर्थः। विप्रतिपत्तिश्च ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्तातादात्म्यवत्वे सति चिद्भिन्नं मिथ्या न वेति। तथा च विमतं मिथ्येत्यस्य ब्रह्मप्रमेत्यादिविशेषणत्रयविशिष्टं मिथ्येत्यर्थः। तत्र पक्षतावच्छेदककोटौ ब्रह्म प्रमातिरिक्ताबाध्यत्वे सतीति प्रथमविशेषणानुपादाने शुक्तिरूप्ये सिद्धसाधनमिति तद्वारणाय तदुपादानम्। न चावच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेः प्रतिबन्धकत्वाभावात्सत्तातादात्म्यविशिष्टचिद्भिन्नत्वावच्छेदेन मिथ्यात्वानुमितौ तत्सामानाधिकरण्येन [2] शुक्तिरूप्यविशेषकसिद्धेः प्रतिबन्धकत्वं न सम्भवतीति वाच्यम्—प्राचीनतार्किकैः सामानाधिकरण्येन सिद्धेरप्यवच्छेदकावच्छेदेनानुमितौ प्रतिबन्धकत्वाङ्गीकारात्। अत एव शब्दानित्यत्वानुमाने ध्वन्यादावंशतस्सिद्धसाधनवारणाय वर्णात्मकत्वं पक्षे निवेश्य वर्णात्मकशब्दो नित्य इति प्रतिज्ञा तार्किकैः स्वीकृता। अतः शुक्तिरूप्यवारणार्थं ब्रह्मप्रमातिरिक्ताबाध्यत्वविशेषणमावश्यकं। शुक्तिरूप्यस्य ब्रह्मप्रमातिरिक्तया शुक्तिप्रमया बाध्यत्वात् तद्व्यावृत्तिः। सत्तातादात्म्यवत्वे सतीति द्वितीयविशेषणानुपादानेऽसति बाध इति तद्वारणाय तद्विशेषणं। व्यावहारिकप्रातिभासिकोभयविधप्रपञ्चस्यैव सद्रूपब्रह्मोपादानकत्वेन सत्तातादात्म्यवत्वात्। असतश्च तथात्वाभावात्तद्व्यावृत्तिः। ब्रह्मणि बाधवारणाय चिद्भिन्नत्वरूपं विशेष्यं साध्यभूतमिथ्यात्वं च सदसद्विलक्षणत्वं। तत्र सत्त्वमबाध्यत्वं [3] स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वमिति यावत्। तद्विलक्षणत्वं च[4] स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वम्। असत्त्वं सत्तातादात्म्यशून्यत्वं। तद्विलक्षणत्वं च सत्तातादात्म्यवत्वं। तथा च [5] स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वसत्तातादात्म्योभयं साध्यं पर्यवसितं। अत्र सत्तातादात्म्यवत्वमात्रस्य साध्यत्वे सिद्धसाधनं स्यात्। सत्यत्ववादिभिरपि जगतः सद्रूपत्वाङ्गीकारात्। अतः [6] स्वप्रकाकधीविशेष्यताव्यापकाभावप्रतियोगित्वनिवेशः। [7] स्वप्रकारकधीविशेष्यतासमानाधिकरणाभावप्रतियोगित्वनिवेशोऽपि तथा। घटादेरपि स्वप्रकारकभ्रमविशेष्यभूतलादिनिष्ठाभावप्रतियोगित्वस्य सत्यत्ववादिभिरपि स्वीकारात्

---

[1] कर्तृविमतम् (क). [2] शुक्तिरूप्यविशेष्यप्रसिद्धेः (ख). [3] स्वप्रकारकादि (क). [4] स्वप्रकारकादि (क). [5] स्वप्रकारकादि (क). [6] स्वप्रकारकादि (क). [7] स्वप्रकारकादि (क).

अतोऽभावे[1] स्वप्रकारकधीविशेष्यताव्यापकत्वनिवेशः। स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वमात्रस्य साध्यत्वे असत्त्वमादायार्थान्तरं स्यादित्यतः सत्तातादात्म्यवत्वनिवेशः। यद्वा स्वाधिकरणताव्यापकीभूताभावप्रतियोगित्वमेव साध्यं। असतोऽधिकरणाप्रसिद्ध्याऽसत्त्वमादायार्थान्तरानवकाशात्। अथवा [2] ज्ञाननिवृत्तित्वरूपं मिथ्यात्वमेव साध्यं। सर्वस्यापि प्रपञ्चस्य ब्रह्मज्ञानेन निवर्तिष्यमाणत्वात् ज्ञाननिवृत्तित्वोपपत्तिः। हेतुभूतं दृश्यत्वमपि वृत्तिविषयत्वं घटादिरूपप्रपञ्चे चक्षुरादिजन्यान्तःकरणवृत्तिविषयत्वसत्त्वात्। न च वेदान्तजन्यवृत्तिविषयत्वस्य ब्रह्मण्यपि सत्त्वाद्व्यभिचारः, असतोऽपि शशशृङ्गादिपदजन्यवृत्तिविषयत्वात्तत्रापि व्यभिचार इति वाच्यं-शब्दाजन्यवृत्तिविषयत्वस्य विवक्षितत्वात्। न चैवमपि चक्षुरादिजन्यनिर्विकल्पकात्मकवृत्तिविषयत्वस्य ब्रह्मणि सत्त्वाद्व्यभिचार इति वाच्यं-सप्रकारकवृत्तिविषयत्वस्य तदर्थत्वात्। हेतुभूतं जडत्वं च ज्ञानभिन्नत्वं। ब्रह्मण एव ज्ञानस्वरूपत्वेन तद्भिन्नत्वस्य प्रपञ्चे सत्त्वात्। असति व्यभिचारवारणाय सत्तातादात्म्यवत्वं विशेषणं देयं। परिच्छिन्नत्वमप्यत्यन्ताभावप्रतियोगित्वं भेदप्रतियोगित्वं वा। अत्राद्ये असद्व्यावृत्तिः पूर्ववत्। न च भेदप्रतियोगित्वस्य ब्रह्मणि व्यभिचारो दुर्वारः, ब्रह्मण्यत्यन्ताभावप्रतियोगित्वान्नावश्यकत्वेऽपि घटादिनिष्ठभेदप्रतियोगित्वावश्यकत्वात्, अन्यथा ब्रह्मण एव घटत्वापत्तेरिति वाच्यं-स्वसमानसत्ताकभेदप्रतियोगित्वस्य तदर्थत्वात्। सत्ता हि त्रिविधा-पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी चेति। तत्र पारमार्थिकी ब्रह्मगता अबाध्यत्वरूपा। व्यावहारिकी[3] च ब्रह्मज्ञानबाध्यत्वरूपा प्रपञ्चगता। प्रातिभासिकी च ब्रह्मान्यज्ञानबाध्यत्वरूपा शुक्तिरूप्यादिगता। तत्र ब्रह्मणः स्वपदेनोपादाने स्वगतसत्ताया भेदेऽभावेन स्वपदेन घटादेरेवोपादेयत्वेन ब्रह्मणि व्यभिचारविरहात्। न च ब्रह्मभिन्नसामान्यस्य मिथ्यात्वाविशेषाद्व्यावहारिकत्वप्रातिभासिकत्वाभ्यां भेदानुपपत्तिरिति वाच्यं-ब्रह्मज्ञानबाध्यत्वतदन्यत्वाभ्यां विशेषस्योक्तत्वात्। यद्वा मूलज्ञानबाध्यज्ञानोपादानकं व्यावहारिकं [4] तुलाज्ञानोपादानकं च प्रातिभासिकमिति विशेषः। तत्र सकलव्यावहारिक-

---

[1] स्वप्रकारकादि (क). [2] ज्ञानानिवर्त्यत्वरूपं (ख). [3] ब्रह्मज्ञानाबाध्यत्वरूपा (ख).
[4] तूलाज्ञानोपादानकम् (ख).

प्रपञ्चोपादानभूतं ब्रह्माज्ञानं मूलाज्ञानं। प्रातिभासिकोपादानं शुक्त्याद्यज्ञानं च [1] तुलाज्ञानं। न चोक्तोभयविधाज्ञाने प्रमाणाभाव इति वाच्यं-अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षस्य, त्वदुक्तार्थं न जानामीति विशेषतः प्रत्यक्षस्य च प्रमाणत्वात्। न चाज्ञ इत्यादेर्ज्ञानाभाववानित्यर्थो [2] तादृशप्रत्यक्षस्यापि ज्ञानाभावविषयकत्वं युक्तमिति वाच्यं-अज्ञ इत्यस्य ज्ञानाभाववानित्यर्थकत्वे घटोऽज्ञ इति व्यवहारापत्तेः। अतो यथा स्याद्वादिमते अधर्मादिपदं द्रव्यार्थकं, तथा अज्ञानमपि द्रव्यार्थकमेवास्मन्मते। न चाहमज्ञ इत्यादिप्रत्यक्षस्य ज्ञानप्रागभावविषयकत्वमेव युक्तं—घटे ज्ञानप्रागभावाभावाच्च, न घटोऽज्ञ इत्यादि- [3] व्यवहारापत्तिः, अतो न तादृशप्रत्यक्षस्यातिरिक्तद्रव्यविषयकत्वं गौरवादिति वाच्यं-विकल्पासहत्वात्। प्रतियोगिज्ञानाधिकरणज्ञानकालीनस्याहमज्ञ इति प्रत्यक्षस्य ज्ञानप्रागभावविषयकत्वं? तच्छून्यकालीनस्य वा? नाद्यः—प्रतियोगिज्ञानादिसद्भावे ज्ञानप्रागभावस्यैवाभावेन तद्विषयकत्वायोगात्। न द्वितीयः—अभावप्रत्यक्षे अधिकरणज्ञानप्रतियोगिज्ञानयोः कारणत्वेन तच्छून्यतादशायामभावप्रत्यक्षस्यैवानुपपत्तेः। अतोऽहमज्ञ इत्यादिप्रत्यक्षस्य भावरूपाज्ञानविषयकत्वमेव वक्तव्यमिति प्रत्यक्षेण तत्सिद्धिः। एवं विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानेनापि तत्सिद्धिः। अत्र सुखादिविषयकचैतन्यरूपनित्यज्ञानस्याज्ञानपूर्वकत्वाभावात् बाधवारणाय प्रमाणज्ञानमिति प्रमाणजन्यं ज्ञानमित्यर्थः। इदमित्याकारायाः प्रमाणजन्यवृत्तेरज्ञानपूर्वकत्वाभावात् बाधवारणाय विवादाध्यासितमिति। विशेषाकारं प्रमाणजन्यज्ञानमित्यर्थः। साध्ये प्रमाणज्ञानप्रागभावमादाय सिद्धसाधनवारणाय स्वप्रागभावव्यतिरिक्तेति। स्वविषयावरणेत्यस्यानुपादाने प्रमाणज्ञानजनकादृष्टमादायार्थान्तरं। अदृष्टसामान्यस्य फलनिवर्त्यत्वेन ज्ञानजनकादृष्टस्य ज्ञाननिवर्त्यत्वात्, ज्ञानाधिकरणीभूतात्मगतत्वेन स्वदेशगतत्वात् अतः स्वविषयावरणेति। स्वप्रतिबन्धकादृष्टमादायार्थान्तरवारणाय स्वनिवर्त्येति। विषयगतज्ञातत्वाभावेनार्थान्तरवारणाय स्वदेशगतेति। हेतौ धारावाहिकद्वितीयादिज्ञाने अज्ञानपूर्वकत्वाभावाद्व्य-

---

[1] तूलाज्ञानम् (ख). [2] तादृशप्रत्यक्षमपि (क). [3] व्यवहारापत्तेः (ख).

भिचार इति तद्वारणायाप्रकाशितार्थेति। दिवारोपितप्रदीपप्रभायामन्धकारपूर्वकत्वाभावेन दृष्टान्ते साध्यवैकल्यमित्यतोऽन्धकारेति। रात्रावारोपितायामपि द्वितीयादिप्रभायामन्धकारपूर्वकत्वाभावात्तद्दोषतादवस्थ्यमित्यतः प्रथमेति। उक्तप्रत्यक्षानुमानसिद्धस्याज्ञानस्यानादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं लक्षणम्। तत्र प्रागभावेऽतिव्याप्तिवारणाय सत्यन्तम्। जनकादृष्टवारणायानादीति। जीवादिवारणाय ज्ञाननिवर्त्यत्वमिति। ज्ञानेनाज्ञानस्य नाशः, अज्ञाननाशाच्च जीवादिरूपानादिपदार्थनाश इति स्वीकारेण जीवस्य साक्षादज्ञाननिवृत्तित्वाभावात्तत्राव्याप्तिरिति वदन्ति।

अत्र प्रतिविधीयते—यदुक्तं तदवच्छिन्नचैतन्याभिन्नत्वमेव तत्साक्षात्कारित्वमिति तन्न—रूपादिविषयकसाक्षात्कारदशायां रूपादावन्तःकरणवृत्तिप्रसरणेन तादृशान्तःकरणावच्छिन्नचैतन्ये रूपावच्छिन्नचैतन्याभेदवद्गन्धावच्छिन्नचैतन्याभेदस्यापि सत्त्वेन रूपसाक्षात्कारवतश्चैत्रस्य गन्धसाक्षात्कारित्वप्रसङ्गात्। न च तदाकारवृत्त्यवच्छिन्नतदवच्छिन्नचैतन्याभिन्नत्वमेव तत्साक्षात्कारित्वं—रूपादिसाक्षात्कारकाले रूपाकारवृत्तिसत्त्वेऽपि गन्धाकारवृत्तेरभावात् गन्धावच्छिन्नचैतन्याभेदसत्त्वेऽपि गन्धाकारवृत्त्यवच्छिन्नचैतन्याभेदविरहात्, न तद्दशायां गन्धसाक्षात्कारित्वापत्तिरिति वाच्यम्—एवमपि चैत्रादेरनुमानादिना स्वगतधर्मादिविषयकं धार्मिकोऽहमित्यादिज्ञानं तद्दशायां धर्मादिसाक्षात्कारित्वापत्तेः। तदा धर्माकारवृत्त्यवच्छिन्नचैतन्याभेदधर्मावच्छिन्नचैतन्याभेदयोश्चैत्रे सत्त्वाद्विषयावच्छिन्नचैतन्याभेद इत्यत्र योग्यत्वं विषये निवेश्योक्तदोषवारणेऽपि सुखादिसाक्षात्कारिण्युक्तलक्षणस्याव्याप्तिः, सुखाद्याकारवृत्तेरद्वैतिभिरस्वीकारात्। एवं ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्तातादात्म्यवत्वे सति चिद्भिन्नं मिथ्यादृश्यत्वादित्याद्यनुमानमपि न युक्तम्—शुक्तौ भासमानस्यापणस्थरूप्यस्यैव शुक्तिरूप्यशब्दार्थतया तत्कालोत्पन्नमिथ्याभूतरजतस्य सत्यत्ववादिभिः कैरप्यनभ्युपगमेन सिद्धसाधनाप्रसक्तेः पक्षे आद्यविशेषणवैयर्थ्यात्। वादिरीत्या सिद्धसाधनस्य दोषत्वे अनुमानमात्रोच्छेदापत्त्या प्रतिवादिमत एव तस्य वक्तव्यत्वात्। सत्तातादात्म्यवत्वे सतीति द्वितीयविशेषणमपि व्यर्थम्। ब्रह्मण्यपि प्रातिभासिकस्य चिद्भेदस्य सत्त्वेन बाधवारणायोगेन स्वसमानसत्ताकचिद्भेदवत्वस्यैव चिद्भिन्नत्वमित्यनेन विवक्षणीयतया असति बाधाप्रसक्तेरसति तस्या अपि सत्ताया अभावात्। स्वप्रकारक धीविशेष्यताव्यापकीभूताभावप्रतियोगित्वसत्तातादात्म्योभयं

साध्यमित्यपि न युक्तम्—गगनादिवज्जगतो वृत्तित्वेऽप्युक्तसाध्योपपत्त्या अर्थान्तरात्। तदधिकरणे तदभावसाधनायोक्तसाध्यसाधनादुक्तसाध्यसिद्धावपि तदधिकरणे तदभावासिद्धेः। स्वाधिकरणताव्यापकीभूताभावप्रतियोगित्वं मिथ्यात्वमिति द्वितीयनिर्वचनमपि न युक्तम्। घटाद्यधिकरणेऽपि सम्बन्धान्तरावच्छिन्नघटाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य घटपटोभयाभावस्य प्रातिभासिकघटाभावस्य च सत्त्वेन सिद्धसाधनात्। संयोगेन घटत्वावच्छिन्नाधिकरणे संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नाभावस्य व्यावहारिकस्य पारमार्थिकस्य वा सिद्धेर्भवदभिमतत्वाज्ञाननिवर्त्यत्वं साध्यमित्यपि न युक्तम्—उत्तरज्ञानजन्यनाशप्रतियोगिनि पूर्वज्ञाने सिद्धसाधनात्। उत्तरज्ञानजन्यध्वंसप्रतियोगित्वेऽपि पूर्वज्ञानस्य यथा न मिथ्यात्वं तथा जगतो ब्रह्मज्ञानजन्यध्वंसप्रतियोगित्वेऽप्यमिथ्यात्वोपपत्त्याऽर्थान्तरात्। न चाधिष्ठानसाक्षात्कारत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वमेव ज्ञाननिवर्त्यत्वमतो न सिद्धसाधनं, उत्तरज्ञानस्य पूर्वज्ञानं प्रत्युत्तरविशेषगुणत्वेन नाशकत्वेऽप्यधिष्ठानसाक्षात्कारत्वेन नाशकत्वाभावात्, शुक्तिरूप्यं प्रति शुक्तिसाक्षात्कारत्वेनेव प्रपञ्चं प्रति ब्रह्मसाक्षात्कारत्वेन नाशकतयोक्तसाध्यस्य प्रपञ्चे सम्भवादिति वाच्यम्—मुद्गरपातादिजन्यनाशप्रतियोगिनि घटादौ साक्षात्कारत्वावच्छिन्नजनकताकनाशप्रतियोगित्वाभावेन बाधापत्तेः। शब्दाजन्यवृत्तिविषयत्वं सप्रकारकज्ञानविषयत्वं वा दृश्यत्वं हेतुरित्यपि न युक्तम्—पदवृत्तिप्रकारकज्ञानविषयस्य तात्पर्यज्ञानविषयस्य योग्यताज्ञानविषयस्यैव शाब्दबोधविषयत्वेन ब्रह्मणो वेदान्तजन्यशाब्दबोधविषयत्वाङ्गीकारे पदवृत्तिप्रकारकज्ञानविषयत्वादीनामावश्यकतया शाब्दजन्यज्ञानविषयत्वसप्रकारकज्ञानविषयत्वयोर्ब्रह्मणि दुरपह्नवतया व्यभिचारस्य दुर्वारत्वात्। सत्तातादात्म्यवत्त्वे सति ज्ञानभिन्नत्वरूपं जडत्वं हेतुरित्यपि न सत्। प्रातिभासिकस्य ज्ञानात्मकब्रह्मभेदस्य ब्रह्मण्यपि सत्त्वेन व्यभिचारात्। न च स्वसमानसत्ताकज्ञानभेदस्य हेतुत्वेन ब्रह्मणि तत्समानसत्ताकभेदाभावान्न व्यभिचार इति वाच्यम्—सत्तात्रैविध्यसिद्धेर्मिथ्यात्वसिध्यनन्तरभावितया अन्योन्याश्रयापत्तेः। सत्ताघटितहेतुसिद्धौ मिथ्यारूपसाध्यसिद्धिः। मिथ्यारूपसाध्यसिद्धौ च सत्तात्रैविध्यसिद्धिरिति। एतेन स्वसमानसत्ताकभेदप्रतियोगित्वरूपं परिच्छिन्नत्वं हेतुरित्यपि निरस्तम्। अहमज्ञ इत्यादि प्रत्यक्षेण भावरूपाज्ञानसाधनमपि न युक्तम्—

अहमज्ञ इति प्रत्यक्षे ब्रह्मज्ञानस्यैव विषयताया भवदभिमतत्वेनास्माभिरपि ब्रह्मज्ञानप्रागभावस्य विषयत्वाङ्गीकारे विरोधाभावात्। ब्रह्मज्ञानरूपप्रतियोगिविषयकज्ञानस्याहंपदार्थरूपाधिकरणज्ञानसत्त्वेऽपि ब्रह्मज्ञानप्रागभावसम्भवात्। न च ज्ञानविषयकज्ञानस्य विषयविषयिकत्वनियमाद्ब्रह्मज्ञानरूपप्रतियोगिविषयकज्ञानमपि ब्रह्मविषयकमेवेति तत्सत्त्वे कथं ब्रह्मज्ञानप्रागभावसम्भव इति वाच्यम्—ब्रह्मविषयकसप्रकारकज्ञानसत्त्वेऽपि निष्प्रकारकज्ञानस्य वेदान्तवाक्यजन्यस्येदानीमभावेन तत्प्रागभावस्य तादृशप्रत्यक्षविषयतासम्भवेनातिरिक्ताज्ञानविषयकत्वकल्पनस्य गुरुत्वात्। अनुमानमपि दुष्टमेव। प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्याकारकानुमितेरपि प्रमाणज्ञानत्वेन पक्षतावच्छेदकाक्रान्तत्वेन तत्राज्ञानपूर्वकत्वाभावेन बाधात्। अज्ञानविषयकाज्ञानस्य भवद्भिरनङ्गीकारात्। सामानाधिकरण्येन साध्यतां स्वीकृत्योक्तबाधवारणेऽपि तादृशानुमितौ व्यभिचारो दुर्वारः। न चाज्ञानस्याज्ञानत्वेनैव अज्ञानविषयत्वं स्वीक्रियते, स्वप्रागभावव्यतिरिक्तेत्याद्युक्तसाध्यतावच्छेदकरूपेण अज्ञानविषयत्वमस्त्येवेति न बाधो न व्यभिचारश्चेति वाच्यम्—एवमपि हेतोर्विकल्पासहत्वात्। अप्रकाशितार्थप्रकाशकत्वमप्रकाशितार्थविषयकज्ञानत्वं वा? तादृशज्ञानजनकत्वं वा? आद्ये दृष्टान्ते [1] प्रदीपप्रभायां साधनवैकल्यम्। द्वितीये स्वरूपासिद्धिः। अथाप्रकाशितार्थप्रकाशकत्वं नामाप्रकाशित इत्याकारकव्यवहारविषयतासमानाधिकरणविषयताप्रयोजकत्वमेव। तच्च ज्ञानतज्जनकोभयसाधारणमिति न साधनवैकल्यं, नासिद्धिश्चेति न वाच्यं—तथापीन्द्रियादिषु व्यभिचारस्य दुर्वारत्वादिति दिक्।

रामानुजीयास्तु—ब्रह्म सर्वज्ञं जगत्कर्तृत्वात्, जगदुपादानादिविषयकसाक्षात्कारं विना तत्कर्तृत्वानुपपत्तेः। न च ब्रह्मणो जगत्कर्तृत्वरूपनिमित्तत्वस्वीकारे उपादानं किमिति वाच्यं—सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण एवोपादानत्वात्। न चोपादानभिन्नत्वे सति कारणत्वस्यैव निमित्तत्वरूपत्वात्, ब्रह्मण उपादानत्वे निमित्तत्वं न सम्भवतीति ब्रह्मण अभिन्ननिमित्तोपादानत्वसिद्धान्तभङ्ग इति वाच्यं—कालघटसंयोगं प्रति कालस्य द्रव्यत्वेनोपादानत्वस्य कालत्वेन निमित्तत्वस्य च सत्त्वेनोपादानभिन्नकारणत्वस्य निमित्तकारणलक्षणत्वाभावात्, उपादानताभिन्न-

---

[1] प्रदीपप्रभायाः (ख).

कारणत्वस्यैव तल्लक्षणत्वात् । काले द्रव्यत्वकालत्वरूपावच्छेदकभेदेनोपादानत्वनिमित्तत्वयोर्भेदवत् ब्रह्मण्यपि सूक्ष्मचिदचिद्विशिष्टत्वसर्वज्ञत्वरूपावच्छेदकभेदेनोपादानत्वनिमित्तत्वयोर्भेदात्, ब्रह्मणस्सूक्ष्मचिदचिद्विशिष्टत्वेनोपादानत्वात्, सर्वज्ञत्वेन च निमित्तत्वात् । न च ब्रह्मणो निर्विकारत्वेन परिणामित्वाभावादुपादानत्वं न सम्भवतीति वाच्यं—विशेषणयोस्सूक्ष्मचिदचितोः स्थूलावस्थारूपपरिणामसत्त्वेन विशिष्टस्योपादानत्वोपपत्तेः । न चैवं विशेषणयोरेवोपादानत्वं स्यात्तयोरेव परिणामित्वात्, न तु विशिष्टस्य परिणामित्वाभावात्, परिणामिन एवोपादानत्वादिति वाच्यं—यथा घटादिद्वारा जलधारकस्यापि चैत्रस्य जलं वहति चैत्र इति जलवहनकर्तृत्वं; यथा वा मञ्चशय्यादिद्वारा शयनाधिकरणस्यापि प्रासादस्य प्रासादे शेत इति शयनाधिकरणत्वं, तथा विशेषणद्वारा परिणामिनोऽपि ब्रह्मण उपादानत्वमुपपन्नमिति वदन्ति । तन्न—विशेषणस्य परिणामित्वेऽपि विशिष्टस्योपादानत्वे घटं प्रति मृद्विशिष्टगगनादेरुपादानतापत्तेः । मृदा सुवर्णघटस्य सुवर्णेन मृद्घटस्य चानुत्पत्त्या सजातीययोरेवोपादानोपादेयभावस्य वाच्यतया अचेतनजगत्प्रति चेतनस्योपादानत्वानुपपत्तेः । अन्यथा जगतोऽपि चेतनत्वापत्तेः ।

माध्वास्तु—ईश्वरो जगत्कर्ता, सत्त्वरजस्तमोमयं प्रधानरूपं द्रव्यं जगदुपादानं । न चैकेनैव प्रधानरूपद्रव्येण सकलप्राणिनां सृष्ट्यङ्गीकारे देवमनुष्यादिवैचित्र्यानुपपत्तिरिति वाच्यं—उपादानस्याविशेषेऽपि कर्मरूपसहकारिकारणस्य विचित्रत्वेन देवमनुष्यादिवैचित्र्योपपत्तेः । न चेश्वरः कुत्र विद्यमानस्सन् जगत् सृजतीति वाच्यं—वैकुण्ठलोके विद्यमानस्सन् जगत् सृजतीत्यभ्युपगमात् । वैकुण्ठलोकश्च ज्ञानात्मकैर्नदीपर्वतादिभिः परिवृतः स्वयमपि ज्ञानात्मको नित्य एव । अतो न वैकुण्ठलोकसृष्टौ लोकान्तरे विद्यमानत्वापेक्षेत्याहुः । तन्न—वैकुण्ठलोकस्य सृज्यत्वमनङ्गीकृत्य तल्लोके विद्यमानेनेश्वरेणैतल्लोकस्य सृष्ट्यङ्गीकारापेक्षया एतल्लोकस्यैव सृज्यत्वाभावाभ्युपगमस्य युक्तत्वात् । ज्ञानात्मकवैकुण्ठलोकाभ्युपगमोऽपि न युक्तः-तल्लोकवदेतल्लोकस्यापि ज्ञानात्मकत्वप्रसङ्गेन योगाचारमतप्रसङ्गात् । किंचेश्वरो जगत् किमर्थं सृजति? अन्येन प्रयुक्तत्वात्? कृपावशात्? क्रीडावशात्? स्वभावाद्वा? नाद्यः—स्वातन्त्र्यहानिप्रसङ्गात् । स्वभिन्नाप्रयोज्यव्यापारवत्त्वं हि

स्वातन्त्र्यं। न द्वितीयः—दुःखिनामकरणप्रसङ्गात्। स्वार्थनिरपेक्षपरदुःखनिराकरणेच्छाया एव कृपारूपत्वेन निरुक्तकृपावतः परदुःखकरणानुपपत्तेः। द्रव्यं स्वीकृत्य रोगादिरूपदुःखनिरासके वैद्ये कृपावारणाय स्वार्थनिरपेक्षेति। कृपापरस्य प्रलयविधानानुपपत्तेश्च। यत्तु बहूनां प्राणिनां पापे प्रवृत्तिमवलोक्य तादृशप्रवृत्तिपरिहारायेश्वरेण प्रलयकरणात्तु प्रलयोत्पादनं कृपाकार्यं। एवं पुत्रादेर्व्रणे जाते तत्परिहाराय शस्त्रप्रयोगवत्प्राणिनां पापपरिहाराय दुःखोत्पादनमपि कृपाकार्यमिति। तन्न—पापमुत्पाद्य तत्परिहाराय प्रलयादिकरणापेक्षया पापसृष्ट्यकरणस्यैव प्रक्षालनाद्धीति न्यायेन युक्तत्वात्। न तृतीयः—बालकवदज्ञत्वप्रसङ्गात्। आनन्दार्थं क्रीडोपकरणापेक्षायामपूर्णताप्रसङ्गात्। इष्टतदुपायान्यतरविषयकेच्छाराहित्यस्यैव पूर्णतारूपत्वात्। न च चतुर्थः—सृष्टेः स्वाभाविकत्वे सर्वदा सृष्टेरेव प्रसङ्गेन प्रलयानुपपत्तेः। प्रलयस्य स्वाभाविकत्वे प्रलयस्यैव प्रसङ्गेन सृष्टेरनुपपत्तेरित्यास्तां विस्तरः।

मुख्यामुख्यविभेदभिन्नमखिलं प्रत्यक्षमासूत्रितम्
मिथ्यैकान्तदृशां मतं च बहुधा देवैर्यदुन्मूलितम्।
तद्व्याख्या तु मया प्रभेन्दुवचसां संशीलनादाकृता
तां दृष्ट्वा मुदमुद्वहन्तु विबुधोत्तंसा गुणग्राहिणः॥

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेल्गुळपुरनिवासरसिकस्याभिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां प्रत्यक्षप्रमाणपरिच्छेदो

द्वितीयः

---

## अथ तृतीयः परिच्छेदः

---

उद्देशक्रमानुसारेण प्रत्यक्षं निरूप्य परोक्षं निरूपयति—

**परोक्षमितरत् ॥ १ ॥**

प्रत्यक्षान्यत्वे सति ज्ञानत्वं परोक्षस्य लक्षणम् । प्रत्यक्षेऽति व्याप्तिवारणाय सत्यन्तम् । घटादावतिव्याप्तिवारणाय विशेष्यम् । न च परोक्षज्ञानस्यापि स्वांशे प्रत्यक्षत्वात्तद्भिन्नत्वघटितलक्षणासम्भव इति वाच्यं—स्वभिन्ननिष्ठविशदविषयताकान्यत्वे सति ज्ञानत्वस्य विवक्षितत्वात् । उक्तपरोक्षस्य सामग्रीनिरूपणपूर्वकं विभागमाह—

**प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदम् ॥ २ ॥**

अत्र प्रत्यक्षादीत्यादिपदेन परोक्षं गृह्यते, स्मृत्यादेः प्रत्यक्षपूर्वकत्ववत्परोक्षपूर्वकत्वस्यापि सम्भवात् । तच्च यथावसरं निरूपयिष्यते । प्रत्यक्षादिजन्यं परोक्षं स्मृत्यादिभेदेन पञ्चविधमित्यर्थः । क्रमप्राप्तां स्मृतिं निरूपयति—

**संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः ॥ ३ ॥**

**स देवदत्तो यथा ॥ ४ ॥**

संस्कारः सांव्यवहारिकप्रत्यक्षभेदः धारणा, तस्या उद्बोधः "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका" इत्युक्तक्रमेण सदृशदर्शनादिवैशिष्ट्यं । तथा च सदृशदर्शनादिसहितसंस्कारजन्या तदित्याकारा स्मृतिरित्यर्थः । उद्बोधकसहितधारणाजन्यत्वं स्मृतेर्लक्षणं । घटादिविषयकधारणानन्तरं पटादिज्ञाने जाते तादृशपटादिज्ञानरूपोत्तरपर्यायस्य पूर्वपर्यायरूपधारणाजन्यत्वात्तत्रातिव्याप्तिवारणायोद्बोधकसहितेति धारणाविशेषणं । उद्बोधकसहितधारणया च स्मृतिरेव जायत इति नातिव्याप्तिः । एतेन ज्ञानत्वस्य स्मृतिलक्षणत्वे प्रत्यक्षादावतिव्याप्तिः । अनुभूतार्थविषयकज्ञानत्वस्य तल्लक्षणत्वेऽपि तथा । प्रत्यक्षस्याप्यन्यानुभूतार्थविषयकत्वात् । न च स्वसामानाधिकरण्यस्वसमानविषयकत्वस्वोत्तरत्वैतत्त्रितयसम्बन्धेनानुभवविशिष्टज्ञानत्वमेव स्मृतिलक्षणं—अत्र स्वसामाना-

धिकरण्यनिवेशात् अन्यानुभूतार्थविषयकप्रत्यक्षे नातिव्याप्तिः—पटाद्यनुभवानन्तरकालीनघटादिप्रत्यक्षे अतिव्याप्तिवारणाय स्वसमानविषयकत्वनिवेशः, घटादिप्रत्यक्षपूर्वकालीनघटादिप्रत्यक्षवारणाय स्वोत्तरत्वनिवेश इति वाच्यं — एवमपि धारावाहिकद्वितीयप्रत्यक्षातिव्याप्तेर्दुर्वारत्वात् तस्मात् स्मृतेर्लक्षणं दुर्वचमिति निरस्तं, उक्तरीत्या निर्दुष्टस्य स्मृतिलक्षणस्य कथनात्। यत्तु संस्कारमात्रजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणं। प्रत्यक्षादिवारणाय सत्यन्तं। संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्यं। प्रत्यभिज्ञायाः सोऽयं देवदत्त इत्याकारकायास्तत्तांशे संस्कारजन्यत्वात् अज्ञानत्वाच्च तत्रातिव्याप्तिरिति तद्वारणाय मात्रपदं। प्रत्यभिज्ञाया अयमंशे इन्द्रियजन्यत्वेन संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वरूपसंस्कारमात्रजन्यत्वाभावाद्वारणमिति नैयायिकैरुक्तं। तन्न—प्रत्यभिज्ञायाः स्मरणजन्यत्वेन संस्कारजन्यत्वाभावेन तत्रातिव्याप्त्यप्रसक्त्या मात्रपदवैयर्थ्यात्। स्मृतेः संस्कारेतरात्मादिजन्यत्वेन मात्रपदनिवेशे असंभवापत्तेश्च। न चेन्द्रियाजन्यत्वे सति संस्कारजन्यत्वस्य संस्कारमात्रजन्यत्वरूपत्वान्नासम्भवः —स्मृतेरिन्द्रियाजन्यत्वात् प्रत्यभिज्ञायाश्च तज्जन्यत्वाद्व्यावृत्तिरिति वाच्यं—स्मृतेरपि मनोरूपेन्द्रियजन्यत्वेन असम्भवतादवस्थ्यात्। मनोभिन्नेन्द्रियाजन्यत्वे सतीति निवेशे च योऽहं यौवने दृढज्ञानवान्, सोऽहमिदानीं विस्मरणशीलस्संवृत्त इत्यादिमानसप्रत्यभिज्ञायामतिव्याप्तेः तस्या मनोभिन्नेन्द्रियजन्यत्वादिति।

सौगतास्तु—पदार्थानां क्षणिकत्वेन अनुभूतार्थस्य स्मृतिकालेऽसत्त्वे स्मृतेरसद्विषयकत्वात् अप्रामाण्यमिति वदन्ति। तन्न—प्रत्यक्षस्यापि भवन्मते इन्द्रियसम्बद्धार्थविषयकत्वेन प्रत्यक्षकाले इन्द्रियसम्बद्धपदार्थस्य नाशेनासत्त्वादसद्विषयकप्रत्यक्षस्याप्यप्रामाण्यापत्तेः। प्रत्यक्षविषयस्य प्रत्यक्षकालेऽसत्त्वेऽपि स्वकाले सत्त्वात्तद्विषयकस्य प्रत्यक्षस्य प्रामाण्ये तथैव स्मृतेरपि प्रामाण्यमवर्जनीयमिति।

मायावादिनस्तु—गृहीतग्राहित्वात् स्मृतिरप्रमाणं। न चाप्रामाण्यं मिथ्याभूतार्थमिषयकत्वं—तच्च स्मृतेर्नागतं सत्यार्थविषयकत्वेऽपि गृहीतग्राहित्वोपपत्तेरिति वाच्यं—स्मृतेरनुभूतत्वेन मिषयग्राहकतया अनुभवस्य भ्रमरूपतासम्भवेन भ्रमविषयत्वेन वस्तुग्राहकत्वाद्भ्रमविषयत्वस्य च मिथ्यात्वव्याप्यत्वेन मिथ्याभूतार्थग्राहकत्वोपपत्तेरित्याहुः। तन्न—एवमपि प्रमाविषयत्वेन स्वविषयग्राहिण्याः स्मृतेरप्रामाण्यायोगात्। अन्यथा

ह्रदो वह्निमानित्यनुमितेरप्रामाण्यदर्शनेन पर्वतो वह्निमानित्यनुमितेरप्य-प्रामाण्यापत्तेः । न च स्याद्वादिमतेऽपि स्मृतेरनुभूतार्थविषयकत्वेना-पूर्वार्थत्वाभावात् अप्रामाण्यापत्तिरिति वाच्यं—अनुभवेन वर्तमानकाला-वच्छिन्नतया पदार्थस्य ग्रहणेऽप्यतीतत्वेनाग्रहणेनातीतत्वरूपापूर्वार्थग्राह-कतया स्मृतेः प्रामाण्योपपत्तेः । न चातीतत्वस्याननुभूतस्य स्मृतौ कथं भानमन्यथा अननुभूतघटादीनामपि भानप्रसङ्ग इति वाच्यं—[1]अतीतत्व-भिन्नविषयांश एवानुभवस्य कारणत्वात् । स्मृतिसामान्य एवातीतत्व-भानेन तज्ज्ञाने अनुभवस्याहेतुत्वादिति । अथेदानीं प्रत्यभिज्ञां निरूप-यति—

**दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानं, तदेवेदं, तत्सदृशं, तद्विलक्षणं, तत्प्रतियोगीत्यादि ॥ ५ ॥**

दर्शनस्मरणकारणकं—प्रत्यक्षस्मरणोभयजन्यं, सङ्कलनं—प्रत्यक्ष-स्मरणोभयविषयताव्यापकविषयताकं प्रत्यभिज्ञानमित्यर्थः । तथा च प्रत्यक्षस्मरणोभयजन्यत्वे सत्युभयविषयताव्यापकविषयताकत्वं प्रत्यभि-ज्ञाया लक्षणं । घटो रूपवानिति प्रत्यक्षे घटो रूपवानिति स्मरणतादृश-प्रत्यक्षोभयविषयताव्यापकविषयताके अतिव्याप्तिवारणाय सत्यन्तं । तादृश प्रत्यक्षस्य तदुभयजन्यत्वाभावान्नातिव्याप्तिः । पक्षप्रत्यक्षव्याप्तिस्मरणो-भयजन्यानुमितावतिव्याप्तिवारणाय विशेष्यदलं । तस्याः स्मरणविषयी-भूतव्याप्तघटकविषयकत्वेनोभयविषयताव्यापकविषयताकत्वाभावान्नाति-व्याप्तिः । उभयविषयकत्वनिवेशे अनुमितावतिव्याप्तिस्तादवस्थ्या उभय विषयीभूतवह्निपर्वतोभयविषयकत्वात् , अत उभयविषयताव्यापकविषय-ताकत्वनिवेशः । स्मरणजन्यत्वे सति स्मरणविषयताव्यापकविषयता-कत्वस्य निवेशे धारावाहिकद्वितीयादिस्मृतावतिव्याप्तिः । प्रत्यक्षजन्यत्वे सति प्रत्यक्षविषयताव्यापकविषयताकत्वस्य निवेशे धारावाहिकद्विती-यादिप्रत्यक्षेऽतिव्याप्तिः । अत उभयजन्यत्वे सत्युभयपक्षताव्यापकविषय-ताकत्वस्य निवेशः ।

अत्र नैयायिकाः—प्रत्यभिज्ञानं न प्रमाणान्तरं, तस्येन्द्रियजन्यत्वेन प्रत्यक्षान्तर्भूतत्वात् । न च प्रत्यभिज्ञाने इन्द्रियजन्यत्वमसिद्धं । अङ्कुरा-

---

[1] अतीतत्वं (ख).

देर्बीजान्वयव्यतिरेकानुविधानेन बीजजन्यत्ववत्प्रत्यभिज्ञाया इन्द्रियान्वयव्यतिरेकानुविधायित्वेनेन्द्रियजन्यत्वावश्यकत्वात् । तस्मात्संस्कारजन्यत्वे सतीन्द्रियजन्यं ज्ञानं प्रत्यभिज्ञानं । प्रत्याभिज्ञाभिन्नप्रत्यक्षातिव्याप्तिवारणाय सत्यन्तं। स्मृतिवारणाय विशेष्यदलं। अतः संस्कारेन्द्रियाभ्यां स्मृतिं प्रत्यक्षं च कल्पयित्वा तदनन्तरं प्रत्यभिज्ञानकल्पनमनुचितं गौरवात्, संस्कारेन्द्रियाभ्यामेव प्रत्यभिज्ञाननिर्वाहादिति वदन्ति। तन्न—संस्कारस्य स्मृतिं प्रति कारणत्वेन प्रत्यभिज्ञास्थले संस्कारसत्त्वेन तत्र स्मृत्यनुत्पत्तौ बीजाभावात् । तद्विशेष्यकस्मृतिं प्रति तन्निष्ठेन्द्रियसन्निकर्षस्य प्रतिबन्धकत्वकल्पने गौरवात्, प्रत्यभिज्ञास्थलसिद्धस्य तत्तां स्मरामीत्यनुभवस्यापलापापत्तेश्च। न च सोऽयं देवदत्त इति प्रत्यभिज्ञास्थले देवदत्तं साक्षात्करोमीत्यनुभवानुपपत्तिरिति वाच्यं–तस्य प्रत्यभिज्ञापूर्वकालीनप्रत्यक्षविषयकतयोपपत्तेः । अन्यथा पर्वतो वह्निमानित्यनुमितिस्थलेऽपि पर्वतं साक्षात्करोमीत्यनुभवसत्त्वेन व्याप्ति ज्ञानेन्द्रियाभ्यां जायमानं प्रत्यक्षमनुमितिरिति स्वीकारापत्त्या अनुमानस्यापि प्रत्यक्षान्तर्भावापत्तेः। अनुमितिस्थले पर्वतं साक्षात्करोमीत्यनुभवस्यानुमितिपूर्वकालीनप्रत्यक्षविषयकत्वे प्रकृतेऽपि तथात्वकल्पनं युक्तमिति स्मृतिप्रत्यक्षोभयजन्यं प्रत्यभिज्ञानं प्रमाणान्तरमेव। उक्तप्रत्यभिज्ञानमखिलजनाववोधार्थमुदाहरणद्वारेण स्पष्टयति—

स एवायं देवदत्तः ॥ ६ ॥

गोसदृशो गवयः ॥ ७ ॥

गोविलक्षणो महिषः ॥ ८ ॥

इदमस्माद्दूरम् ॥ ९ ॥

वृक्षोऽयमित्यादि ॥ १० ॥

अत्र सौगताः—दर्शनस्मरणजन्यं प्रत्यभिज्ञानरूपं नैकं ज्ञानं, दर्शनस्मरणरूपज्ञानद्वयातिरिक्ते प्रत्यभिज्ञाने मानाभावात् । न च प्रत्यभिज्ञानमेकमित्यनुभवात् तदुभयजन्यमेकं ज्ञानं स्वीकर्तव्यमिति वाच्यम्—प्रत्यभिज्ञानस्य तत्तांशे विशदत्वेनेदमंशे अविशदत्वेन विशदत्वाविशदत्वरूपविरुद्धधर्मयोरेकत्रासम्भवेन प्रत्यभिज्ञानस्य ज्ञानद्वयरूपताया एव युक्तत्वात् । अन्यथा प्रत्यक्षानुमित्योरप्यैक्यप्रसङ्गात् । अस्तु वा प्रत्यभिज्ञानं

ज्ञानद्वयातिरिक्तम् । तथापि न प्रमा—तद्देशतत्कालवृत्तित्वरूपतत्ताया एतद्देशैतत्कालवृत्तिरूपेदन्तायाश्च परस्परं विरोधेनैकत्र समावेशासम्भवेन तत्तेदन्तोभयविशिष्टव्यक्त्यैक्यस्य बाधितत्वात् । लूनपुनर्जातनखकेशादौ तदेवेदमिति प्रत्यभिज्ञाया इव प्रत्यभिज्ञासामान्यस्य भ्रमत्वात् । अस्तु वा प्रत्यभिज्ञानं प्रमा तथापि न तत्पूर्वोत्तरकालवृत्तिव्यक्त्यभेदविषयकम् । किंतु सोऽयं घट इत्यादिरूपं घटत्वादिरूपजात्यवच्छिन्नाभेदविषयकम् । न च सोऽयं घट इत्यादिप्रत्यभिज्ञानस्य घटत्वरूपजात्यवच्छिन्नाभेदविषयकत्वे घटोऽयमिति ज्ञानात्तद्वैलक्षण्यानुपपत्तिरिति वाच्यम्—घटोऽयमिति ज्ञाने स्वरूपतो घटत्वावच्छिन्नाभेदो भासते । सोऽयं घट इति ज्ञाने च तद्व्यक्तिवृत्तित्वमधिकं घटत्वे भासत इति विशेषोपपत्तेः । न च सोऽयं घट इति प्रत्यभिज्ञानस्य जात्यवच्छिन्नाभेदविषयकत्वे तज्जातीयोऽयमित्याकारापत्तिरिति वाच्यम्—जातित्वेन घटत्वस्यानुपस्थितत्वेन स्वरूपेणोपस्थितिदशायां तथाविधाकारासम्भवादिति वदन्ति । तन्न—प्रत्यभिज्ञापूर्वकालीनयोर्दर्शनस्मरणयोर्विशदत्वाविशदत्वरूपविरूपविरुद्धधर्माक्रान्तत्वेऽपि पर्वतो वह्निमानित्यनुमितेः पर्वतांशेऽप्यस्पष्टत्ववत् । प्रत्यभिज्ञाया इदमंशेऽप्यस्पष्टत्वेन विरुद्धधर्मद्वयाक्रान्तत्वाभावात् । प्रत्यभिज्ञानस्यैकज्ञानरूपत्वे बाधकाभावात् । लूनपुनर्जातनखकेशादौ तदेवेदं न भवतीति बाधकप्रत्ययेन तत्प्रत्यभिज्ञाया भ्रमत्वे स एवायं घट इति प्रत्यभिज्ञाया भ्रमत्वायोगात् । बाधकरहितप्रत्ययस्यापि भ्रमत्वे ज्ञानसामान्यस्य भ्रमत्वापत्त्या शून्यतापत्तेः, प्रत्यभिज्ञानस्य तज्जातीय[1]घटाभेदविषयकत्वमित्ययुक्तं, यत्सत्तत्क्षणिकमित्यनुमानवैयर्थ्यापत्तेः । प्रत्यक्षस्य वर्तमानकालसम्बन्धग्राहकत्वात्, पूर्वोत्तरकालसम्बन्धाग्राहकत्वात्प्रत्यक्षसिद्धमेव क्षणिकत्वम् । अनुमानं तु स्थिरत्वारोपनिवृत्त्यर्थमिति सौगतसिद्धान्तात् प्रत्यभिज्ञायास्तज्जातीयाभेदविषयकत्वमङ्गीकृत्य पूर्वोत्तरकालवृत्तिव्यक्त्यैक्यविषयकत्वानङ्गीकारे स्थिरत्वारोपस्यैवाभावेन तन्निवर्तकानुमानवैफल्यादिति ॥

मीमांसकास्तु — अभेदसम्बन्धावच्छिन्नपूर्वकालवृत्तित्वावच्छिन्नप्रकारतानिरूपितैतत्कालवृत्तित्वावच्छिन्नविशेष्यताकत्वे सतीन्द्रियजन्यज्ञानत्वं प्रत्यभिज्ञाया लक्षणम् । अत्रायं घट इत्यादिप्रत्यक्षवारणाय

---

[1] घटभेदविषयकत्वम् (क).

सत्यन्तम्। सोऽयं देवदत्त इत्यादिवाक्यजन्यबोधवारणाय विशेष्यम्। न च गोदर्शनाहितसंस्कारस्य पुरुषस्य पुनर्गवयदर्शनाद्गोस्मरणे सत्यनेन सदृशी सा गौरित्याकारकं यत्प्रत्यभिज्ञानं तत्राभेदसम्बन्धावच्छिन्नप्रकारताकत्वघटितोक्तलक्षणाभावादव्याप्तिरिति वाच्यं—तादृशज्ञानस्योपमानरूपप्रमाणान्तरत्वेन प्रत्यभिज्ञालक्षणालक्ष्यत्वात्। उक्तं च—

तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम्।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम्॥ इति॥

अत एकत्वविषयकज्ञानमेव प्रत्यभिज्ञानम्। [1]सादृश्यविषयकज्ञानं तूपमानाख्यं प्रमाणान्तरमेवेति वदन्ति। तन्न—यथा गोदर्शनाहितसंस्कारस्य गवयदर्शिनोऽनेन सदृशी सा गौरिति ज्ञानमुपमानाख्यप्रमाणान्तरं, तथा महिष्यादिदर्शिनोऽनेन विलक्षणा सेति ज्ञानमपि प्रमाणान्तरं स्यात्। ततश्च प्रमाणसङ्ख्याव्याघातः। न च वैलक्षण्यस्य सादृश्याभावरूपत्वात्तद्विषयकज्ञानमभावप्रमाणमेवेति न सङ्ख्याव्याघात इति वाच्यं—वैलक्षण्यं भावरूपम्। तदभाव एव सादृश्यमित्यस्य विनिगमनाविरहेणापत्तेः। न च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमेव तत्सादृश्यं—यथा—चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकरत्वमेव मुखे चन्द्रसादृश्यं, अत्र चन्द्रे चन्द्रसादृश्यवारणाय सत्यन्तं, घटादौ चन्द्रसादृश्यवारणाय विशेष्यं, घटादावपि चन्द्रवृत्तिप्रमेयत्वादिसत्त्वात्तद्दोषतादवस्थ्यमित्यतो भूयःपद, तथा च सादृश्यं भावरूपमेव, नाभाव इति वाच्यं–तदवृत्तिभूयोधर्मवत्त्वमेव तद्वैलक्षण्यमिति तदपि भावरूपमित्यस्य समानत्वात्। अतः सादृश्यज्ञानवैलक्षण्यज्ञानादीनामपि दर्शनस्मरणकारणकत्वात्प्रत्यभिज्ञानत्वमेव युक्तमिति नोपमानं प्रमाणान्तरम्॥

नैयायिकास्तु—उपमितिकरणमुपमानम्। अत्र करणत्वमात्रोक्तौ घटकरणदण्डादावतिव्याप्तिरत उपमितीति। शब्दविषयकत्वव्याप्यजातिमत्त्वे सति परोक्षत्वमुपमितिलक्षणम्। अनुमितिवारणाय सत्यन्तम्। शब्दविषयकत्वव्याप्या या जातिः श्रावणप्रत्यक्षत्वं [2]तद्वत्तस्य [3]श्रावणप्रत्यक्षकत्वे सत्त्वात्तत्रातिव्याप्तिवारणाय विशेष्यम्। गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवतो वनं गतस्य पुंसो यद्गवयदर्शने सत्ययं गोसदृश इति ज्ञानं जायते तत् [4]करणम्। अतिदेशवाक्यार्थस्मृतिर्व्यापारो

---

[1] सादृश्यादिविशेषितम् (क). [2] तद्वत्त्वस्य (क). [3] श्रावणप्रत्यक्षे (ख). [4] कारणम् (क).

व्यापारवत्कारणस्यैव करणत्वात् । तदनन्तरं गवयो गवयपदवाच्य इति यद्ज्ञानं जायते तदेवोपमितिरूपं फलं । तत्रोपमितिसामान्ये शब्दविषयकत्वसत्त्वादुपमितित्वस्य शब्दविषयकत्वव्याप्यत्वोपपत्तिः । तादृशोपमितिर्न तावत्प्रत्यक्षं । प्रत्यक्षस्यायोग्यवाच्यत्वविषयकत्वासम्भवात् । नाप्यनुमितिः—व्याप्तिज्ञानजन्यत्वाभावात् । नापि प्रत्यभिज्ञा—उपमितेर्दर्शनस्मरणकारणकत्वाभावात् । तस्मादुपमानं प्रमाणान्तरमेवेति वदन्ति । तन्न—उक्तोपमितेर्गोसादृश्यविशिष्टगवयदर्शनातिदेशवाक्यार्थस्मरणोभयजन्यत्वेनोभयविषयताव्यापकविषयताकत्वेन च प्रत्यभिज्ञान्तर्भावस्य दुरपह्नवत्वात् । किंच—यदि गवयो गवयपदवाच्य इति ज्ञानं प्रमाणान्तरं तदा वृक्षाद्यनभिज्ञस्य शाखादिमान् वृक्ष इति वाक्यं श्रुतवतः शाखादिमद्वस्तुदर्शनानन्तरं तद्वाक्यार्थस्मरणेनायं वृक्षपदवाच्य इति यद्ज्ञानं जायते, एवं पयोम्बुभेदी हंस इत्यादिवाक्यं श्रुतवतस्तद्दर्शने सति तद्वाक्यार्थस्मरणादयं हंसपदवाच्य इति च यद्ज्ञानं जायते, तथा गवयविलक्षणो महिष इत्यादिवाक्यस्थलेऽयं महिषपदवाच्य इति यद्ज्ञानं जायते, एवमादिज्ञानं किंनाम प्रमाणं स्यात्? न चोक्तज्ञानानां सर्वेषामपि पदवाच्यविषयकत्वेन शब्दविषयकत्वव्याप्येत्याद्युक्तलक्षणाक्रान्तत्वादुपमितित्वमेवेति वाच्यं । तथा सति प्रसिद्ध[1]साधर्म्यात्साध्यसाधनमुपमानमिति सूत्रविरोधापत्तेः । अथ सूत्रगतसाधर्म्यग्रहणं वैधर्म्यादेरप्युपलक्षकं, तत्रातिदेशवाक्यार्थस्त्रिविधः परिकल्प्यते । "साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदत" इत्यतिदेशवाक्यार्थत्रैविध्योक्तेरिति चेन्न—धर्ममात्रज्ञानजन्यज्ञानस्योपमितित्वे धूमवत्त्वादिज्ञानजन्यवह्न्याद्यनुमितेरप्युपमितित्वापत्तिः । धर्ममात्रज्ञानजन्यत्वे सति पदवाच्यत्वविषयकज्ञानस्योपमितित्वमिति स्वीकृत्य वह्न्याद्यनुमितेरुपमितित्ववारणेऽपि पर्वतपदवाच्यो वह्निमानित्याद्यनुमितेरपि तदापत्तिः । पदवाच्यत्वविधेयकत्वं निवेश्य तद्वारणेऽपि गवयो गवयपदवाच्यो गोसादृश्यादित्यादिस्थलीयानुमितेस्तदापत्तिः । [2]व्याप्यविषयकधर्ममात्रज्ञानजन्यत्वे सतीत्यस्य सत्यन्तार्थत्वेनानुमितिसामान्यवारणेऽपि गवयो गवयपदवाच्य इति वाक्यजन्यस्य [3]व्याप्यविषयकधर्मविषयकयोग्यतादिज्ञानजन्यस्योप-

---

[1] साधनात् (ख). [2] व्याप्तत्वविषयक (ख). [3] व्याप्तत्वविषयक (ख).

मितित्वं दुर्वारमिति। अत उक्तोपमितेः प्रत्यभिज्ञायामेवान्तर्भावो युक्तः। अथावसरप्राप्तमूहं निरूपयति—

उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः॥ ११॥

इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च॥ १२॥

उपलम्भो हेतौ साध्यसामानाधिकरण्यज्ञानं। अनुपलम्भो हेतुविशेष्यकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानाभावः। तदुभयजन्यं व्याप्तिज्ञानं साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्वरूपव्याप्तिविषयकज्ञानमूह इत्यर्थः। निरुक्तव्याप्तिज्ञाने साध्यसामानाधिकरण्यस्य विशेषणत्वेन तद्ज्ञानस्य कारणत्वात्साध्याभाववद्वृत्तित्वज्ञानस्य प्रतिबन्धकत्वेन तदभावस्यापि कारणत्वादुपलम्भानुपलम्भजन्यत्वमुक्तव्याप्तिज्ञानस्योपपन्नं। तथा चोक्तोपलम्भानुपलम्भोभयजन्यत्वे सति व्याप्तिविषयकज्ञानत्वमूहस्य लक्षणमिति भावः। व्याप्तिज्ञानत्वस्य व्याप्तिविषयकस्मृतौ धूमो वह्निव्याप्य इति वाक्यजन्यबोधे च सत्त्वात्तत्रातिव्याप्तिवारणाय सत्यन्तं। न च स्मृतेर्विशेषणज्ञानजन्यत्वाभावेन स्मरणस्य सत्यन्तेन वारणेऽपि शाब्दबोधस्य विशेषणज्ञानजन्यत्वेन उक्तोभयजन्यत्वात्सत्यन्तेन वारणं न भवतीति वाच्यं—व्याप्तिविषयकज्ञानाजन्यत्वे सति व्याप्तिज्ञानस्योहलक्षणत्वे तात्पर्यात् व्याप्तिविषयकस्मृतेर्व्याप्तिविषयकानुभवजन्यत्वेन तद्विषयकशाब्दबोधस्य व्याप्तिविषयकपदार्थोपस्थितियोग्यताज्ञानादिजन्यत्वेन व्याप्तिज्ञानजन्यतया सत्यन्तेन द्वयोर्वारणात्। प्रत्यक्षेऽतिव्याप्तिवारणाय विशेष्यदलं। निरुक्तं व्याप्तिलक्षणं च वह्निमान् धूमादित्यादौ वर्तते। तत्र साध्यं वह्निः, तदभाववान् ह्रदादिः। तदवृत्तित्वे सति साध्यभूतवह्निसामानाधिकरण्यावच्छेदकधूमत्वसत्त्वात्। धूमवान् वह्नेरित्यादौ धूमाभाववदयोगोलके वह्नेर्वृत्तित्वेन तदवृत्तित्वाभावान्नातिव्याप्तिः। इदं साधनत्वेनाभिमतं साध्ये सत्येव भवतीत्यनेन साध्यसामानाधिकरण्यांशस्यासति न भवतीत्यनेन साध्याभाववदवृत्तित्वस्य लाभेन साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकत्वं व्याप्तिरिति लाभात्।

नन्वत्र साध्याभावपदेन साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव विवक्षणीयः। अन्यथा

तत्तद्वह्न्यभाववति परिणामितासम्बन्धावच्छिन्नवह्न्यभाववति च पर्वते धूमस्य सत्त्वेनाव्याप्तेः । साध्याभाववन्निरूपितवृत्तिरपि हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । तेन साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाभाववति धूमपरिणामिद्रव्ये धूमस्य परिणामितासम्बन्धेन सत्त्वेऽपि न क्षतिः । हेतुतावच्छेदकीभूतसंयोगसम्बन्धेनावृत्तेः । एवं च उदेष्यति शकटं कृत्तिकोदयात् । उदगाद्भरणिः कृत्तिकोदयात् । ऊर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरादित्यादावुक्तलक्षणाव्याप्तिर्दुर्वारा । उदेष्यति शकटमित्यादौ शकटत्वावच्छिन्नानुयोगिकस्वरूपसम्बन्धेन भविष्यत्कालीनोदयत्वावच्छिन्नस्य साध्यत्वेन तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नाभाववत्यां कृत्तिकायां कृत्तिकत्वावच्छिन्नानुयोगिकस्वरूपसम्बन्धात्मकहेतुतावच्छेदकसम्बन्धेन वर्तमानकालीनोदयत्वावच्छिन्नरूपहेतोस्सत्त्वात् । एवमुदगाद्भरणिरित्यादावप्यूह्यमिति चेदुच्यते—यथा नैयायिकमते केवलान्वयिभिन्नसाध्यकस्थले साध्याभाववदवृत्तित्वरूपा व्याप्तिः केवलान्वयिसाध्यकस्थले च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपा । तत्रापि विषयतासम्बन्धेन जन्यज्ञानत्वावच्छिन्नसाध्यकवाच्यत्वादिहेतुककेवलान्वयिनि वाच्यत्वाधिकरणे परमाणौ [1]प्रमेयकालावच्छेदेन विषयतासम्बन्धावच्छिन्नजन्यज्ञानत्वावच्छिन्नाभावसत्त्वेन हेतुसमानाधिकरणाभावाप्रतियोगित्वस्य साध्येऽभावादव्याप्तिरिति तद्वारणायाभावे प्रतियोगिवैयधिकरण्यं निवेश्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावेत्यादिरूपा व्याप्तिः स्वीक्रियते, नित्यज्ञानविषयत्वादिरूपव्याप्यवृत्तिकेवलान्वयिसाध्यकस्थले च प्रतियोगिवैयधिकरण्यनिवेशे प्रयोजनाभावात्तदघटितहेतुसमानाधिकरणेत्यादिरूपा व्याप्तिरङ्गीक्रियते, तथा केवलान्वयिग्रन्थे साध्यादिभेदेन [2]भिन्नं भिन्नव्याप्तीनां दीधितिकारेणोपपादनात्; तथास्माभिरपि यत्र साध्यहेत्वोस्सामानाधिकरण्यं सम्भवति, [3]यथा वह्निमान् धूमात्, एतद्रूपवानेतद्रसादित्यादौ तत्र साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपा व्याप्तिः। उदेष्यति शकटं कृत्तिकोदयादित्यत्र तु साध्याश्रयपूर्वकालीनत्वाभाववदवृत्तित्वे सति साध्याश्रयपूर्वकालीनत्वसामानाधि-

---

[1] प्रलयकालावच्छेदेन (क). [2] भिन्नभिन्नव्याप्तीनां (ख). [3] तथा (क).

करण्यरूपा । उदगाद्भरणिरित्यत्र साध्याश्रयोत्तरकालीनत्वाभाववद्वृत्तित्वे सति तदुत्तरकालीनत्वसामानाधिकरण्यरूपोर्ध्वदेशो वृष्टिमानित्यत्र साध्याश्रयाधोदेशत्वाभाववदवृत्तित्वे सति तदधोदेशत्वसामानाधिकरण्यरूपा नानाविधव्याप्तिरभ्युपगम्यत इति न दोषः । साध्याभाववदवृत्तित्वघटितलक्षणस्य उदेष्यति शकटमित्यादावभावेऽपि साध्याश्रयपूर्वकालीनत्वाभावघटितलक्षणान्तरस्य सत्त्वात् । व्यक्तीभविष्यति चेदं सहक्रमभावनियमोऽविनाभावः, सहचारिणोर्व्याप्यव्यापकयोश्च सहभाव इत्यादिसूत्रेष्विति दिक् । इदमस्मिन् सत्येव भवत्यसति न भवतीत्यनेनोक्तस्य साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपलक्षणस्य वह्निसाध्यकस्थले समन्वयमाह—

यथाऽग्नावेव धूमस्तदभावे न भवत्येवेति च ॥ १३ ॥

इदानीमनुमानं क्रमायातमिति तल्लक्षणमाह—

साधनात्साध्यविज्ञानमनुमानम् ॥ १४ ॥

साधनात् साध्यनिरूपितव्याप्तिमत्त्वेन निश्चितात्, जन्यत्वं पञ्चम्यर्थः, साध्यविज्ञानं धर्मविशिष्टधर्मिविज्ञानं । तथा च हेतुविशेष्यकसाध्यनिरूपितव्याप्तिप्रकारकज्ञानजन्यत्वे सति पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताशालिज्ञानत्वमनुमितेर्लक्षणमित्यर्थः । वह्निव्याप्यो धूमो, धूमवान्पर्वत इति ज्ञानद्वयानन्तरं पर्वतो वह्निमानित्यनुमितेरुत्पत्त्या तदनुमितौ व्याप्तिज्ञानस्य कारणत्वेन धूमविशेष्यकवह्निनिरूपितव्याप्तिप्रकारकज्ञानजन्यत्वस्य पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकत्वस्य च तादृशानुमितौ सत्त्वाल्लक्षणसङ्गतिः । अत्र पर्वतो वह्निमानित्याकारकस्मृतिशाब्दबोधयोरतिव्याप्तिवारणाय सत्यन्तं । वह्निव्याप्यो धूम इति व्याप्त्यनुभवजन्ये व्याप्तिस्मरणेऽतिव्याप्तिवारणाय विशेष्यं । न च पूर्वोक्तरीत्या व्याप्तेर्नानात्वेनैकविधव्याप्त्युपादानेऽन्यविधव्याप्तिज्ञानजन्यानुमितावव्याप्तिरिति वाच्यं — हेतुविशेष्यकसाध्यनिरूपितव्याप्तिज्ञानजन्यपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताशालिज्ञानवृत्तिपरोक्षत्वव्याप्यजातिमत्त्वस्यानुमितिसामान्यलक्षणत्वेनाव्याप्तिविरहात् ।

वह्निव्याप्यो धूम इति ज्ञानजन्या पर्वतो वह्निमानित्यनुमितिस्तद्वृत्तिः। परोक्षत्वव्याप्या जातिरनुमितित्वरूपाजातिस्तद्वत्त्वस्य सकलानुमितिषु सत्त्वेनाव्याप्तिविरहात् । स्याद्वादसिद्धान्ते वस्तूनां सर्वेषां सामान्यविशेषात्मकत्वेनानुमितित्वरूपसामान्यस्याखिलानुमितिषु सत्त्वात् । अत्रापि पर्वतो वह्निमानिति स्मृतिशाब्दबोधवृत्तिस्मृतित्वादिकमादाय स्मृत्यादावतिव्याप्तिवारणाय जन्यान्तं । व्याप्तिज्ञानजन्यव्याप्तिस्मृतिवृत्तिस्मृतित्वमादाय स्मृतावतिव्याप्तिवारणाय पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यविधेयताशालित्वनिवेशः। पर्वतो वह्निमानित्यनुमितिवृत्तिपरोक्षत्वमादाय स्मृत्यादावतिव्याप्तिवारणाय परोक्षत्वव्याप्येति । स्मृत्यनुमित्यन्यतरत्वमादाय स्मृतावतिव्याप्तिवारणाय जातीति ॥

ननूक्तरीत्या इन्द्रियजन्यज्ञानवृत्तिपरोक्षावृत्तिजातिमत्वं प्रत्यक्षसामान्यलक्षणं स्यात् । इन्द्रियजन्यज्ञानत्वस्य मुख्यप्रत्यक्षेऽभावेऽपीन्द्रियजन्यसांव्यवहारिकप्रत्यक्षवृत्तिप्रत्यक्षत्वजातेर्मुख्यप्रत्यक्षेऽपि सत्त्वाद - व्याप्तिविरहात् । अत्र परोक्षावृत्तिघटत्वादिजातिमति घटादावतिव्याप्तिवारणायेन्द्रियजन्यज्ञानवृत्तीति, ज्ञानत्वजातिमादाय परोक्षेऽतिव्याप्तिवारणाय परोक्षावृत्तीति चेन्न—उक्तजातिमत्वस्यापि प्रत्यक्षलक्षणयेष्टत्वात् ॥

साधनात्साध्यविज्ञानमित्यत्रोक्तस्य साधनस्य लक्षणमाह—

## साध्याविनाभावित्वेन निश्चितो हेतुः ॥ १५ ॥

साध्यनिरूपितव्याप्तिप्रकारकनिश्चयविशेष्यत्वं हेतोर्लक्षणमित्यर्थः । अत्र यद्यपि साध्यनिरूपितव्याप्तिमत्वमेव हेतोर्लक्षणं वक्तुमुचितं । तथाप्येकविधव्याप्तिमत्वस्य लक्षणत्वेऽन्यविधव्याप्तयाश्रयहेतावव्याप्तिरतोऽनुमितिजनकतावच्छेदकप्रकारताश्रयत्वेन सकलव्याप्तीर[1]नुगमय्याऽनु - मितिजनकतावच्छेदकप्रकारताश्रयवत्वं हेतोर्लक्षणं वक्तव्यम् । तत्सूचनाय निश्चयपर्यन्तानुधावनम् ॥

नन्वनुमितौ धूमवान् पर्वत इति पक्षधर्मताज्ञानस्यापि कारणत्वादनुमितिजनकतावच्छेदकप्रकारताश्रयधूमवत्वस्य पर्वते सत्त्वादतिव्याप्तिः। न च व्याप्तिज्ञानमेवानुमितौ कारणं, न पक्षधर्मताज्ञानमपि, उदेष्यति

---

[1] अनुगमय्य (क).

शकटं कृत्तिकोदयादित्यादौ व्यभिचारादिति वाच्यम्। यत्र साध्याभाव-वदवृत्तित्वघटितव्याप्तिज्ञानं कारणं तत्र पक्षधर्मताज्ञानस्य कारणत्व-मावश्यकम्। अन्यथा धूमो वह्निव्याप्य इति ज्ञानानन्तरं धूमवत्वाविशेषेण पर्वतमहानसादियावद्व्यक्तिविशेष्यकानुमितिप्रसङ्गात्। पक्षधर्मताज्ञानस्य हेतुत्वे च यद्विशेष्यकं पक्षधर्मताज्ञानं तद्विशेष्यकानुमितिरिति नियमोप-पादनसम्भवात्। साध्याश्रयपूर्वत्वादिघटितव्याप्तिज्ञानस्य यदनुमितौ हेतुता तदनुमितौ पक्षधर्मताज्ञानस्य हेतुत्वमनावश्यकं। व्याप्तौ साध्या-श्रयत्वेन यस्य प्रवेशस्तस्यैवानुमितिविशेष्यत्वमिति नियमोपपत्तेः। तथा चानुमितिजनकतावच्छेदकप्रकारताश्रयधूमवति पर्वते निरुक्तसाधन-लक्षणस्यातिव्याप्तिर्दुर्वारेति चेत्, अत्रोच्यते—अनुमितिजनकताव-च्छेदकप्रकारतानिरूपितविशेष्यताशून्यानुमितिजनकतावच्छेदकप्रकारता-श्रयवत्वं साधनस्य लक्षणं। धूमादेरनुमितिजनकतावच्छेदकपक्षधर्मता-ज्ञानीयप्रकारताश्रयत्वेऽप्यनुमितिजनकतावच्छेदकीभूतव्याप्तिज्ञानीयविशे-ष्यताश्रयत्वस्यापि सत्त्वेन तच्छून्यत्वाभावात् तदाश्रयपर्वतादौ नाति-व्याप्तिः। व्याप्तौ च तथाविधविशेष्यताशून्यत्वप्रकारताश्रयत्वयोर्द्वयोरपि सत्त्वात्तामादाय साधने लक्षणनिर्वाहः॥

सौगतास्तु—पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षासत्त्वं चेति रूपत्रय-वत्वमेव हेतोर्लक्षणं। ह्रदो द्रव्यं धूमादित्यादाविव पक्षे हेत्वभावरूप-स्वरूपासिद्धिवारणाय पक्षधर्मत्वनिवेशः। वह्निमान् जलादित्यादाविव हेतोस्साध्यसामानाधिकरण्यरूपविरोधवारणाय सपक्षसत्त्वनिवेशः। धूमवान् वह्नेरित्यादाविव हेतोस्साध्याभाववद्वृत्तित्वरूपानैकान्तिकत्ववा-रणाय विपक्षासत्त्वनिवेशः। तदुक्तं—

> हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः।
> असिद्धविपरीतार्थव्यभिचारिविपक्षतः॥ इति॥

न चासिद्धविरोधानैकान्तिकत्वरूपदोषत्रयवारकाविशेषणत्रयवत् बाध-सत्प्रतिपक्षरूपदोषद्वयवारणायाबाधितत्वमसत्प्रतिपक्षत्वं चेति पञ्चरूप-वत्वमेव हेतोर्लक्षणमुचितमिति वाच्यं—बाधसत्प्रतिपक्षत्वयोस्साध्यदोष-त्वेन तद्वारकविशेषणस्य साध्यलक्षणे निवेशावश्यकत्वेऽपि तन्निवेशा-नौचित्यात्। यद्वा बाधसत्प्रतिपक्षत्वयोर्दोषत्वमेव नास्ति। न चैवं ह्रदे वह्निसाधने हेतोरदुष्टत्वापत्तिरिति वाच्यं—तत्र धूमस्य हेतुत्वेऽसिद्धि-

जलादेर्हेतुत्वे च व्यभिचारेण हेतोर्दुष्टत्वोपपत्तेर्बाधसत्प्रतिपक्षयोर्दोषत्वास्वीकारेऽपि क्षतिविरहात् । तस्मात् त्रैरूप्यमेव हेतोर्लक्षणं युक्तमिति वदन्ति । तन्न-धूमवान्वह्नेरित्यादिव्यभिचारिणि साध्याभाववदवृत्तित्वाभावेन वह्निमान् जलादिति विरुद्धे साध्यसामानाधिकरण्याभावेन निरुक्तव्याप्तिमत्वस्य हेतोर्लक्षणत्वेनैव दोषवारणसम्भवात्तदर्थं त्रैरूप्यस्य लक्षणत्वायोगात् । यद्यपि ह्रदो द्रव्यं धूमवत्वादित्यसिद्धेर्निरुक्तव्याप्तिसत्त्वादतिव्याप्तिस्सम्भवति, तथापि भ्रमाजन्यानुमितिजनकतावच्छेदकप्रकारताश्रयवत्वं लक्षणमित्यत्र तात्पर्यान्नोक्तासिद्धेऽतिव्याप्तिः । ह्रदो द्रव्यमित्यनुमितेः ह्रदो धूमवानिति पक्षधर्मताज्ञानेन भ्रमेण जन्यतया ह्रदपक्षकस्थले धूमस्य भ्रमजन्यानुमितिजनकतावच्छेदकप्रकारताश्रयव्याप्तिमत्वाभावात् । एवं गौरमित्रातनयं पक्षीकृत्य स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वरूपहेत्वाभासेऽपि पक्षवृत्तित्वादिरूपत्रयसत्त्वेनातिव्याप्तिर्दुर्वारा । न च विपक्षावृत्तित्वं साध्याभाववदवृत्तित्वं तदभावान्न तत्रातिव्याप्तिरिति वाच्यं-तथा सति निरुक्तव्याप्तेरेव हेतुलक्षणत्वसम्भवेनेतरांशवैयर्थ्यात् । किंच उदेष्यति शकटं कृत्तिकोदयादित्यादावव्याप्तिश्च पक्षधर्मत्वाभावात् । एतेनासिद्धविरुद्धानैकान्तिकबाधसत्प्रतिपक्षाः पञ्च हेतुदोषाः । बाधसत्प्रतिपक्षस्थलेऽपि हेतुर्दुष्ट इति व्यवहारेण तयोरपि हेतुदोषत्वस्यावश्यकत्वात् । न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारस्य हेत्वभावे चासिद्धेः सत्त्वात्ताभ्यामेव दुष्टत्वव्यवहारोपपत्तिरिति वाच्यं-ह्रदे वह्निसाधने बाधेन दुष्टो धूमस्सत्प्रतिपक्षेण दुष्टो धूम इत्यादिव्यवहारदर्शनेन तयोरपि हेतुदोषत्वावश्यकत्वात् । धान्येन धनवानित्यादौ धान्याभिन्नधनवानिति बोधवद्बाधेन दुष्ट इत्यत्र बाधाभिन्नदोषवानिति बोधात्तत्र तृतीयाया अभेदार्थकत्वात्तस्मात्पञ्चरूपवत्वं हेतोर्लक्षणं युक्तं । स श्यामस्तत्पुत्रत्वादित्यादेश्चाबाधितत्वाभावाद्व्यावृत्तिरिति प्राचीननैयायिकमतमप्यपास्तं, उदेष्यति शकटमित्यादावव्याप्तेः ॥

नव्यनैयायिकास्तु व्याप्तिमत्वे सति पक्षधर्मतावत्वमेव हेतोर्लक्षणं । पर्वतो धूमवान्वह्नेरित्यादिव्यभिचारवारणाय सत्यन्तं । ह्रदो धूमवान्वह्नेरित्यादिबाधितहेतुवारणाय पक्षधर्मत्वनिवेशः । न चोदेष्यति शकटं कृत्तिकोदयात्, ऊर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरात्, अयं ब्राह्मणः पित्रोर्ब्राह्मणत्वात्, सन्त्यद्वैतवादिनः प्रमाणानि इष्टानिष्टसाधनदूषणाभिधानादि-

त्यादावव्याप्तिर्हेतौ कृत्तिकोदयादौ पक्षतावच्छेदकीभूतशकटत्वाद्यवच्छिन्न-वृत्तित्वाभावादिति वाच्यं। कृत्तिकोदयः स्वपूर्ववृत्तितासम्बन्धेन शकटो-दयवान् कृत्तिकोदयत्वात्, प्राग्दिनदृष्टकृत्तिकोदयवत्। अयं नदीपूरः दृष्टपूर्वकः विजातीयनदीपूरत्वात्संप्रतिपन्ननदीपूरवत्। अयं पुमान् ब्राह्मणः ब्राह्मणमातापितृजन्यत्वात्, संप्रतिपन्नब्राह्मणवत्। अद्वैतवाद्यङ्गीकृतप्रमाण-सत्ताक इष्टानिष्टसाधनदूषणाभिधानवान्नैयायिकवदित्यादिकुशलप्रयो-गाङ्गीकारेण कृत्तिकोदयादिस्थलेऽपि पक्षधर्मतासम्भवादिति वदन्ति। तन्न-उदेष्यति शकटमिति शकटत्वाद्यवच्छिन्नविशेष्यकोदयत्वावच्छिन्न-साध्यकानुमितेरूर्ध्वदेशत्वावच्छिन्नविशेष्यकवृष्टित्वावच्छिन्नसाध्यकानु--मितेश्चानुभवसिद्धाया अपलापापत्तेः। एकपक्षकानुमितेरपरपक्षतां स्वीकृत्यानुमितिवारणे ह्रदपक्षकधूमहेतुकानुमितेरपि पर्वतादिपक्षकत्वा-ङ्गीकारेण पक्षधर्मत्वो[1]पादानसम्भवेनासिद्धिमात्रोच्छेदापत्तेरिति॥

पूर्वसूत्रेऽनुमितिजनकतावच्छेदकविषयताकत्वेनानुगतीकृताया व्याप्ते-र्भेदं दर्शयति --

सहक्रमभावनियमोऽविनाभावः ॥ १६ ॥

सहभावनियमः क्रमभावनियमश्चाविनाभाव इत्यर्थः। तत्र सहभाव-नियमः साध्याभाववदवृत्तित्वघटिता व्याप्तिः। क्रमभावनियमश्च साध्या-श्रयपूर्वकालीनत्वाभाववदवृत्तित्वघटिता, साध्याश्रयोत्तरत्वाभाववद-वृत्तित्वघटिता च व्याप्तिः। सहभावरूपव्याप्तिसद्भावस्थलमाह—

सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥ १७ ॥

घटो रूपवान्रसादिति रूपरसयोस्सहचारिणोरयं वृक्षः शिंशुपात्वा-दिति व्याप्यव्यापकयोः शिंशुपात्ववृक्षत्वयोश्च सहभावः। साध्या-भाववदवृत्तित्वघटिता व्याप्तिरित्यर्थः॥

क्रमभावरूपव्याप्तिसद्भावस्थलमाह—

पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः ॥ १८ ॥

पूर्वोत्तरचारिणोः कृत्तिकोदयशकटोदययोः कार्यकारणयोरधोदेश-नदीपूरोर्ध्वदेशवृष्टयोश्च साध्याश्रयपूर्वकालीनत्वादिति घटिता व्याप्ति-

---

1 उपपादनसम्भवेन (ख).

रित्यर्थः। मार्तण्डे तु कार्यकारणयोर्धूमवह्न्योरपि क्रमभाव इति व्याख्यातं। अत्र यद्यपि वह्निधूमयोः साध्याभाववदवृत्तित्वघटितव्याप्तेरेव सम्भवात्सहभावकथनमनुचितमिव प्रतिभाति। तथापि वह्नेरधोदेशे धूमस्य च प्रभामण्डलादिरूपोर्ध्वदेशे सत्त्वेन वह्न्यभाववत्प्रभामण्डलादिवृत्तित्वेनोक्तव्याप्त्यसम्भवात्साध्याश्रयोर्ध्वदेशत्वाभाववदवृत्तित्वघटिता व्याप्तिस्तत्र वक्तव्येति भावः। यत्तु प्रभामण्डलादौ धूमस्य वह्निव्यभिचारितावारणाय वह्निमदनुयोगिकसंयोगस्य हेतुतावच्छेदकसम्बन्धत्वं नैयायिकैरुक्तं, तन्न। वह्निमदनुयोगिकसंयोगेन पर्वते धूमवत्ताज्ञानस्य वह्न्यनुमितिहेतुत्वेऽन्योन्याश्रयापत्तेः। वह्निमदनुयोगिकसंयोगेन धूमवत्ताज्ञानं हि पर्वते वह्न्यनुमितेः पूर्वं न सम्भवतीति वह्न्यनुमित्यनन्तरं वह्निमदनुयोगिकसंयोगेन धूमवत्ताज्ञानं, तादृशधूमवत्ताज्ञानानन्तरं चानुमितिरित्यन्योन्याश्रयापत्तेरिति॥

ननूक्तव्याप्तेः प्रत्यक्षादिना निश्चयासम्भवात्तन्निर्णयानुपपत्तिरित्यत आह—

तर्कात्तन्निर्णयः॥१९॥

पूर्वोक्तादूहाद्व्याप्तिनिर्णय इत्यर्थः। साधनात्साध्यविज्ञानमित्यत्र साध्यशब्दनिर्दिष्टस्य पक्षस्य लक्षणमाह—

इष्टमबाधितमसिद्धं साध्यम्॥२०॥

पर्वते वह्न्यनुमितिर्जायतामित्याकारकेच्छाविषयीभूतः पर्वतो वह्न्यभाववानिति बाधज्ञानाविषयीभूतः पर्वतो वह्निमानिति साध्यविषयीभूतवह्निविशिष्टपर्वतादिः साध्यं पक्ष इत्यर्थः। वह्न्यादिरूपधर्मस्येव तद्विशिष्टपर्वतादिरूपपक्षस्यापि साध्यशब्दार्थताया वक्ष्यमाणत्वात्। अत्रेष्टमिति कथनं परार्थानुमानस्थले धर्मविशिष्टधर्मिणो वादीच्छाविषयत्वमस्तीति प्रतिपादनाय, न तु पर्वतत्वाद्यवच्छिन्नविशेष्यकवह्नित्वाद्यवच्छिन्नप्रकारकानुमितिं प्रति तादृशानुमितिविषयकेच्छायाः पक्षतात्वेन हेतुत्वमावश्यकम्। अन्यथा सिद्धिकालेऽप्यनुमित्यापत्तेरिति नैयायिकैकदेशिनां मतमनुसृत्य इच्छां विनापि घनगर्जितेन मेघानुमित्युदयेन व्याघ्रादिध्वनिश्रवणे सतीदं वनं व्याघ्रवत् व्याघ्रध्वनिमत्वादित्यनिष्टस्यापि व्याघ्रादेरनुमित्युदयेऽनुमिताविच्छाया हेतुत्वासम्भवात् अबाधितमसिद्धमिति विध्यभावबाधाभावयोः पक्षताविधया अनुमितिहेतुत्व-

लाभाय पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशाल्य-नुमितिं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयाभावपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारताशालिनिश्चयाभावयोः कारणत्वात्। सिद्धिकाले बाधकाले चानुमित्यनुत्पत्त्या तदभावयोः कारणत्वावश्यकत्वात्। अत्र घटो वह्निमानिति ज्ञानकाले पर्वतो वह्निमानित्यनुमित्यनुपपत्तेरेव वह्नित्वावच्छिन्नप्रकारतायां पर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्वनिवेशः। पर्वतनिष्ठविशेष्यतानिरूपितत्वनिवेशेऽपि द्रव्यं वह्निमदिति सिद्धेः प्रतिबन्धकत्वापत्तिरतः पर्वतत्वावच्छिन्नत्वस्य विशेष्यतायां निवेशः। पर्वतत्वावच्छिन्नविशेष्यताकज्ञानाभावस्य कारणत्वे पर्वतो घटवानिति ज्ञानकालेऽनुमित्यनुपपत्तिः। पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिवेशेऽपि पर्वतो द्रव्यवानिति ज्ञानकाले अनुमित्यनुपपत्तिरतो वह्नित्वावच्छिन्नप्रकारता निवेशः। एवं घटो वह्न्यभाववान् द्रव्यं वह्न्यभाववदिति बाधज्ञानकाले अनुमित्युपपत्तये विशेष्यतायां पर्वतत्वावच्छिन्नत्वस्य निवेशः। पर्वतो घटाभाववान्, पर्वतो द्रव्याभाववानिति बाधज्ञानयोर्वारणाय प्रकारतायां वह्नित्वावच्छिन्नाभावत्वावच्छिन्नत्वस्य निवेशः॥

अत्र प्राचीननैयायिकाः—सिद्धिकाले बाधकाले चानुमितिवारणार्थं सिद्ध्यभावबाधाभावयोर्द्वयोः कारणत्वस्वीकारे गौरवात्पक्षविशेष्यकसाध्यप्रकारकसंशयस्यानुमितौ हेतुत्वं स्वीक्रियते। तावतैव सिद्धिबाधकाले अनुमितिवारणसम्भवात्, पर्वतो वह्निमान्नवेति संशयं प्रति बाधसिद्ध्योः प्रतिबन्धकत्वेन तत्काले संशयासम्भवात्। न च साध्यप्रकारकपक्षविशेष्यकसंशयत्वेनानुमितिहेतुत्वे, वह्निः पर्वते न वा? वह्निः पर्वतवृत्तिर्न वा? वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादिसंशयादनुमित्यनुपपत्तिः, तथाविधसंशयानामप्यनुमितिजनकताया दर्शनेनेष्टापत्त्यसम्भवादिति वाच्यं—साध्यवत्तानिश्चयनिवर्त्यसंशयत्वेनानुमितिहेतुत्वाङ्गीकारेणोक्तसकलसंशयसङ्ग्रहात्। पर्वतो वह्निमानिति निश्चयकाले पर्वतो वह्निमान्नवेति संशयस्यैव पर्वते वह्निर्न वा, वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादिसंशयानामनुत्पत्तेः। तस्मात्साध्यवत्तानिश्चयनिवर्त्यसंशय एव पक्षतेति वदन्ति। तन्न—गगने मेघो नास्तीति भ्रमवतो गृहान्तर्गतस्य पुंसः गर्जनादिना तत्र मेघानुमित्युत्पत्त्या वनादौ शार्दूलज्ञानशून्यस्यैव तद्ध्वनिना तदनुमित्युत्पत्त्या च व्यभिचारेण संशयस्य पक्षतात्वासम्भवात्।

उक्तव्यभिचारेण संशयस्य पक्षतात्वनिराकरणमभिप्रेत्य साध्यलक्षण-प्रविष्टासिद्धपदप्रयोजनमाह—

**सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदम् ॥ २१ ॥**

पर्वतो वह्निमान्नवेति संशयविषयीभूतस्य वह्न्यादेर्गगने मेघो नास्तीति विपर्यासविषयीभूतस्य मेघस्याज्ञातस्य व्याघ्रादेश्च साध्यत्वोपपत्त्यर्थमसिद्धपदं। उक्तस्थलेष्वनुमितिनिर्वाहाय संशयस्य कारणतामनङ्गीकृत्य सिद्ध्यभावस्य कारणत्वाभ्युपगम इत्यर्थः। संशयस्य कारणत्वे उक्तरीत्या व्यभिचारादिति भावः॥

नव्यनैयायिकास्तु—बाधाभावस्य पक्षताशरीरे न निवेशः, बाधग्रहकालेऽपि पक्षताया इष्टत्वात्। न चैवं तद्दशायामनुमित्त्यापत्तिः, व्यभिचारज्ञानादेरिवानुमितिप्रतिबन्धकतदभावस्य [1] पृथक्कारणत्वात्। अन्यथा व्यभिचारादिज्ञानाभावस्यापि तत्र प्रवेशापत्तेः। किन्तु सिद्ध्यभाव एव पक्षता। तत्रापि केवलसिद्ध्यभावस्य हेतुत्वे सिद्धिकाले सिषाधयिषाकाले अनुमित्यनुपपत्तिरतस्सिषाधयिषाविरहविशिष्टत्वं सिद्धौ निवेश्य सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव पक्षतेति वदन्ति। तन्न-व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वेऽप्यनुमितिप्रतिबन्धकत्वाभावेन तदभावस्य पक्षताशरीरे निवेशासम्भवात्। बाधज्ञानस्यानुमितिप्रतिबन्धकत्वेन तदभावनिवेशोपपत्तेः। सिषाधयिषाकाले सिद्धिकाले-[2] अनुमित्युपपत्तिकल्पनमप्ययुक्तमेव। तथा सति तुल्ययुक्त्या बाधज्ञानकालेऽपि सिषाधयिषासत्त्वे अनुमित्यापत्तेः। बाधज्ञानकाले परं सिषाधयिषासत्त्वेऽप्यनुमितिर्न जायते। सिद्धिकाले परं तत्सत्त्वे अनुमितिर्जायत इति कल्पनस्य दुष्कल्पनत्वात्। न च शास्त्रादिषु गृहीतार्थस्य युक्तिभिरनुचिन्तनरूपं मननं सर्वैरपि स्वीक्रियते, तच्चानुमितिरेव युक्तिरूपहेतुज्ञानजन्यत्वात्, एवं च सिद्धौ सिषाधयिषाविरहवैशिष्ट्या निवेशे एकलिङ्गेन मननानन्तरं लिङ्गान्तरेण मननानुपपत्तिः, पूर्वलिङ्गजन्यानुमितेरेव सिद्धिरूपतया प्रतिबन्धकत्वादिति वाच्यं—तत्र प्रथमलिङ्गेन यादृशानुमितिर्जायते तदपेक्षया अधिकविषयिण्या एव द्वितीयाद्यनुमिते[3]रुपगमेन तत्र [4] पूर्वानुमितिरूपसिद्धेः प्रतिबन्धकत्वायोगात्। अधिकविषय-

---

[1] पृथक्करणत्वात्-ख. [2] अनुमित्युत्पत्तिकल्पनं—क. [3] रूपावगमेन—क. [4] पूर्वानुमितिरपि—क.

कानुमितौ न्यूनविषयकसिद्धेः प्रतिबन्धकताविरहात् । पर्वतो वह्निमानिति सिद्धिदशायामपि पर्वतस्सुन्दरवह्निमानित्यनुमित्युत्पत्तेस्तस्मात्सिद्ध्य-भावबाधाभावोभयमेव पक्षतेति स्याद्वादिमतमेव युक्तम् ॥

अधुनेष्टाबाधितविशेषणयोः फलमाह—

**अनिष्टाध्यक्षादिबाधितयोस्साध्यत्वं माभूदितीष्टाबाधितवचनम् ॥ २२ ॥**

मीमांसकमते शब्दस्यानित्यत्वमिष्टमिति तैरनित्यश्शब्द इति साधनं न सम्भवति। एवं वह्नावनुष्णत्वस्य प्रत्यक्षबाधितत्वात्तत्साधनं न सम्भवति—प्रत्यक्षबाधितत्वात् । आदिपदेनानुमानागमस्ववचनबाधितानां ग्रहणं । तदुदाहरणं चाकिंचित्करहेत्वाभासनिरूपणावसरे सूत्रकृतैव प्रपञ्चयिष्यते। तत्रासिद्धपदं प्रतिवाद्यपेक्षयैव। इष्टपदं तु वाद्यपेक्षया। वादिमतरीत्यापि सिद्धसाधनस्य परार्थानुमितौ प्रतिबन्धकत्वे-अनुमानमात्रोच्छेदापत्तेः । प्रतिवादिगतेच्छायाः परार्थानुमितौ हेतुत्वे परार्थानुमानोच्छेदप्रसङ्गः। तत्र वाद्युक्तसाध्ये प्रतिवादिन इच्छाविरहात्। अतः परार्थानुमाने वादिगतेच्छाया न्यायप्रयोगद्वारा कारणत्वं ॥

सिद्धसाधनस्य प्रतिवादिरीत्यैव दोषत्वमिति विशेषं दर्शयति—

**न चासिद्धवदिष्टं प्रतिवादिनः ॥ २३ ॥**

अत्रासिद्धवदिति व्यतिरेकमुखेनोदाहरणम्। यथा सिद्धं प्रतिवाद्यपेक्षया न तथेष्टमित्यर्थः। कुत एतदित्याह—

**प्रत्यायनाय हीच्छा वक्तुरेव ॥ २४ ॥**

इच्छाविषयीभूतं हीष्टमुच्यते, इषिधातोरिच्छार्थकत्वात् । तदुत्तरक्तप्रत्ययस्य विषयत्वार्थकत्वात् । प्रत्यायनाय न्यायशाब्दबोधाय वादी तावत् प्रतिवादिप्रमुखानां शाब्दबोधेच्छया वाक्यं प्रयुङ्क्ते। ननु साध्यशब्दस्य कुत्र शक्तिः? धर्मे? धर्मविशिष्टधर्मिणि वा? नाद्यः—साध्यनिर्देशः प्रतिज्ञेति न्यायसूत्रे साध्यशब्देन धर्मविशिष्टधर्मिबोधानुपपत्तेः। न द्वितीयः—साध्याभाववदवृत्तित्वमित्यादौ वह्न्यादिरूपधर्मस्य बोधानुपपत्तेः। न चोभयत्र प्रयोगादुभयत्र शक्तिरक्षादिपदवन्नानार्थत्वादिति वाच्यम्—तथा सति सर्वत्र साध्यपदेनोभयोर्बोधापत्तिर्नियामकाभावादित्याक्षेपे क्वचित् कस्यचिदेव बाधे नियामकमाह—

साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी ॥ २५ ॥

यत्र व्याप्तिप्रतिपादनाय साध्यपदप्रयोगस्तत्र धर्म एव साध्यशब्देन बोध्यते। यत्र प्रतिज्ञाप्रतिपाद्यदर्शनाय साध्यशब्दप्रयोगस्तत्र धर्मविशिष्ट-धर्मी साध्यशब्देन बोध्यत इत्यर्थः। धर्मविशिष्टधर्मिणो नामान्तरमाह—

पक्ष इति यावत् ॥ २६ ॥

अत्र नैयायिकाः—पक्षतावच्छेदकवैशिष्ट्यं यत्र प्रमाणसिद्धं स एव पक्षः। यथा पर्वतो वह्निमानित्यादौ पर्वतत्ववैशिष्ट्यस्य पर्वते सत्त्वात् पर्वतः पक्षः। यत्र वस्तुतः पक्षतावच्छेदकवैशिष्ट्यं नास्ति किंतु तत्प्रकार-कभ्रमविषयतैव स न पक्षः। यथा काञ्चनमयपर्वतो वह्निमानित्यादौ काञ्चनमयपर्वतः। तत्र काञ्चनमयत्वाभाववत्पर्वतस्याश्रयासिद्धत्वात्। एवं गगनारविन्दं सुरभीत्यादौ गगनीयत्वाभाववदरविन्दमप्याश्रयासिद्ध-मेव। तस्मात्प्रमाणप्रसिद्ध एव पक्ष इति वदन्ति ॥

सौगतास्तु—विधर्मकपरमाणूनामेव वस्तुत्वात् पर्वतत्वादिवै-शिष्ट्यस्य वस्तुतस्तत्राभावाद्भ्रमसिद्ध एव पर्वतत्वादिविशिष्टः पक्षः। सविकल्पसामान्यस्य भ्रमत्वेन पर्वतत्वप्रकारकज्ञानस्यापि भ्रमत्वात्। न चैवं पर्वतो वह्निमानित्यनुमितेरपि भ्रमत्वापत्तिः, सविकल्पकत्वादिति वाच्यं—इष्टत्वात्। न चैवं ह्रदो वह्निमानित्यनुमितितः पर्वतो वह्निमा-नित्यनुमितेर्विशेषानुपपत्तिरिति वाच्यं—पर्वतो वह्निमानित्यनुमितेरनादि-वासनाजन्यत्वेन ह्रदो वह्निमानित्यनुमितेरागन्तुकदोषजन्यत्वेन विशेषोप-पत्तेः। अनादिवासनामूलकादहं स्थूल इत्यादिदेहात्मभ्रमादागन्तुक-दोषजन्यत्वेन रजतभ्रमवैलक्षण्यस्य नैयायिकादिमतसिद्धत्वात्। यद्वा पर्वतो वह्नित्वाश्रयतया स्वलक्षणस्य भानाद्ध्रदो वह्निमानित्यनुमितौ चासद्वह्नेरेव भानाद्वैलक्षण्यस्य निर्वाहः। न च पर्वतो वह्निमानित्यनु-मितेः सफलप्रवृत्तिजनकत्वाद्भ्रमत्वं न सम्भवतीति वाच्यं—गृहमध्य-स्थितमणेः कुञ्चिकाविवरान्निर्गतायां मणिप्रभायां मणित्वभ्रांत्या प्रवृत्तस्य तद्देशे मण्यलाभे गृहाभ्यन्तरं प्रविष्टस्य मणिलाभात्सफलप्रवृत्तिजननेऽपि तज्जनकज्ञानस्य भ्रमत्वदर्शनेन तादृशनियमासिद्धेः। तत्र प्रभाद्वारा मणिप्रत्यायकत्वात्सफलप्रवृत्तिजनकत्वेऽत्रापि सामान्यद्वारा स्वलक्षण-प्रत्यायकत्वादस्तु। तस्माद्भ्रमः सिद्ध एव पक्ष इति वदन्ति। तदुभये-

कान्तनिराकरणाय क्वचिद्भ्रमप्रमासाधारणसम्भावनासिद्धस्य क्वचित्प्रमाणसिद्धस्य क्वचिदुभयासिद्धस्य पक्षत्वमित्यभिप्रेत्याह—

प्रसिद्धो धर्मी ॥ २७ ॥

भ्रमप्रमासाधारणसम्भावनासिद्धः प्रमाणसिद्ध उभयसिद्धश्च स्थलभेदेन पक्षो भवतीत्यर्थः। ननूक्तसम्भावनासिद्धस्यापि पक्षत्वे गगनारविन्दं सुरभीत्यादौ दोषो न स्याद्गगनारविन्दस्य सम्भावनासिद्धत्वादित्यत्राह—

विकल्पसिद्धे तस्मिन्सत्त्वेतरे साध्ये ॥ २८ ॥

तस्मिन् धर्मिणि विकल्पसिद्धे सम्भावनासिद्धे, सत्त्वेतरे सत्त्वासत्त्वे साध्ये भवतः। सत्त्वासत्त्वभिन्नस्य साध्यत्वे पक्षस्य प्रमाणसिद्धत्वमपेक्षितम्। अन्यथा आश्रयासिद्धिर्दोष इति सौरभ्यसाध्यकस्थले गगनारविन्दस्य पक्षत्वे आश्रयासिद्धिरेव। सत्त्वासत्त्वयोः साध्यतास्थले तु पक्षस्य प्रमाणसिद्धत्व एव दोषः। सत्त्वसाध्यकस्थले पक्षस्य प्रमाणसिद्धत्वे पक्षग्राहकप्रमाणेनैव तत्र सत्त्वसिद्धत्वेन सिद्धसाधनप्रसङ्गात्। असत्त्वसाध्यकस्थले पक्षस्य प्रमाणसिद्धत्वे बाधप्रसङ्गात्। तस्मात्सत्त्वासत्त्वसाध्यकस्थले पक्षस्य सम्भावनासिद्धत्वमेव युक्तम्। अत्रोदाहरणमाह—

अस्ति सर्वज्ञो नास्ति खरविषाणम् ॥ २९ ॥

अत्र यद्यपि सर्वज्ञस्य प्रमाणसिद्धत्वात्सम्भावनासिद्धत्वेनोदाहरणमयुक्तम्। तथापि सर्वज्ञे सत्त्वसाधनात्पूर्वं प्रमाणसिद्धत्वाभावमभिप्रेत्य तथोदाहृतमिति बोध्यम्। इदानीं सत्त्वासत्त्वभिन्नधर्मस्य वह्न्यादेरपि सम्भावनासिद्धे साध्यत्वमङ्गीकुर्वतां बौद्धानां मतमपाकर्तुमाह—

प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥ ३० ॥

सत्त्वासत्त्वभिन्नधर्मस्य साध्यत्वे प्रमाणसिद्धत्वमुभयसिद्धत्वं वा आवश्यकमन्यथा आश्रयासिद्ध्यापत्तेरित्यर्थः। अत्रोदाहरणमाह—

अग्निमानयं देशः परिणामी शब्द इति यथा ॥ ३१ ॥

अत्र देशः प्रत्यक्षसिद्धः, शब्दस्तूभयसिद्धः । केषांचिच्छब्दानां प्रत्यक्षसिद्धत्वादसन्निहितानां सम्भावनासिद्धत्वात् । न च देशस्य प्रत्यक्षसिद्धत्वं न सम्भवति, सप्रकारकज्ञानसामान्यस्य भ्रमत्वादिति बौद्धोक्तं युक्तम् । सप्रकारकज्ञानसामान्यस्य भ्रमत्वे पर्वतो वह्निमानित्यनुमितेस्सफलप्रवृत्तिजनकत्वानुपपत्तेः । न च मणिप्रभाया मणिभ्रमस्येव सफलप्रवृत्तिजनकत्वं भ्रमस्यापि सम्भवतीति वाच्यम् । ज्ञानस्य सफलप्रवृत्तिजनकत्वं हि स्वविशेष्यदेशे प्रकारप्राप्तिसम्पादकत्वं, यथा भूतलं घटवदिति ज्ञानस्य स्वविशेष्यभूतभूतले घटप्राप्तिसम्पादकत्वात् पर्वतो वह्निमानित्यनुमितेरपि तथाविधं वर्तते मणिप्रभाया मणिभ्रमस्य स्वविशेष्यदेशे मणिप्राप्तिसम्पादकत्वाभावात् सफलप्रवृत्तिजनकत्वं नास्त्येव । अतः पर्वतो वह्निमानित्यनुमितेः प्रमात्वमावश्यकमेव । प्रतिज्ञाप्रतिपाद्यार्थप्रदर्शनकाले साध्यपदेन धर्मविशिष्टधर्मिणः प्रतिपादनं पूर्वमुक्तम् । इदानीं व्याप्तिप्रदर्शनकाले साध्यपदेन धर्मस्यैव ग्रहणमिति दर्शयति—

व्याप्तौ तु साध्यं धर्म एव ॥ ३२ ॥

ननु व्याप्तिघटकसाध्यपदेन धर्मिणो ग्रहणे को दोष इत्यत आह—

अन्यथा तदघटनात् ॥ ३३ ॥

अन्यथा व्याप्तिलक्षणघटकसाध्यपदेन धर्मविशिष्टधर्मिणः प्रतिपादने तदघटनात्—व्याप्त्यघटनात् । साध्याभाववदवृत्तित्वमित्यत्र साध्यपदेन वह्निमत्पर्वतस्य ग्रहणे तदभाववति पर्वते धूमस्य वृत्तेरव्याप्तिरतस्साध्यपदेन वह्न्यादिरूपधर्मस्यैव ग्रहणमिति भावः । ननु प्रतिज्ञाप्रतिपाद्यार्थप्रदर्शनकाले साध्यपदेन धर्मविशिष्टधर्मिणो ग्रहणमित्ययुक्तं, प्रतिज्ञाया स्साधनानङ्गत्वात् । न च प्रतिज्ञाप्रयोगाभावे कथं साध्याधारनिश्चय इति वाच्यम्—तादृशनिश्चयार्थमेव हेतोः प्रयोगेण साध्याधारस्य हेतुप्रयोगसामर्थ्यसिद्धत्वात् । सामर्थ्यसिद्धस्यापि पुनर्वचने पौनरुक्त्यस्य दुर्वारत्वात् । अर्थादापन्नस्यापि स्वशब्देनाभिधानं पुनरुक्तमित्यभिधानात् । प्रतिज्ञाप्रयोगेऽपि हेत्वादिप्रयोगमन्तरेण साध्यासिद्ध्या हेत्वादिप्रयोग-

स्यावश्यकत्वेनैव साध्याधारप्रतिपत्तिसम्भवेन प्रतिज्ञाप्रयोगवैयर्थ्यादित्या शङ्कावारणार्थमाह—

साध्यधर्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनम् ॥ ३४ ॥

अत्रेदं बोध्यं—बालव्युत्पत्त्यर्थं शास्त्रे प्रतिज्ञाहेतूदाहरणोपनय-निगमनरूपाः पञ्चापि न्यायावयवाः प्रयोक्तव्या इति वक्ष्यते । तत्र पर्वतो वह्निमानिति वाक्यं प्रतिज्ञा, धूमादिति हेतुः । यो यो धूमवान् सोऽग्निमान्यथा महानस इत्युदाहरणम् । धूमवान् पर्वत इत्युपनयः । तस्माद्वह्निमानिति निगमनम् । तत्र प्रतिज्ञादिपञ्चसमुदायो न्याय इत्युच्यते । प्रतिज्ञादयः पञ्च प्रत्येकमवयवा इत्युच्यन्ते । उचितानुपूर्वक-प्रतिज्ञादिपञ्चसमुदायत्वं न्यायस्य लक्षणम् । व्यतिक्रमयुक्तप्रतिज्ञादि-पञ्चसमुदाये अतिव्याप्तिवारणायोचितानुपूर्विकेति । उचितानुपूर्विकत्वं च कथकसम्प्रदायाविरुद्धत्वम् । शास्त्रकारैर्बालव्युत्पत्त्यर्थं प्रतिज्ञाद्युत्तर-मेव हेत्वादेः प्रयोगात् लक्षणसमन्वयः । तैर्हेत्वाद्युत्तरं प्रतिज्ञादेरप्रयुक्त-त्वान्नातिव्याप्तिः । तादृशावयवद्वयादिसमुदाये अतिव्याप्तिवारणाय पञ्चेति । प्रतिज्ञादिपञ्चान्यतमत्वमवयवानां लक्षणम् । तादृशान्य-तमत्वस्य प्रतिज्ञादिषु प्रत्येकं सत्त्वाल्लक्षणसमन्वयः । साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नावच्छेदकतानिरूपिताभेदस - म्बन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालि - बोधजनकत्वे सति न्यायावयवत्वं प्रतिज्ञाया लक्षणम् । पर्वतो वह्निमा-नित्यादिप्रतिज्ञावाक्ये अभेदसम्बन्धेन वह्निमत्प्रकारकपर्वतविशेष्यकस्य शाब्दबोधस्योत्पत्त्या पर्वते अभेदेन प्रकारे वह्निमति संयोगेन वह्नेः प्रकार-त्वाल्लक्षणसङ्गतिः । अत्र हेत्वादावतिव्याप्तिवारणाय सत्यन्तम् । न्याय-बहिर्भूते पर्वतो वह्निमानित्युदासीनवाक्ये अतिव्याप्तिवारणाय विशेष्यम् । अत्र न्यायान्तर्गतत्वमनिवेश्य न्यायावयवत्वनिवेशात् । तस्माद्वह्निमा-निति निगमनैकदेशे वह्निमानिति भागे नातिव्याप्तिः । तत्रोपनयस्थ-पर्वतपदानुषङ्गेण पर्वतो वह्निमानिति बोधोत्पत्त्या निरुक्तबोधजनकत्व-न्यायान्तर्गतत्वयोस्सत्त्वात् । न्यायावयवत्वनिवेशे च न तत्रातिव्याप्तिः । निगमनसमुदायस्यैव न्यायावयत्वात्, तदेकदेशस्य तथात्वाभावात् ।

पञ्चम्यन्तत्वे सति लिङ्गप्रतिपादकत्वे सति न्यायावयवत्वं हेतोर्लक्षणम् । धूमादित्यादिहेतौ पञ्चम्यन्तत्वस्य लिङ्गप्रतिपादकत्वादेश्च सत्त्वाल्लक्षणसमन्वयः । उदाहरणादित्रिकेष्वतिव्याप्तिवारणाय पञ्चम्यन्तत्वनिवेशः । तेषां प्रथमान्तत्वान्नातिव्याप्तिः । घटो दण्डात् कम्बुग्रीवादिमत्वादित्यादिप्रतिज्ञायामतिव्याप्तिवारणाय लिङ्गप्रतिपादकत्वे सतीति । धूमादित्युदासीनवाक्यवारणाय विशेष्यम् । न्यायान्तर्गतत्वमनिवेश्य न्यायावयत्वनिवेशान्निगमनघटके तस्मादिति भागेनातिव्याप्तिः । व्याप्यत्वावच्छिन्नवद्विशेष्यकव्यापकप्रकारकबोधजनकत्वे सति न्यायान्तर्गतत्वमुदाहरणस्य लक्षणम् । यो यो धूमवान् सोऽग्निमानिति वाक्ये यो य इत्यस्य व्याप्तितात्पर्यग्राहकतया वह्न्यभाववदवृत्तिधूमवान्वह्निमानिति बोधात्, धूमपदस्य वह्न्यभाववदवृत्तिधूमलाक्षणिकत्वात्, व्याप्यत्वावच्छिन्नधूमवद्विशेष्यकवह्निप्रकारकबोधजनकत्वाल्लक्षणसमन्वयः । अत्र प्रतिज्ञादिवारणाय सत्यन्तमुदासीनवाक्यवारणाय विशेष्यम् । उदाहरणे यथा महानस इत्यादिप्रयोगो न नियतो वक्तृतात्पर्याधीनत्वात् । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नावच्छेदकतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताशालिबोधजनकत्वे सति न्यायान्तर्गतत्वमुपनयस्य लक्षणम् । प्रतिज्ञादिवारणाय सत्यन्तम् । उदासीनवाक्यवारणाय विशेष्यम् । व्याप्तिविशिष्टहेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नावच्छेदकतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिबोधजनकत्वे सति न्यायावयवत्वं निगमनस्य लक्षणम् । तस्माद्वह्निमानिति निगमने तत्पदस्य व्याप्तिविशिष्टधूमपरत्वात् पञ्चम्या ज्ञानज्ञाप्यत्वार्थकत्वात्तस्य च वह्नावन्वयेन व्याप्तिविशिष्टधूमज्ञानज्ञाप्यवह्निसम्बन्ध्यभिन्नः पर्वत इति बोधात्, उपनयस्थपर्वतपदस्य निगमनेऽनुषङ्गात् । तादृशबोधस्य व्याप्तिविशिष्टधूमज्ञानज्ञाप्यत्वविशिष्टवह्नित्वावच्छिन्नप्रकारतावच्छेदकताकत्वेन तादृशबोधमादाय लक्षणसमन्वयः । हेत्वादिवारणाय सत्यन्तम् । प्रतिज्ञावारणाय ज्ञानज्ञाप्यत्वविशिष्टान्तम् । उदासीनवाक्यवारणाय विशेष्यम् । न्यायान्तर्गतत्वनिवेशे प्रतिज्ञाहेतुसमुदायेऽतिव्याप्तिः । ताभ्यां धूमज्ञानज्ञाप्यवह्निसम्बन्ध्यभिन्नः पर्वत इति बोधात् । अतो न्यायावयवत्वनिवेश इति । एवं लक्षितानां प्रतिज्ञादीनां मध्ये प्रतिज्ञाप्रयोगो व्यर्थः । हेतुप्रयोगसामर्थ्यादेव साध्याधारस्य सिद्धत्वेन

तत्प्रतिपादनाय प्रतिज्ञाप्रयोगस्यानावश्यकत्वादिति सौगतमतमपाकर्तुं साध्यधर्मेत्यादिसूत्रम्। हेतुप्रयोगसामर्थ्यात् सामान्यतः साध्यस्याधारः कश्चिदस्तीति ज्ञाने ज्ञातेऽपि पर्वतो वह्निमान्नवेति संशयानिवृत्तेः। तथाविधसंशयनिवृत्त्यर्थं सामान्याकारेण ज्ञातस्यापि साध्याधारस्य वचनमुपपन्नमिति तत्सूत्रार्थः। अत्र दृष्टान्तमाह—

**साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥ ३५॥**

यो यो धूमवानित्युदाहरणेन धूमाधारत्वेन पर्वतादेर्बोधेऽपि पर्वतो धूमवान्नवेति संशयनिवृत्तये उपनयप्रयोगवत् प्रतिज्ञाप्रयोगोऽप्यावश्यक इत्यर्थः। सामान्याकारेण पूर्वं ज्ञातस्यापि विशेषाकारेण वह्न्यादिज्ञापनाय प्रतिज्ञाप्रयोगे पौनरुक्त्यविरहात्। पूर्वकालीनज्ञानानिवर्त्यसंशयनिवर्तकतावच्छेदकविषयताशून्यबोधजनकत्वस्यैव पुनरुक्तत्वरूपत्वात्। अन्यथा द्रव्यं वह्निमदिति ज्ञानानन्तरकालीनस्यापि पर्वतो वह्निमानिति वाक्यस्य पुनरुक्तत्वापत्तेः। किंच अर्थसामर्थ्यसिद्धस्य पुनर्वचनेऽपि पौनरुक्त्यस्य दोषत्वे समर्थनोपन्यासादेव हेतोरपि सामर्थ्यसिद्धत्वेन हेतुप्रयोगोऽप्यनर्थकः स्यात्। अथ हेतुप्रयोगाभावे कस्य समर्थनमित्याकाङ्क्षा न निवर्तत इति तन्निवृत्तये हेतुप्रयोगावश्यकतेति चेत् पक्षप्रयोगाभावे हेतुः कुत्र वर्तत इत्याकाङ्क्षा न निवर्तत इति प्रतिज्ञाप्रयोगोऽप्यावश्यक इति समानम्। न चोपनयादेव हेतोः पक्षवृत्तित्वं ज्ञायत इति न तदर्थं प्रतिज्ञोपन्यासावश्यकतेति वाच्यम्। पर्वतस्य साध्यसम्बन्धित्वेनाज्ञाने हेतौ पर्वतवृत्तित्वज्ञानस्य विफलत्वेन पर्वतस्य साध्यसम्बन्धित्वज्ञानार्थं प्रतिज्ञाप्रयोग आवश्यकः। तस्मात् कार्यस्वभावानुपलम्भभेदेन पक्षधर्मत्वादिभेदेन च त्रिधा हेतुमुक्त्वा समर्थयमानेन प्रतिज्ञाप्रयोगोऽप्यवश्यमङ्गीकार्य एव। अमुमेवार्थमाह—

**को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥ ३६ ॥**

हेतुमुक्त्वा हेतुं समर्थयमानो हेतुविषयकज्ञानजनकशब्दप्रयोगोत्तरकालीनहेतुविशेष्यकासिद्ध्यादिदोषाभावप्रकारकज्ञानजनकशब्दप्रयोग - कर्ता को वा वादी प्रतिवादी वा न पक्षयति ? न प्रतिज्ञां करोति ? तथा च समर्थनोपन्यासेन सूचितस्यापि हेतोः प्रयोगाङ्गीकारे प्रतिज्ञाया अपि

प्रयोगाङ्गीकार उक्तरीत्या आवश्यक इति भावः । अत्र प्रतिज्ञाहेतूदाहरणानि त्रीण्येवावयवानीति साङ्ख्याः । उपनयमप्यङ्गीकृत्यावयवचतुष्टयं मीमांसका वदन्ति ॥

नैयायिकास्तु—पर्वतो वह्निमानिति प्रतिज्ञाप्रयोगे कृते वह्निज्ञापकं किमित्याकाङ्क्षायां धूमादिति हेतुः प्रयुज्यते। ज्ञापकत्वं चानुमितिजनकतावच्छेदकविषयताश्रयत्वम् । तादृशविषयताश्रयत्वं च रूपविशिष्टस्यैवेति पञ्चरूपबोधनायोदाहरणादित्रयमावश्यकम् । तत्रोदाहरणस्य साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यबोधकत्वात्तेन सपक्षवृत्तित्वविपक्षावृत्तित्वयोर्बोधः, उपनयेन पक्षवृत्तित्वस्य बोधः। निगमनेनाबाधितत्वाऽसत्प्रतिपक्षितत्वयोर्बोधः । तस्माद्वह्निमानिति निगमनस्थतत्पदस्याबाधितत्वाऽसत्प्रतिपक्षितत्वविशिष्टहेतुर्लाक्षणिकत्वादिति वदन्ति। तत्सर्वमयुक्तमित्यभिप्रेत्याह—

एतद्द्वयमेवानुमानाङ्गं नोदाहरणम् ॥ ३७॥

एतयोः प्रतिज्ञाहेत्वोर्द्वयमेवानुमानाङ्गम् । एवकारेणैवोदाहरणादिव्यवच्छेदे सिद्धेऽपि परमतनिरासार्थं प्रवृत्तेषूत्तरसूत्रेषु तच्छब्देनोदाहरणग्रहणार्थमत्र पुनर्नोदाहरणमित्युक्तम् । उदाहरणं किमनुमितिजनकतावच्छेदकविषयताश्रयहेतुबोधार्थमुत हेतुविशेष्यकव्याप्तिप्रकारकानुभवार्थमथवा तथाविधव्याप्तिस्मरणार्थमिति विकल्पक्रमेणोदाहरणमाह—

न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव
व्यापारात् ॥ ३८॥

तदुदाहरणं न साध्यप्रतिपत्त्यङ्गम् । अनुमितिजनकहेतुज्ञानार्थं न भवतीत्यर्थः। तत्र तादृशहेतुज्ञाने यथोक्तहेतोरेव धूमादित्यादिहेतुवाक्यस्यैव व्यापारात् जनकत्वादित्यर्थः । तथाचानुमितिजनकहेतुज्ञानार्थं नोदाहरणमिति भावः। द्वितीयविकल्पं दूषयति—

तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव
तत्सिद्धेः॥ ३९॥

पूर्वसूत्रात्तदिति नेतिचानुवर्तते। तदुदाहरणं तेन साध्येनाविनाभावनिश्चयार्थं साध्यनिरूपितव्याप्तिनिश्चयार्थं न भवतीत्यर्थः । विपक्षे

बाधकादेव व्यभिचारज्ञानाभावादेव । उपलम्भानुपलम्भनिमित्तमिति सूत्रोक्तव्यभिचारज्ञानाभावसहकृतसहचारज्ञानादेवेत्यर्थः । न च तर्कात्मकव्याप्तिनिश्चये उपलम्भानुपलम्भयोः कारणत्वेऽपि शाब्दबोधात्मकव्याप्तिनिश्चये तयोः कारणत्वाभावात् उदाहरणाद्व्याप्तिविषयकशाब्दबोधोपपत्तिरिति वाच्यम् । तादृशव्याप्तिनिश्चयस्य वादिवाक्यजन्यत्वेनाप्रामाण्यज्ञानास्कन्दिततया तादृशशाब्दबोधस्यानुमितिहेतुत्वाभावात् । अन्यथा पर्वतो वह्निमानिति वादिवाक्यादेव पर्वते वह्निसिद्ध्याऽनुमानवैयर्थ्यापत्तेः । न च व्याप्तिबोधप्रयोजकसामानाधिकरण्यज्ञानार्थमुदाहरणमिति वाच्यम् । महानसादिरूपदृष्टान्ते सामानाधिकरण्यज्ञानेऽप्यन्यत्र सामानाधिकरण्याग्रहेण व्याप्तिज्ञानानुपपत्तेः । एकत्र सामानाधिकरण्यग्रहादपि व्याप्तिग्रहोपगमे महानसादौ सामानाधिकरण्यग्रहेण वह्नौ धूमनिरूपितव्याप्तेरपि ग्रहणापत्तेः । महानसादौ दृष्टान्तान्तरेण व्याप्तिग्रहोपगमे तत्रापि दृष्टान्तान्तरापेक्षयाऽनवस्थापत्तिः । एतदेवाह—

व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि विप्रतिपत्तावनवस्था स्याद्दृष्टान्तान्तरापेक्षणात् ॥ ४० ॥

व्यक्तिरूपं निदर्शनम् । एकव्यक्तिरूपो दृष्टान्तः । सामान्येन तु व्याप्तिः । सकलव्यक्तिघटिता व्याप्तिः । तत्राप्युदाहरणेऽपि तद्विप्रतिपत्तौ व्याप्तिविप्रतिपत्तावित्यर्थः । किंचोदाहरणाद्व्याप्तिबोधो हि तद्घटकधूमपदस्य वह्निव्याप्यधूमे लक्षणं स्वीकृत्योपपादनीयः । तथैव हेतुवाक्यगतधूमपदस्य वह्निव्याप्यधूमे लक्षणं स्वीकृत्य तादृशबोधोपपादनसम्भवादुदाहरणप्रयोगो विफल एव । तृतीयविकल्पं दूषयति—

नापि व्याप्तिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥ ४१ ॥

उदाहरणस्य व्याप्तिस्मरणहेतुत्वं सम्बन्धिज्ञानरूपोद्बोधकतया । एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मरणं प्रत्युद्बोधकविधया हेतुताया हस्तिज्ञानेन हास्तिपकादिस्मरणस्थले दर्शनात् । एवं च धूमव्याप्त्योः परस्परं सम्बन्धितया गृहीतत्वाद्धूमज्ञाने व्याप्तेः स्मरणं जायते । तच्च

धूमज्ञानं हेतुनैव जातमित्युदाहरणवैयर्थ्यं । एवमुदाहरणस्य नानुमानोपयोगित्वमित्युक्तम् । प्रत्युत पक्षे साध्यसाधनोभयसंशयहेतुत्वमेवेति दर्शयति—

तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने
सन्देहयति ॥ ४२ ॥

तदुदाहरणं परं केवलमभिधीयमानं साध्यधर्मिणि साध्यविशिष्टे धर्मिणि साध्यसाधने सन्देहयति । पक्षविशेष्यकसाध्यप्रकारकसन्देहं, तद्विशेष्यकसाधनप्रकारकसन्देहं वा जनयतीत्यर्थः । उदाहरणेन महानसे साध्यसाधननिश्चयजननेऽपि पक्षे तयोर्निश्चयाजननादिति भावः ।

कुतोऽन्यथोपनयनिगमने ॥ ४३ ॥

अन्यथा उदाहरणस्य पक्षविशेष्यकसाधनप्रकारकसंशयजनकत्वाभावे पक्षे साधनबोधकोपनयः कुतः । एवं तस्य पक्षविशेष्यकसाध्यप्रकारकसंशयजनकत्वाभावे पक्षे साध्यबोधकं निगमनं कुत इत्यर्थः । अतः पक्षे हेतुसाध्ययोस्संशयनिरासायोपनयनिगमनप्रयोगादुदाहरणस्य तत्संशयजनकत्वमावश्यकमिति भावः ।

ननु पक्षे हेतुसाध्ययोस्संशयनिरासार्थं नोपनयनिगमनयोः प्रयोगः। किन्तूपनयस्य हेतौ पक्षधर्मत्वप्रतिपादनार्थं निगमनस्य चाबाधितत्वासत्प्रतिपक्षितत्वप्रतिपादनार्थम्। अत एव तयोरप्यनुमानाङ्गत्वमावश्यकमिति नैयायिकान्निरसितुमाह—

न च ते तदङ्गे साध्यधर्मिणि हेतुसाध्ययोर्वचनादे
वासंशयात् ॥ ४४ ॥

उपनयनिगमने अपि, तस्यानुमानस्याङ्गे न भवतः । साध्यधर्मिणि पक्षे हेतुसाध्ययोर्वचनादेवासंशयात् । प्रतिज्ञाहेतुभ्यामेव पक्षे साध्यहेत्वोर्निश्चयात् । हेतुवाक्यस्य पर्वतविशेष्यकवह्निज्ञानजनकत्वेन धूमबोधकतया पर्वतवृत्तिहेतोरेव पर्वते वह्निज्ञापकत्वेन पक्षधर्मत्वस्य हेतुवाक्यादेव लाभात् । अबाधितत्वस्य हेतौ साध्यविशिष्टपक्षवृत्तित्वरूपतयाऽसत्प्रतिपक्षितत्वस्य च साध्याभावव्याप्याभावविशिष्टपक्षवृत्तित्व रूपत्वेन तयोरपि प्रतिज्ञाहेतुभ्यामेव सिद्धेः। प्रतिज्ञया पर्वते वह्निमत्व-

बोधनात्साध्यविशिष्टपक्षवृत्तित्वरूपस्याबाधितत्वस्य लाभात् । वह्ने-र्वह्न्यभावाभावरूपतया वह्न्यभावरूपव्यापकाभावे व्याप्याभावावश्यम्भा-वेन वह्निबोधनेनैव पर्वते वह्न्यभावव्याप्याभावसिद्ध्याऽसत्प्रतिपक्षितत्व-स्यापि सिद्धेः । निगमनस्थतत्पदस्याबाधितत्वासत्प्रतिपक्षितत्वविशिष्ट लाक्षणिकत्वमङ्गीकृत्य निगमनस्याबाधितत्वादिबोधकत्वोपपादनवद्धेतु-वाक्यस्थधूमादिपदस्यैवाबाधितत्वादिविशिष्टलाक्षणिकत्वाङ्गीकारेण हेतु-वाक्यस्यैव तद्बोधजनकत्वोपपादनसम्भवेन निगमनवैयर्थ्यस्य दुर्वार-त्वात् । किंच समर्थनं विना हेतोरसाधकत्वात् दृष्टान्ताद्यभिधानेऽपि समर्थनमावश्यकमिति तदेव परं हेतुरूपमनुमानावयवोऽस्तु । साध्य-सिद्धौ तस्यैवोपयोगान्नोदाहरणादिकम् । एतदेवाह—

समर्थनं वा वरं हेतुरूपमनुमानावयवो वाऽस्तु साध्ये
तदुपयोगात् ॥ ४५ ॥

प्रथमवाशब्द एवकारार्थे । द्वितीयस्तु पक्षान्तरसूचने । शेषं सुगमं । ननु बालानां दृष्टान्तादिप्रयोगमन्तरेण व्याप्त्यादिज्ञानासम्भ-वात्तेषां प्रतिज्ञाहेतुभ्यां न परार्थानुमितिसम्भव इति तत्राह—

बालव्युत्पत्त्यर्थं तत्त्रयोपगमे शास्त्र एवासौ न
वादेऽनुपयोगात् ॥ ४६ ॥

बालानामल्पप्रज्ञानां, व्युत्पत्त्यर्थं व्याप्त्याादिज्ञानार्थं, तत्त्रयोपगमे— उदाहरणादित्रयोपगमे, शास्त्र एवासावुदाहरणादित्रयोपगमः । न वादे । वादकाले शिष्याणामव्युत्पाद्यत्वात् । व्युत्पन्नानामेव वादेऽधिकारात् ।

बालव्युत्पत्त्यर्थं शास्त्रेऽभ्युपगतमुदाहरणादित्रयं क्रमेण व्युत्पादयति ।

दृष्टान्तो द्वेधा—अन्वयव्यतिरेकभेदात् ॥ ४७ ॥

पूर्वोक्तसामान्यलक्षणाक्रान्तो दृष्टान्तोऽन्वयव्यतिरेकभेदेन द्विधे-त्यर्थः । दृष्टान्तसामान्यलक्षणं प्रागेव प्रतिपादितम् । अन्वयव्याप्ति-विशिष्टहेत्ववच्छिन्नपर्वतविशेष्यकसाध्यप्रकारकबोधजनकत्वावयवत्वम -

न्वय्युदाहरणस्य लक्षणम् । प्रतिज्ञादिवारणाय जनकान्तम् । उदासीनवाक्यवारणायावयवत्वनिवेशः । तदेतदाह—

साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः ॥ ४८ ॥

साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपान्वयव्याप्तिविशिष्टं साधनं यादृशवाक्ये बोध्यते सोऽन्वयदृष्टान्त इत्यर्थः । व्यतिरेकदृष्टान्तस्य लक्षणमाह—

साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः ॥ ४९ ॥

व्यतिरेकव्याप्तिविशिष्टसाधनावच्छिन्नविशेष्यकसाध्यप्रकारकबोधजनकावयवत्वं व्यतिरेकोदाहरणस्य लक्षणम् । व्यावृत्तिः पूर्ववत् । उपनयं लक्षयति—

हेतोरुपसंहार उपनयः ॥ ५० ॥

अत्र पक्ष इत्यध्याहारः । विशेष्यत्वं सप्तम्यर्थः । हेतोरिति षष्ठ्यर्थः । प्रकारत्वमुपसंहारो बोधजनकवाक्यम् । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिबोधजनकत्वे सति न्यायान्तर्गतत्वमुपनयत्वमित्यर्थः । निगमनं लक्षयति—

प्रतिज्ञायास्तु निगमनम् ॥ ५१ ॥

प्रतिज्ञायाः पक्षस्योपसंहारो व्याप्तयाश्रयहेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यविशिष्टत्वेन प्रतिपादनम् । तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबोधजनकवाक्यत्वं निगमनत्वमित्यर्थः । निरुक्तमनुमानं विभजते—

तदनुमानं द्वेधा ॥ ५२ ॥

स्वार्थपरार्थभेदात् ॥ ५३ ॥

स्वार्थानुमानपरार्थानुमानभेदेनानुमानं द्विप्रकारमित्यर्थः । तत्र स्वार्थानुमानं लक्षयति—

स्वार्थमुक्तलक्षणम् ॥ ५४ ॥

स्वार्थानुमानं साधनात्साध्यविज्ञानमनुमानमिति प्रागुक्तलक्षणमित्यर्थः । न च हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकार-

ताशालिज्ञानजन्यत्वे सति पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित-साध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वस्यानुमानसामान्यलक्ष—णस्य परार्थानुमानेऽपि सत्त्वादतिव्याप्तिरिति वाच्यम्। न्यायवाक्या-प्रयोज्यत्वस्यापि विशेषणत्वात्, परार्थानुमानस्य न्यायवाक्यप्रयोज्यत्वेन वारणात्। परार्थानुमानं लक्षयति—

परार्थं तु तदर्थपरामर्शिवचनाज्जातम् ॥ ५५ ॥

तस्य स्वार्थानुमानस्यार्थो विषयस्साध्यसाधनादिस्तत्परामर्शिनस्त-द्विषयकनिश्चयवतो वचनात्—न्यायवाक्यादित्यर्थः। तथा च न्याय-वाक्यजन्यानुमानत्वं परार्थानुमानस्य लक्षणमित्यर्थः। स्वार्थानुमान-वारणाय जन्यान्तम्। ननूक्तरीत्या ज्ञानस्यैव परार्थानुमानत्वे न्याय-वाक्यस्यानुमानत्वव्यवहारः कथमुपपद्यत इत्यत आह—

तद्वचनमपि तद्धेतुत्वात् ॥ ५६ ॥

तद्वचनमपि न्यायवाक्यमपि, तद्धेतुत्वात् परार्थानुमानं प्रति जन-कत्वात्। एवं च न्यायवाक्यं परार्थानुमानमित्यादिव्यवहारे परार्थानु-मानपदं तज्जनके लाक्षणिकम्। आयुर्घृतमित्यत्रायुःपदस्य तज्जनके लाक्षणिकत्ववत्। अनुमानं विभज्य हेतुं विभजते—

स हेतुर्द्वेधोपलब्ध्यनुपलब्धिभेदात् ॥ ५७ ॥

भावाभावरूपेण हेतुर्द्विविध इत्यर्थः। भावरूपहेतोर्भावसाधकत्वमेवा-भावस्याऽभावसाधकत्वमेवेति परेषां नियमं विघटयन् भावरूपहेतोरभाव रूपहेतोश्चाविशेषेण भावाभावसाधकत्वाभ्यां द्वैविध्यमाह—

उपलब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च ॥ ५८ ॥

भावरूपहेतुः संक्षेपेण द्विधा—पक्षतावच्छेदकावच्छिन्नविरुद्धत्वतद-विरुद्धत्वभेदादिति सूचयन् पक्षतावच्छेदकावच्छिन्नाविरुद्धस्य भावरूप-हेतोर्भावसाधकत्वे षाड्विध्यमाह—

अविरुद्धोपलब्धिर्विधौ षोढा व्याप्यकार्यकारणपूर्वोत्तर-सहचरभेदात् ॥ ५९ ॥

पूर्वश्चोत्तरश्च सहचरश्चेति द्वन्द्वः। पूर्वोत्तरसहचर इत्येतेभ्यश्चरा इत्यनुकरणनिर्देशः। द्वन्द्वात्परं श्रूयमाणस्य चरशब्दस्य प्रत्येकमभि-

सम्बन्धः। तेनायमर्थः—पूर्वचरोत्तरचरसहचरा इति। ततो व्याप्यादिभिस्सह द्वन्द्वः।

अत्र सौगताः—भावसाधको हेतुर्द्विविधः । स्वभावहेतुकार्यहेतुभेदात् । कारणस्य दण्डादेर्घटादिनिरूपितव्याप्तत्वभावान्न हेतुत्वम् न च वस्तुसामान्यस्य क्षणिकत्वात् यादृशदण्डक्षणाद्धटोत्पत्तिस्तादृशदण्डक्षणस्य घटव्याप्यत्वं सम्भवतीति वाच्यं—तादृशघटोपधायकदण्डक्षणस्य दण्डत्वेन हेतुत्वे व्यभिचारस्य दुर्वारत्वात्, घटजनकतावच्छेदकशक्तिमत्वेन हेतुत्वे च तेन रूपेण व्याप्तिसत्त्वेऽपि तद्रूपस्यातीन्द्रियत्वेन तद्रूपावच्छिन्ने व्याप्तिनिश्चयासम्भवादविनाभावत्वेन निश्चितत्वरूपं हेतुलक्षणं न सम्भवतीति वदन्ति। तदयुक्तमिति दर्शयितुमाह—

रसादेकसामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव
किंचित्कारणं हेतुर्यत्र सामर्थ्याप्रतिबन्ध-
कारणान्तरावैकल्ये ॥ ६० ॥

अन्धकारे चूतफलादिकमास्वादमानस्यास्त्यत्र रूपं रसादित्यनुमानं जायत इत्यनुभवसिद्धम्। तत्र रूपं प्रति रसस्य स्वभावत्वकार्यत्वयोरभावाल्लिङ्गद्वैविध्यानुपपत्तिरुत्तररसात्मकलिङ्गस्योभयभिन्नस्य सत्त्वादित्याशङ्क्य तत्र रसेन रूपानुमानं नाङ्गीक्रियते । किंतु रसः सामग्रीजन्यः कार्यत्वाद्धटादिवदित्यनुमानेन रसेन तज्जनकसामग्री अनुमीयते । ततश्च रससामग्री। अव्यवहितपूर्वत्वसम्बन्धेन रूपविशिष्टा रससामग्रीत्वात्संप्रतिपन्नरससामग्रीवदित्यनुमानेन रससामग्र्या रूपानुमानमङ्गीक्रियत इति रसस्य तत्सामग्रीसाधने कार्यलिङ्गत्वान्न द्वैविध्यानुपपत्तिः । न च रससामग्र्या कथं रूपानुमानं तत्सामग्र्याऽव्यवहितपूर्वत्वसम्बन्धेन तद्विशिष्टत्वनियमेऽप्यन्यविशिष्टत्वायोगादिति वाच्यम्। रससामग्र्या रूपसामग्र्याश्चैक्येन रससामग्र्या रूपानुमानोपपत्तेरिति समाहितम् । तत्र रूपसामग्र्या रूपानुमानाङ्गीकारात्, कारणलिङ्गेन कार्यानुमानं बौद्धैरप्यङ्गीकृतमेव। किंच यादृशकारणस्य शक्तिप्रतिबन्धः कारणान्तरवैकल्यं च न सम्भवति। यथा—अस्त्यत्र छाया छत्रादित्यादौ तत्र कारणेन कार्यानुमानं निराबाधमेव। एतावता कारणलिङ्गस्य स्वभावकार्यलिङ्गयोरनन्तर्भावं प्रसाध्य पूर्वोत्तरचरयोः स्वभावकार्यकारणलिङ्गेष्वन्तर्भावं साधयति।

न च पूर्वोत्तरचारिणोस्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः ॥ ६१ ॥

साध्यतादात्म्यापन्नत्वे सति साध्यव्याप्यत्वं स्वभावलिङ्गत्वं। यथा वृक्षः शिंशुपात्वादित्यादौ वृक्षत्वतादात्म्यस्य शिंशुपात्वे स्वीकारात्। साध्यजन्यत्वे सति तद्व्याप्यत्वं कार्यलिङ्गत्वम्। यथा वह्निमान् धूमादित्यादौ साध्यजनकत्वे सति तद्व्याप्यत्वं कारणलिङ्गत्वम्। यथा अस्त्यत्र च्छाया छत्रादित्यादौ। उदेष्यति शकटं कृत्तिकोदयादिति पूर्वचरे कृत्तिकोदये शकटोदयतादात्म्यस्य तज्जन्यत्वतज्जनकत्वयोश्चाभावेनोक्तलिङ्गत्रये नान्तर्भावसम्भवः। उदगाद्भरणिः कृत्तिकोदयादित्युत्तरचरेऽपि भरण्युदयतादात्म्यादेरभावान्नोक्तलिङ्गत्रयान्तर्भावः। समानकालीनयोरेव तादात्म्यस्याव्यवहितपूर्वापरकालीनयोरेव कार्यकारणभावस्य च सत्त्वेऽपि व्यवहितयोः कृत्तिकोदयशकटोदययोस्तदुभयासम्भवात्। तथा च पूर्वोत्तरचरयोरपि पार्थक्यमावश्यकम्।

ननु कारणत्वं नानन्यथासिद्धत्वे सति कार्याव्यवहितपूर्ववृत्तित्वं जाग्रद्बोधस्य प्रबुद्धनिद्राव्यवहितस्य प्रबुद्धदशाकालीनबोधं प्रति कारणत्वानुपपत्तेः। नाप्यनन्यथासिद्धत्वे सति पूर्ववृत्तित्वं कालान्तरभाविमरणस्यारिष्टं प्रति साधनत्वानुपपत्तेः। किंतु अनन्यथासिद्धत्वमेव। न चैवमत्यन्तव्यवहितपदार्थानां भाविपदार्थानां च घटादिकारणत्वापत्तिरिति वाच्यम्—तेषामन्यथासिद्धत्वेनानन्यथासिद्धत्वविरहेणैव तद्वारणात्। तस्मात्कृत्तिकोदयस्य शकटोदयं प्रति भरण्युदयं प्रति च कारणत्वं सम्भवतीति पूर्वचरस्योत्तरचरस्य च कार्यलिङ्गेऽन्तर्भावान्न पार्थक्यमित्यत आह—

भाव्यतीतयोर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् ॥ ६२ ॥

भाविनो मरणस्य पूर्वकालीनमरिष्टं प्रति हेतुत्वं नास्ति। निद्राव्यवहितजाग्रद्बोधस्य नोद्बोधं प्रत्यपि हेतुत्वम्। एवं च भाविनो रोहिण्युदयस्य कृत्तिकोदयं प्रति हेतुत्वासम्भवात्। पूर्वचरस्य न कार्यलिङ्गेऽन्तर्भावः। व्यवहितस्य भरण्युदयस्य कृत्तिकोदयहेतुत्वासम्भवादुत्तरचरस्यापि न तत्रान्तर्भावः। अत्रैव युक्तिमाह—

## तद्व्यापाराश्रितं हि तद्भावभावित्वम् ॥ ६३ ॥

हि यतः कार्यस्य तद्भावभावित्वं कारणजन्यत्वं। तद्व्यापाराश्रितं कारणव्यापाराश्रितं कारणव्यापारापेक्षं। न हि पूर्वोत्पन्नस्यारिष्टकरतलरेखादेर्भविष्यन्मरणराज्यादिव्यापारापेक्षत्वमुपपद्यते, स्वयमुत्पन्नस्य परापेक्षत्वायोगात्। अरिष्टाद्युत्पत्तिकाले तु मरणादेः खपुष्पवदसत्त्वात्तद्व्यापारस्यैवाभावात् तदपेक्षत्वं दूरतो निरस्तं। कारणव्यापारानपेक्षस्यापि कार्यत्वे सर्वं सर्वस्य कार्यं स्यादतो नारिष्टादिकं प्रति मरणादेः कारणत्वं। जाग्रद्बोधस्य तु निरन्वयविनाशे मृतमयूरस्य केकाव्यापारवत्त[1]द्व्यापारासत्त्वादेव नोद्बोधं प्रति कारणत्वं। सान्वयविनाशे तु बोधकाले तस्य सत्त्वादेव कारणत्वोपपत्तिरिति भाविभूतयोर्न हेतुतासम्भव इति पूर्वोत्तरचरयोः कार्यलिङ्गेनान्तर्भावः। कारणत्वमप्यनन्यथासिद्धत्वे सति कार्याव्यवहितपूर्ववृत्तित्वमेव। किंचोदेष्यति शकटं कृत्तिकोदयादित्यत्र कृत्तिकोदयस्य शकटोदय[2]कार्यत्वमङ्गीकृत्य कार्यलिङ्गेऽन्तर्भावे उदगात्कृत्तिका शकटोदयादित्यस्य कार्यलिङ्गत्वं न सम्भवत्येव। कृत्तिकोदयशकटोदययोः परस्परकार्यत्वस्या[3]न्योन्याश्रयभावेनाङ्गीकर्तुमशक्यत्वात्। तस्मात्पूर्वोत्तर चरयोः पार्थक्यं दुर्वारं। एतावता पूर्वोत्तरचरयोः पार्थक्यमुक्त्वा सहचरस्यापि पार्थक्यमाह—

## सहचारिणोरपि परस्परपरिहारेणावस्थानात्सहोत्पादाच्च ॥ ६४ ॥

हेत्वन्तरत्वमिति शेषः। अयमर्थः—परस्परपरिहारेणावस्थानाद्रूपरसयोस्तादात्म्याभावान्न स्वभावहेतावन्तर्भावः। सहोत्पादाच्च न कार्यहेतौ कारणहेतौ वा। न हि कार्यपूर्ववृत्तित्वाभावे कारणत्वं सम्भवति। कारणत्वस्य कार्यपूर्ववृत्तिताघटितत्वात्। समकालोत्पन्नयोरपि कार्यकारणभावे सव्येतरगोविषाणयोरपि तदापत्तेरेवमेकस्य कार्यत्वमपरस्य कारणत्वमिति विनिगमनविरहेण रूपरसयोर्द्वयोरपि कार्यत्वकारणत्वप्रसङ्गो दुर्वारः। न चास्वाद्यमानाद्रसात्तत्सामग्र्यनुमानं, ततो रूपानुमानमित्यनुमितानुमानाभ्युपगमात् रसलिङ्गस्य कार्यलिङ्गेऽन्तर्भाव इति वाच्यं। आस्वाद्यमानरसेन रूपमनुमिनोमीत्यनुभवापलापापत्तेः। सामग्र्या

---

1 तद्व्यापारसत्त्वादेव (ख). 2 कार्यमङ्गीकृत्य (ख). 3 अन्योन्याश्रयभयेन (ख).

रूपानुमाने कारणात् कार्यानुमानप्रसङ्गेन लिङ्गद्वैविध्ये नियमव्याघातस्य पूर्वमुक्तत्वाच्च। उक्तान् व्याप्यादिहेतून् बालव्युत्पत्त्यर्थं स्फुटयिष्यन् प्रथमं व्याप्यहेतुमुदाहरति—

**परिणामीशब्दः कृतकत्वात्, य एवं स एवं दृष्टो यथा घटः। कृतकश्चायं, तस्मात्परिणामी। यस्तु न परिणामी, स न कृतको दृष्टो, यथा वन्ध्यास्तनन्धयः। कृतकश्चायं, तस्मात्परिणामी॥ ६५॥**

साध्योत्पत्तिसमानकालीनोत्पत्तिभिन्नत्वे सति साध्याभाववदवृत्तित्वघटितव्याप्तिमत्वं व्याप्यहेतोर्लक्षणं। नित्यैकान्तेऽनित्यैकान्ते च परिणामसम्भवस्य वक्ष्यमाणतया कथंचिदनित्यत्वरूपकृतकत्वे पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामाभाववदवृत्तित्वसत्त्वाल्लक्षणसङ्गतिः। रूपवान् रसादित्यादिसहचरवारणाय सत्यन्तं। पूर्वचरादिवारणाय विशेष्यं। अत्र बालव्युत्पत्त्यर्थं पञ्चावयवप्रसङ्गः। प्रथमतोऽन्वयदृष्टान्तघटितन्यायप्रयोगानन्तरं व्यतिरेकदृष्टान्तघटितन्याये प्रयोक्तव्ये प्रतिज्ञाहेत्वोरन्वयव्यतिरेकभेदेन भेदाभावाद्व्यतिरेकदृष्टान्तादित्रयमेव प्रदर्शितं। कार्यहेतुमुदाहरति—

**अस्त्यत्र देहिनि बुद्धिर्व्याहारादेः॥ ६६॥**

व्याहारो वचनमादिशब्दाद्व्यापाराकारविशेषपरिग्रहः। यद्यपि ताल्वादिव्यापारस्यैव व्याहारादौ कारणत्वं, न त्वात्मन इति कार्यलिङ्गोदाहरणमयुक्तं। तथापि देवदत्तो वक्तीत्यादि[1]व्यवहारे वचने देवदत्तस्य कर्तृत्वात् कारणत्वमावश्यकं। अन्यथा हस्तादिव्यापारजन्ये घटादौ कुलालादेरपि कारणत्वानुपपत्तेरिति। कार्यकार्यादेरपि कार्यहेतावन्तर्भावान्नाधिक्यं। साध्यप्रयोज्यत्वे सति साध्याभाववदवृत्तित्वं कार्यहेतोर्लक्षणं। व्याप्यहेतुवारणाय सत्यन्तं। परंपरासाधारणकार्यमात्रस्य सङ्ग्रहाय जन्यत्वं परित्यज्य प्रयोज्यत्वनिवेशः। कुलालादिजन्यस्य घटादेः कुलालादौ साध्ये हेतुत्ववारणाय विशेष्यदलं। कारणलिङ्गमुदाहरति—

---

[1] व्याहारे (क).

अस्त्यत्र च्छाया छत्रात् ॥ ६७ ॥

साध्यप्रयोजकत्वे सति साध्याभाववदवृत्तित्वं कारणहेतोर्लक्षणं। व्याप्यवारणाय सत्यन्तं। कारणकारणादेरपि सङ्ग्रहाय जनकत्वं परित्यज्य-प्रयोजकत्वनिवेशः। दण्डादेर्घटादौ साध्ये हेतुत्ववारणाय विशेष्यं। पूर्वचरलिङ्गमाह—

उदेष्यति शकटं कृत्तिकोदयात् ॥ ६८ ॥

साध्याश्रयपूर्वत्वाभाववद[1]वृत्तित्वं तल्लक्षणं। पूर्वपूर्वचरस्याप्यत्रै-वान्तर्भावः। उत्तरचरमुदाहरति—

उदगाद्भरणिः प्राक्तत एव ॥ ६९ ॥

तत एव--कृत्तिकोदयादेवेत्यर्थः। साध्याश्रयोत्तरत्वाभाववदवृ-त्तित्वं तल्लक्षणं। उत्तरोत्तरचरस्याप्यत्रैवान्तर्भावः। सहचरलिङ्गमुदा-हरति—

अस्त्यत्र मातुलिङ्गे रूपं रसात् ॥ ७० ॥

साध्यसमकालोत्पन्नत्वे सति साध्याभाववदवृत्तित्वं तल्लक्षणं। व्याप्यवारणाय सत्यन्तं। समकालोत्पन्नभिन्नदेशस्थघटपटादिवारणाय विशेष्यं। अथ पक्षतावच्छेदकावच्छिन्नविरु[2]द्धभावरूपहेतुं विभजते—

विरुद्धतदुपलब्धिः प्रतिषेधे तथा ॥ ७१ ॥

प्रतिषेधे साध्यविरुद्धानां सम्बन्धिनस्ते व्याप्यादयस्तेषामुपलब्ध-यस्तथा षोढेत्यर्थः। यद्धर्मावच्छिन्नाभावस्य प्रतियोगितासम्बन्धेन साध्यता, तद्धर्मावच्छिन्नविरुद्धव्याप्यतद्धर्मावच्छिन्नविरुद्धकार्यादिभेदेना-भाव[3]साधकस्थले भावरूपहेतुष्षोढेति यावत्। तत्र विरुद्धव्याप्यरूपभाव-हेतुमुदाहरति—

नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥ ७२ ॥

साध्यभूताभावप्रतियोगितावच्छेदकावच्छिन्नविरुद्धव्याप्यत्वमस्य— लक्षणं। अत्र साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नः शीत-स्पर्शस्तद्विरुद्धोऽग्निः। तद्व्याप्यत्वमौष्ण्यमिति। विरुद्धकार्यरूपभावहेतु-मुदाहरति—

---

[1] वृत्तित्वं (क). [2] हेतुभावं (ख). [3] साध्यकस्थले (ख).

नास्त्यत्र शीतस्पर्शो धूमात् ॥ ७३ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नविरुद्धकार्यत्वमस्य लक्षणं। अत्र साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नः शीतस्पर्शस्तद्विरुद्धोऽग्निस्तत्कार्यत्वं धूमस्येति। विरुद्धकारणरूपभावहेतुमुदाहरति--

नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यात् ॥ ७४ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नविरुद्धकारणत्वमस्य--लक्षणं । अत्र तादृशप्रतियोगितावच्छेदकावच्छिन्नं सुखं, तद्विरुद्धं दुःखं, तत्कारणत्वं हृदयशल्यस्येति । विरुद्धपूर्वचरभावहेतुमुदाहरति—

नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् ॥ ७५ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नविरुद्धपूर्वचरत्वमस्यलक्षणं । अत्र तादृशप्रतियोगितावच्छेदकावच्छिन्नः शकटोदयस्तद्विरुद्धोऽश्विन्युदयस्तत्पूर्वचरत्वं रेवत्युदयस्येति । विरुद्धोत्तरचरभावलिङ्गमाह—

नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥ ७६ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नविरुद्धोत्तरचरत्वमस्यलक्षणं । अत्र तादृशप्रतियोगितावच्छेदकावच्छिन्नो भरण्युदयस्तद्विरुद्धः पुनर्वसूदयस्तदुत्तरचरत्वं पुष्योदयस्येति । विरुद्धसहचरभावलिङ्गमाह—

नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागदर्शनात् ॥ ७७ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नविरुद्धसहचरत्वमस्य--लक्षणं । अत्र तादृशप्रतियोगितावच्छेदकावच्छिन्नः परभागाभावस्तद्विरुद्धः परभागः। तत्सहचरत्वमर्वाग्भागस्येति। भावहेतुवदभावहेतुरपि द्विविधः। अविरुद्धाभावहेतुर्विरुद्धाभावहेतुश्चेति। तत्राविरुद्धाभावहेतोर्भेदमाह—

अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा-स्वभावव्यापककार्यकारणपूर्वोत्तरसहचरानुपलम्भभेदात् ॥ ७८ ॥

स्वभावादिपदानां द्वन्द्वः। तेषामनुपलम्भ इति पश्चात्तासः। अभावसाध्यकस्थलेऽभावरूपहेतुः पक्षविषयकप्रत्यक्षाभावपक्षव्यापकाभावत-

त्कार्याभावतत्कारणाभावतत्पूर्वचराभावतदुत्तरचराभावतत्सहचराभाव-भेदात्सप्तविध इत्यर्थः । प्रत्यक्षाभावरूपं स्वभावानुपलम्भमुदाहरति—

नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥ ७९ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्ननिष्ठविषयतासम्बन्धावच्छिन्नप्रतियोगिताकप्रत्यक्षाभावत्वमस्य लक्षणं । अत्र भूतलनिष्ठाभावस्य प्रतियोगितासम्बन्धेन साध्यत्वं भूतलविशेष्यकप्रत्यक्षत्वावच्छिन्नविषयतासम्बन्धावच्छिन्नाभावस्य हेतुत्वं । एवं च साध्यभूतभूतलनिष्ठाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्ननिष्ठविषयतासम्बन्धावच्छिन्नप्रत्यक्षाभावत्वमनुपलब्धिरिति । न च भूतलनिष्ठाभावप्रतियोगिताभाववति पिशाचादौ भूतलविशेष्यकप्रत्यक्षस्य विषयतासम्बन्धेनाभावसत्त्वाद्व्यभिचार इति वाच्यं । प्रत्यक्षयोग्यत्वे सति भूतलविशेष्यकप्रत्यक्षाभावस्य हेतुत्वात्पिशाचादीनां प्रत्यक्षयोग्यत्वाभावेन व्यभिचाराभावात् । व्यापकाभावरूपं व्यापकानुपलब्धिलिङ्गमाह—

नास्त्यत्र शिंशुपा वृक्षानुपलब्धेः ॥ ८० ॥

साध्यभूताभावप्रतियोगितावच्छेदकावच्छिन्नव्यापकाभावत्वमस्य—लक्षणं । अत्र तादृशप्रतियोगितावच्छेदकीभूतशिंशुपात्वावच्छिन्नव्यापकवृक्षाभावत्वस्य वृक्षानुपलब्धौ सत्त्वाल्लक्षणसङ्गतिः । वृक्षानुपलब्धेर्वृक्षाभावादित्यर्थः । कार्यानुपलब्धिमाह—

नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥ ८१ ॥

अप्रतिबद्धसामर्थ्यत्वमविनष्टकार्यजनकतावच्छेदकशक्तिमत्वं । साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नकार्याभावत्वमस्य लक्षणं । तादृशनिषेधप्रतियोगितावच्छेदकमप्रतिबद्धसामर्थ्यविशिष्टाग्नित्वं । तदवच्छिन्नकार्यभूतधूमाभावत्वस्य धूमानुपलम्भे सत्त्वाल्लक्षणसङ्गतिः । कारणानुपलब्धिमाह—

नास्त्यत्र धूमोऽनग्नेः ॥ ८२ ॥

साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नकारणाभावत्वमस्य लक्षणं । पूर्वचरानुपलब्धिमाह—

**नोदेष्यति मुहूर्तान्ते शकटं कृत्तिकोदयानुपलब्धेः ॥ ८३ ॥**

कृत्तिकोदयाभावादित्यर्थः । साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नपूर्वचराभावत्वमस्य लक्षणं । अत्र तादृशप्रतियोगितावच्छेदकं शकटोदयत्वं । उत्तरचरानुपलब्धिमाह—

**नोदगाद्भरणिर्मुहूर्तात्प्राक्तत एव ॥ ८४ ॥**

कृत्तिकोदयाभावादेवेत्यर्थः । साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नोत्तरचराभावत्वमस्य लक्षणं । अत्र तादृशप्रतियोगितावच्छेदकत्वं भरण्युदयत्वं । सहचरानुपलब्धिमाह—

**नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः ॥ ८५ ॥**

नमनाभावादित्यर्थः । साध्यभूतनिषेधप्रतियोगितावच्छेदकावच्छिन्नसहचराभावत्वमस्य लक्षणं । तादृशप्रतियोगितावच्छेदकं समतुलोन्नामत्वं । अभावरूपहेतुरभावसाधक एवेति नियमं विघटयन् [1]भावसाधकविरुद्धानुपलब्धिं विभजते—

**विरुद्धानुपलब्धिर्विधौ त्रेधा—विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥ ८६ ॥**

[2]भावसाधकपक्षतावच्छेदकावच्छिन्नविरुद्धाभावरूपविरुद्धानुपलब्धिर्विरुद्धकार्याभावविरुद्धकारणाभावविरुद्धस्वभावाभावभेदेन त्रिविधेत्यर्थः । तत्र विरुद्धकार्याभावमाह—

**यथास्मिन्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेः ॥ ८७ ॥**

प्रकृतसाध्याश्रयतावच्छेदकावच्छिन्नविरुद्धकार्याभावत्वमस्य लक्षणं । अत्रास्तित्वरूपसाध्याश्रयतावच्छेदकं विधिविशेषत्वं । तदवच्छिन्नविरुद्धस्तदभावः । तस्य कार्यं निरामयचेष्टा । तदभावत्वमुक्तहेतावस्तीति लक्षणसङ्गतिः । विरुद्धकारणानुपलब्धिमाह—

---

[1] भावसाध्यक (ख). [2] भावसाध्यक (ख).

अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥ ८८ ॥

प्रकृतसाध्याश्रयतावच्छेदकावच्छिन्नविरोधिकारणाभावत्वमस्य लक्षणम् । साध्याश्रयतावच्छेदकं दुःखत्वं, तदवच्छिन्नविरोधि सुखं, तत्कारणमिष्टसंयोगस्तदभावत्वमुक्तहेतावस्ति । विरुद्धस्वभावानुपलब्धिमाह—

अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥ ८९ ॥

प्रकृतसाध्यतावच्छेदकावच्छिन्नविरुद्धाभावत्वमस्य लक्षणं । साध्यतावच्छेदकमनेकान्तात्मकत्वं । तदवच्छिन्नविरोधी नित्याद्येकान्तः । तदभावत्वमुक्तहेतावस्ति ।

ननु नास्त्यत्र शीतस्पर्शसामान्यव्याप्यः शीतस्पर्शविशेषो धूमात् । शीतस्पर्शविशेषस्य हि निषेधस्य व्यापकं शीतस्पर्शसामान्यं । तद्विरोधी अग्निस्तस्य कार्यं धूम इति व्यापकविरुद्धकार्यादीनां परंपरयाऽविरोधिकार्यादिलिङ्गानां च [1]बहुत्वसम्भवात्तदुदाहरणेन न्यूनतेत्याशङ्कां वारयति—

परम्परया सम्भवत्साधनमत्रैवान्तर्भावनीयम् ॥ ९० ॥

अत्रैवोदाहृतकार्यादिलिङ्गेष्वेवेत्यर्थः । उक्तान्तर्भावं स्फुटयितुं भावसाध्यकमेकं हेतुमभावसाध्यकं चैकमुदाहृत्यान्तर्भावयति—

अभूदत्र चक्रे शिवकः स्थासात् ॥ ९१ ॥

एतच्च किं संज्ञकं क्वान्तर्भविष्यतीत्याशङ्कायामाह—

कार्यकार्यमविरुद्धकार्योपलब्धौ ॥ ९२ ॥

अन्तर्भावनीयमित्यनुवृत्त्य [2]सम्बन्धो बोध्यः । शिवकस्य कार्यं छत्रकं । तस्य कार्यं स्थासः । शिवकच्छत्रकस्थासकोशकुसूलघटपर्यायाणां पूर्वपूर्वं प्रत्युत्तरोत्तरस्य क्षीरदधिनवनीतघृतपर्यायवत् कार्यत्वात् । द्वितीयहेतुमुदाहृत्यान्तर्भावयति—

---

[1] बहुलं सम्भवात्तदनुदाहरणेन (ख). [2] संबोधो.

## नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् ॥ ९३ ॥

कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथा—मृगक्रीडनस्य हि कारणं मृगस्तस्य विरोधी मृगारिस्तस्य कार्यं तच्छब्दनमिति। इदं यथा विरुद्धकार्योपलब्धावन्तर्भवति, तथा कार्यकार्यमविरुद्धकार्योपलब्धावन्तर्भवतीत्यर्थः।

अत्र प्राचीननैयायिकाः—हेतवः पञ्चविधाः—कारणकार्यसंयोगिसमवायिविरोधिभेदात्। अस्येदं कारणं कार्यं संयोगि समवायि विरोधि लैङ्गिकमिति सूत्रे पञ्चविधत्वोक्तेः। तत्र कारणात् कार्यानुमानं यथा—अयं देशो भविष्यद्वृष्टिमान्, ज्वलदिन्धनवत्त्वादिति। कार्यात् कारणानुमानं यथा—अयं देशो वृष्टिमान् नदीपूरवत्त्वादिति। संयोगिदर्शनात्संयोगिनोऽनुमानं यथा—अयं देशो वह्निमान् धूमात्। समवायिदर्शनात्समवायिनोऽनुमानं यथा—घटो रूपवान् रसादिति। विरोधिदर्शनाद्विरोध्यन्तरस्यानुमानं यथा—इदं वनं सन्निहितसर्पवत् विस्फूर्जितनकुलवत्त्वादिति वदन्ति। तन्न—कृत्तिकोदयादिहेतूनामधिकानां सत्त्वेन पञ्चत्वसङ्ख्याव्याघातात्। एकान्तवादे कार्यकारणभावासम्भवस्य वक्ष्यमाणत्वेन कार्यलिङ्गादीनामसम्भवात्। समवायस्य निराकरिष्यमाणत्वेन समवायिलिङ्गासम्भवाच्च।

नव्यनैयायिकास्तु—हेतुस्त्रिविधः—अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति। अन्वयसहचारज्ञानजन्यज्ञानविषयत्व व्यतिरेकसहचारज्ञानजन्यज्ञानविषयत्वोभयविशिष्टव्याप्तयाश्रयत्वमन्वयव्यतिरेकि-हेतोर्लक्षणं। अन्वयसहचारस्साध्यहेतुसामानाधिकरण्यं। व्यतिरेकसहचारस्साध्या[1]भावहेत्वभावयोस्सामानाधिकरण्यं। वह्निमान् धूमादित्यन्वयव्यतिरेकिहेतौ, यत्र धूमस्तत्राग्निरिति साध्यहेतुसामानाधिकरण्यज्ञानेन, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति साध्याभावहेत्वभावयोस्सामानाधिकरण्यज्ञानेन च व्याप्तेर्ज्ञानात्तदुभयविशिष्ट व्याप्तयाश्रयत्वमस्तीति लक्षणसमन्वयः। अत्र पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादिति केवलव्यतिरेकिहेतावतिव्याप्तिवारणाय व्याप्तावन्वयसहचारज्ञानजन्यज्ञानविषयत्ववैशिष्ट्यनिवेशः। घटोऽभिधेयः प्रमेयत्वादिति केवलान्वयिहेतुवारणाय व्यतिरेकसहचारज्ञानजन्यज्ञानविषयत्ववैशिष्ट्य-

---

[1] साधनाभावयोः (ख).

निवेशः। व्यतिरेकसहचारज्ञानजन्यान्वयसहचार[1]ज्ञानमात्रजन्यज्ञानविषयव्याप्तिमत्त्वं केवलान्वयिहेतोर्लक्षणं। घटोऽभिधेयः प्रमेयत्वादिति केवलान्वयिहेतौ यत्र प्रमेयत्वं तत्राभिधेयत्वमित्यन्वयसहचार एव वर्तते। यत्राभिधेयत्वाभावस्तत्र प्रमेयत्वाभाव इति व्यतिरेकसहचारस्तु नास्ति। अभिधेयत्वप्रमेयत्वयोस्सर्वत्र सत्त्वेन तदभावप्रसिद्धेः। तथा चान्वयसहचारज्ञानमात्रजन्यज्ञानविषयव्याप्तिमत्त्वस्योक्तप्रमेयत्वे सत्त्वाल्लक्षणसङ्गतिः। अत्रान्वयव्यतिरेकिवारणायाजन्यान्तं ज्ञानविशेषणं। तादृशाज्ञानाजन्यवह्निव्याप्यो धूम इत्याकारक[2]शब्दादिज्ञानविषयव्याप्तिविशिष्टधूमादावतिव्याप्तिवारणायान्वयसहचारज्ञानजन्येति। अन्वयसहचारज्ञानाजन्यव्यतिरेकसहचारज्ञानजन्यज्ञानविषयव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणम्। पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादिकेवलव्यतिरेकिहेतौ पृथिवीमात्रस्य पक्षत्वेन तत्र साध्यस्य सन्दिग्धत्वेन तत्र साध्य साधनसहचारग्रहासम्भवेन यत्रेतरभेदो नास्ति तत्र गन्धो नास्तीति व्यतिरेकसहचारमात्रग्राह्यव्याप्तिकत्वाल्लक्षणसमन्वयः। अन्वयव्यतिरेकिवारणायाजन्यान्तम्। तत्रैव शाब्दज्ञानमादायातिव्याप्तिवारणाय जन्यान्तमिति वदन्ति। तन्न—कृत्तिकोदयादौ शकटोदयनिरूपितव्याप्तेस्साध्याश्रयपूर्वत्वहेत्वोः सहचारग्राह्यत्वेन साध्यहेतुसहचारेण साध्याभावहेत्वभावयोस्सहचारेण वा ग्राह्यत्वाभावेनोक्तत्रिविधहेत्वनन्तर्भावेन त्रित्वसङ्ख्याव्याघातात्। एवमुत्तरचरादेरप्याधिक्यं बोध्यम्। बालव्युत्पत्त्यर्थं पञ्चावयवप्रयोग इति प्राक्प्रतिपादितम्। व्युत्पन्नं प्रति कत्यवयवप्रयोगा इत्याशङ्कायामाह—

व्युत्पन्नप्रयोगस्तु तथोपपत्त्याऽन्यथाऽनुपपत्त्यैव वा ॥ ९४ ॥

तथोपपत्त्या साध्ये सत्येवोपपत्त्या, साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपान्वयव्याप्त्या। अन्यथाऽनुपपत्त्या—अन्यथा साध्याभावेऽनुपपत्तिस्तया साध्याभावव्यापकीभूताभावप्रतियोगित्वादिरूपव्यतिरेकव्याप्त्यैव वा विशिष्टस्य हेतोर्व्युत्पन्नं प्रति प्रयोगः कर्तव्यः। व्युत्पन्नं प्रति प्रतिज्ञाहेतुरूपावयवद्वयमेव प्रयोक्तव्यं। तत्र हेतुरन्वयव्याप्त्या व्यतिरेकव्याप्त्या वा विशिष्टः प्रयोक्तव्यः। प्रयोगप्रकारमुदाहरणद्वारेण दर्शयति—

---

[1] ज्ञानजन्य (ख). [2] शाब्दादि (क).

अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेर्धूमवत्त्वान्यथा-
नुपपत्तेर्वा ॥ ९५ ॥

अत्र धूमवत्त्वोपपत्तेरित्यनेनान्वयव्याप्तिविशिष्टस्य, धूमवत्त्वान्यथानुपपत्तेरित्यनेन व्यतिरेकव्याप्तिविशिष्टस्य प्रयोग इति ज्ञेयम् । ननु दृष्टान्तादेरपि व्याप्तिग्रहार्थमावश्यकत्वाद्व्युत्पन्नं प्रति कथं तदप्रयोग इत्यत आह—

हेतुप्रयोगो हि यथा व्याप्तिग्रहणं विधीयते सा च
तावन्मात्रेण व्युत्पन्नैरवधार्यते ॥ ९६ ॥

हिशब्दो यस्मादर्थे—यस्माद्धेतुप्रयोगो यथा व्याप्तिग्रहणं व्याप्तिग्रहणानतिक्रमेण विधीयते, सा च व्याप्तिस्तावन्मात्रेणैव तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेणैव व्युत्पन्नैरवधार्यते । एवकारेण दृष्टान्तादिप्रयोगव्यवच्छेदः । नापि साध्यसिद्ध्यर्थं दृष्टान्तादिप्रयोगस्सफल इत्याह—

तावता च साध्यसिद्धिः ॥ ९७ ॥

चकार एवकारार्थे । तावता व्याप्तिनिश्चयमात्रेण साध्यसिद्धिः साध्यानुमितेः । साध्यानुमितौ व्याप्तिज्ञानस्यैव कारणत्वात् दृष्टान्तादिजन्य बोधस्याहेतुत्वादनुमित्यर्थं न दृष्टान्तप्रयोग इति भावः । ननु व्याप्तिज्ञानस्यानुमितिहेतुभूतस्य हेतुप्रयोगेनैव सिद्ध्या प्रतिज्ञाप्रयोगोऽपि व्यर्थ इत्यत आह—

तेन पक्षस्तदाधारसूचनायोक्तः ॥ ९८ ॥

यतस्तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रेण व्याप्तिप्रतिपत्तिस्तेन हेतुना पक्षः प्रतिज्ञा, तदाधारसूचनाय व्याप्तिविशिष्टहेतोर्नियताधारज्ञानायावश्यक इत्यर्थः । इत्यनुमानप्रमाणनिरूपणम् । अथागमस्वरूपं निरूपयति—

आप्तवचनादिनिबन्धनमर्थज्ञानमागमः ॥ ९९ ॥

आप्तः प्रकृतार्थविषयकयथार्थज्ञानवान् । तदीयवचनादिजन्यमर्थज्ञानमागम इत्यर्थः । अत्रादिपदेनाङ्गुल्यादिसंज्ञापरिग्रहः । अत्र यथार्थज्ञानवत्पुरुषकर्तृकत्वेन वाक्यसंज्ञयोर्निवेशापेक्षया यथार्थज्ञानजन्यत्वेन तयो-

निवेशस्य युक्तत्वाद्यथार्थज्ञानजन्यवाक्यसंज्ञान्यतरजन्यार्थज्ञानत्वमागम-प्रमाणस्य लक्षणं पर्यवसन्नम्। अर्थज्ञानत्वस्य लक्षणत्वे प्रत्यक्षादावति व्याप्तिरतो वाक्यसंज्ञान्यतरजन्यत्वमर्थज्ञानविशेषणम्।वाक्यजन्यार्थज्ञानत्वं लक्षणमित्युक्तेऽङ्गुलिभ्रूनेत्रादिसंज्ञाजन्येनाक्षरश्रुतेव्याप्तिरतस्संज्ञानिवेशः। अक्षरश्रुतसङ्ग्रहाय वाक्यनिवेशः। भ्रान्तवाक्यजन्ये भ्रान्तचेष्टाजन्ये चार्थ-ज्ञानेऽतिव्याप्तिवारणाय वाक्यचेष्टान्यतरस्मिन्यथार्थज्ञानजन्यत्वनिवेशः। अर्थज्ञानमित्यर्थग्रहणमपोहविषयकज्ञानमेव शाब्दबोध इति सौगतमत-निरासार्थम्। यद्यपि वाक्यसंज्ञान्यतरजन्यत्वे सति यथार्थज्ञानत्वं लक्षण-मुचितम्। तावतैव भ्रान्तवाक्यजन्य[1]ज्ञानवारणसम्भवात्। तथाप्य पौरुषेयवेदादिजन्यार्थज्ञानस्य प्रामाण्यं नास्तीति सूचनाय यथार्थज्ञान-जन्यत्वपर्यवसितस्याप्तसम्बन्धित्वस्य वाक्यसंज्ञान्यतरस्मिन् निवेशः। न च यत्रातीतादिवाक्यस्मरणाद्बोधस्तत्राव्याप्तिस्तादृशबोधे वाक्यजन्यत्व-स्याभावादिति वाच्यम्—वाक्यसंज्ञान्यतरजन्यत्वस्थानेऽन्यतरविषयक-ज्ञानजन्यत्वस्य निवेशात्।

नैयायिकास्तु—प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्। प्रयोगो वाक्यं तद्धेतुभूतं यदर्थतत्त्वज्ञानं तज्जन्यशब्दत्वं शब्दप्रमाणस्य लक्षणमित्यर्थः। वाक्यार्थभ्रममादाय वह्निना सिञ्चेदित्याद्ययोग्यवाक्येऽति व्याप्तिवारणाय तत्पदम्। तथापि वह्न्यादिरूपपदार्थतत्त्वज्ञानमादाया-योग्येऽतिव्याप्तिरतः प्रयोगहेतुभूतेति। इत्थं चार्थपदस्य वाक्यार्थपर्य-वसानान्न पदार्थतत्त्वज्ञानमादायातिव्याप्तिरित्याहुः। तन्न—शब्दस्य स्वा-पूर्वार्थव्यवसायात्मकत्वाभावेन चक्षुरादेरिवोपचरितप्रामाण्येऽप्यनुपचरित-प्रामाण्यविरहात्। उपचरितप्रामाण्यस्य शब्दस्येदं लक्षणमित्यङ्गीकारेऽपि तथाविधसंज्ञायामव्याप्तेः।

मीमांसकास्तु — आप्तोच्चरितध्वनिव्यङ्ग्यवाक्यजन्यज्ञानत्वमागमप्र-माणस्य लक्षणम्। शब्दो हि द्विविधः। ध्वन्यात्मको, वर्णात्मक-श्चेति। ध्वन्यात्मकशब्दोऽनित्यः। वर्णात्मकस्तु नित्यः। तत्रोच्चार-णेन ध्वनयो जायन्ते। ध्वनिभिश्च वर्णानां प्रत्यक्षं जायत इत्याप्तोच्चरित ध्वनिव्यङ्ग्यत्वं वाक्यस्य सम्भवति। ध्वनिव्यङ्ग्यत्वस्य ध्वनिजन्य-प्रत्यक्षविषयत्वरूपत्वात्। तज्जन्यज्ञानत्वं चागमे वर्तत इति लक्षणसम-न्वयः।

---

1 भ्रमवारणसम्भवात् (ख).

ननु वर्णात्मकशब्दस्य नित्यत्वे किं प्रमाणमिति चेत्—वर्णात्मकः शब्दो नित्यः, ध्वनिभिन्नत्वे सत्याकाशमात्रगुणत्वात्, गगनपरिमाणवत्। ध्वनौ व्यभिचारवारणाय सत्यन्तम्। घटाकाशसंयोगे व्यभिचारवारणायाकाशमात्रेति। न च हेतुरस्तु, साध्यं मास्त्वित्यप्रयोजकत्वशङ्कावारकानुकूलतर्काभावादुक्तानुमानेन नित्यत्वं न सिध्यतीति वाच्यं—सोऽयं गकार इति प्रत्यभिज्ञाने ह्येतत्कालीनगकारे पूर्वकालीनगकाराभेदो भासते। स च गकारनाशे न सम्भवतीति शब्दो यदि नित्यो न स्यात्तर्हि पूर्वकालीनगकाराभेदावगाहिप्रमाणभूतप्रत्यभिज्ञानविषयो न स्यादित्यनुकूलतर्कसत्त्वात्। न च चैत्रेण यदौषधं कृतं तदेव मया कृतमिति प्रत्यभिज्ञानं यथा भ्रमस्तथा सोऽयं गकार इति प्रत्यभिज्ञानमपि भ्रम इति वाच्यम्। तत्रौषधयोर्भेदग्राहिप्रत्यक्षस्य बाधकस्य सत्त्वेन प्रत्यभिज्ञानस्य भ्रमत्वेऽपि सोऽयं गकार इति प्रत्यभिज्ञाया भ्रमत्वायोगात्। अन्यथा प्रत्यभिज्ञासामान्यस्य भ्रमत्वापत्तौ जगतः क्षणिकताया दुर्वारत्वात्। न चात्राप्युत्पन्नो गकारो विनष्टो गकार इति प्रतीतिर्बाधिकेति वाच्यम्। वर्णस्य तद्व्यञ्जकध्वनेश्च भेदाग्रहात्। तत्प्रतीते[1]र्वर्णानां नाशे ध्वनिगतोत्पत्त्याद्यवगाहित्वेन भ्रमत्वात्। अन्यथा शरीरशरीरिणोर्भेदाग्रहाज्जायमानया स्थूलोऽहं कृशोऽहमिति प्रतीत्यापि जीवस्य स्थौल्यादिसिद्ध्यापत्तेः। किंच शब्दो यदि नित्यो न स्यात्तर्हि शाब्दबोधजनको न स्यात्। अगृहीतशक्तिकात्पदाद्बोधानुदयेन शक्तिग्रहविषयस्यैव शब्दस्य बोधकत्वात्। शब्दस्यानित्यत्वे च शक्तिग्रहविषयस्य शब्दस्य शाब्दबोधपूर्वकालेऽभावेन बोधानुपपत्तेः। एवं च वर्णानां नित्यत्वेन तत्समुदायरूपस्य वेदस्यापौरुषेयत्वेनाप्तप्रणीतत्वायोगादाप्तवचनादिनिबन्धनमिति लक्षणमसम्भवग्रस्तमित्यस्मदुक्तरीत्यैव लक्षणं वक्तव्यमिति वदन्ति। तन्न—शब्दस्य पुद्गलकार्यत्वद्रव्यत्वयोर्वक्ष्यमाणतयाकाशमात्रगुणत्वघटितहेतोः स्वरूपासिद्धत्वात्। किंचात्र कथंचिन्नित्यत्वं साध्यते? सर्वथा नित्यत्वं वा? आद्ये सिद्धसाधनं—सर्वेषां वस्तूनां द्रव्यरूपेण नित्यत्वस्य पर्यायरूपेणानित्यत्वस्य चाङ्गीकारात्। द्वितीये साध्याऽप्रसिद्धिः—गगनपरिमाणादावपि सर्वथा नित्यत्वाऽसिद्धेः। यदि शब्दो नित्यो न स्यात्प्रत्यभिज्ञानविषयो न

---

[1] वर्णांशे (क).

स्यादिति तर्कोपपादनमप्ययुक्तम् । उत्पन्नो गकारो, विनष्टो गकार इत्युत्पादविनाशप्रतीत्या प्रत्यभिज्ञाया भ्रमत्वावश्यकत्वात् । न चोत्पादविनाशप्रतीत्योरेव भ्रमत्वमुक्तमिति वाच्यं—उत्पादविनाशप्रतीत्योर्द्वयोर्भ्रमत्वकल्पनापेक्षया एकस्याः प्रत्यभिज्ञाया एव भ्रमत्वकल्पनस्य युक्तत्वात् । किंचोत्पत्तिविनाशप्रतीत्योर्भ्रमत्वे कण्ठताल्वाद्यभिघातादीनां कत्वाद्यवच्छिन्नं प्रति कारणत्वासम्भवात्तद्वैयर्थ्यापत्तिः । न च कण्ठाद्यभिघातस्य कत्वाद्यवच्छिन्नं प्रत्यहेतुत्वेऽपि कत्वाद्यवच्छिन्नविषयताशालिप्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वात्तत्सार्थक्यमिति वाच्यम् । तथा सति कोलाहलस्थले तस्यापि कारणत्वानुपपत्तेः । तत्र कत्वखत्वादिकमप्यविषयीकृत्यैव शब्दप्रत्यक्षोदयेन कत्वाद्यवच्छिन्नविषयताशालिप्रत्यक्षानुपपत्तेः । न च ककारादिविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्येव कण्ठाभिघातादेर्हेतुत्वकल्पनान्नानुपपत्तिः । कोलाहलस्थले ककारादेः कत्वादिनाऽभानेऽपि शब्दत्वेन वर्णत्वेन वा भानात् ककारादिविषयकप्रत्यक्षत्वावच्छिन्नं जायत एवेति वाच्यम् । तथापि ककारादिप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वापेक्षया कत्वादेः कार्यतावच्छेदकत्वे लाघवेन ककारादेरुत्पत्तिस्वीकारस्यैव युक्तत्वात् । एवं कण्ठाभिघातादीनां वर्णाभिव्यञ्जकत्वे एकेन कण्ठाभिघातेन सकलवर्णानां प्रत्यक्षापत्तिः । उत्पादकस्यैकैककार्योत्पादकत्वनियमेऽप्यभिव्यञ्जकानां तथा नियमाभावात् । दीपादीनां घटाद्येकवस्तुदर्शनार्थमारोपितानामनेकवस्त्वभिव्यञ्जकत्वदर्शनात् । यदपि शब्दो यदि नित्यो न स्यात्तर्हि शाब्दबोधजनको न स्यादिति तर्कान्तरमभिहितं तदपि न युक्तम् । न ह्यस्माभिर्यत्पदव्यक्त्या शाब्दबोधस्तत्पदविशेष्यकशक्तिज्ञानत्वेन कारणत्वमुच्यते येनोक्तदोषः स्यात् । किंतु यादृशानुपूर्व्यवच्छिन्नपदाच्छाब्दबोधस्तादृशानुपूर्व्यवच्छिन्नविशेष्यकशक्तिज्ञानत्वेन । एवं च शक्तिग्रहविषयस्य पदस्य नाशेऽपि तद्वृत्त्यानुपूर्व्यवच्छिन्नस्य पदान्तरस्य शाब्दबोधात्पूर्वं सत्त्वाद्वर्णानामनित्यत्वेऽपि शाब्दबोध उपपद्यते । अन्यथा व्याप्तिग्रहविषयस्य धूमादेर्नाशे धूमान्तरेण वह्न्यनुमानानुपपत्तेः ।

ननु यद्धर्मावच्छिन्ने व्याप्तिग्रहस्तद्धर्मावच्छिन्नवत्ता ज्ञानस्यानुमिति हेतुत्वाद्धूमत्वावच्छिन्ने पूर्वं व्याप्तिग्रहात्पर्वते धूमवत्त्वावच्छिन्नवत्ता ज्ञानादनुमित्युपपत्तिरिति चेत् प्रकृतेऽपि तथैवेति तुल्यम् । एवं वर्णानां नित्यैकत्वाभ्युपगमे ककारादिशून्यदेशे तत्प्रत्यक्षानुपपत्तिः । न चाका-

शस्य विभुत्वेन तद्गुणस्य शब्दस्य सर्वत्र सत्त्वात् ककारादेरेकत्वेऽपि सर्वत्र व्यञ्जकसमवधाने प्रत्यक्षोपपत्तिरिति वाच्यम्। तथा सति ककारादेः खण्डशः प्रतीत्यापत्तिः। बहुदेशव्यापिनो वस्तुन एकदेशे सामस्त्येन ग्रहणायोगात्। अन्यथा पर्वतादेरप्येकदेशे सामस्त्येन ग्रहणप्रसङ्गात्। अपि च यथा भेदप्रत्यक्षरूपस्य बाधकस्य सत्त्वाद्यथा तदेवौषधमित्यादिप्रत्यभिज्ञाया भ्रमत्वं तथाऽयं गकारो मन्द्र, अयं गकारस्तार इत्यादिप्रतीत्या मन्द्रत्वतारत्वरूपविरुद्धधर्माध्यासरूपबाधकसत्त्वात्सोयं गकार इत्यादिप्रत्यभिज्ञाया अपि भ्रमत्वं युक्तम्। न च मन्द्रत्वतारत्वयोर्विरोध एव नास्ति—एकस्मिन्नपि भेरीशब्दे वीणादिशब्दापेक्षया तारत्वस्य घनगर्जनापेक्षया मन्द्रत्वस्य च दर्शनादिति वाच्यं—भिन्नप्रतियोगिकमन्द्रत्वतारत्वयोर्विरोधाभावेऽप्येकप्रतियोगिकयोस्तयोर्विरोधेनायं गकारस्तद्गकारापेक्षया तार इति प्रतीत्या तद्गकारैतद्गकारयोर्भेदावश्यकत्वात्। तद्गकारापेक्षया तारत्वं हि तद्गकारविषयकप्रत्यक्षप्रतिबन्धकत्वम्। तारशब्दप्रत्यक्षदशायां मन्द्रप्रत्यक्षानुदयात्। तद्विषयकप्रत्यक्षे तस्यैव प्रतिबन्धकत्वासम्भवेन भेदं विना तारत्वमन्द्रत्वानुपपत्तेः। न च तारशब्दकालेऽपि मन्द्रबुभुत्सायां सत्यां मन्द्रप्रत्यक्षोदयेन तारस्य मन्द्रप्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीति वाच्यं—मन्द्रबुभुत्साविरहविशिष्टतारत्वेन मन्द्रप्रत्यक्षे प्रतिबन्धकत्वस्वीकारे बाधकाभावात्तस्माद्वर्णानां नित्यत्वासिद्धेर्वेदस्यापौरुषेयत्वमप्रामाणिकम्। वर्णानां नित्यत्वेऽपि वेदस्य नित्यत्वं न सम्भवति। रचनाविशेषरूपानुपूर्व्याऽनित्यत्वेन तद्विशिष्टवाक्यस्यानित्यत्वावश्यकत्वात्। यथा पुष्पाणां चैत्रकर्तृकत्वाभावे तद्विन्यासस्य चैत्रकर्तृकत्वेन चैत्रो मालां करोतीति व्यवहारस्तथा वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवेदस्य कृतकत्वमवर्जनीयम्। अन्यथा घटमानयेत्यादि वाक्यानामपि नित्यवर्णसमुदायत्वाविशेषेणापौरुषेयत्वापत्त्या लौकिकं वाक्यं पौरुषेयम्। वेदः परमपौरुषेय इति भवत्सिद्धान्तव्याघातात्।

वेदान्तिनस्तु—यद्यपि वर्णात्मका अपि शब्दा अनित्या एव। अथापि वेदो नित्यः। तत्र नित्यत्वं न ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम्। वर्णानामुत्पत्तिविनाशशालित्वेन तत्समुदायरूपवेदे ध्वंसाद्यप्रयोगित्वासम्भवात्। नापि ध्वंसाद्यप्रतियोग्यानुपूर्व्याश्रयत्वम्। घकारोत्तरटकारत्वरूपाया आनुपूर्व्या जात्यात्मत्वेन ध्वंसाद्यप्रतियोगित्वेऽपि

ध्वंसाद्यप्रतियोग्यानुपूर्व्याश्रयत्वस्य वेद इव लौकिकवाक्येऽपि सत्त्वेन तस्यापि नित्यत्वापत्तेः। किंतु स्वाश्रयवर्णध्वंसासमानकालीनवर्णवृत्त्या-नुपूर्व्याश्रयत्वमेव वेदस्य नित्यत्वमपौरुषेयत्वं च। स्वपदमानुपूर्विपरं। वेदस्य प्रवाहतोऽनादित्वेनोपाध्यायाद्युच्चरितस्यानुपूर्वीविशिष्टस्य वेदस्य तादृशानुपूर्वीविशिष्टान्योच्चरितवेदध्वंससमानकालीनतया ईश्वरोच्चरित-स्यापि सर्गाद्यकालीनस्य तत्पूर्वसर्गस्थान्योच्चरितवेदध्वंससमानकालीन-त्वेन तादृशध्वंसासमानकालीनवर्णावृत्तित्वस्य वेदगतानुपूर्व्यां सत्त्वात्तस्य नित्यत्वाद्युपपत्तिः। लौकिकवाक्यस्य चापूर्वतयैव केन[1]चित्करणेन तद्गतानुपूर्व्यास्तथाविधानुपूर्व्याश्रयवर्णध्वंससमानकालीनत्वनियमाभावेन तादृशध्वंसासमानकालीनवर्णवृत्तित्वमेवेति न लौकिकवाक्यस्य नित्यत्वा-द्यापत्तिः। न च वेदस्य निरुक्तनित्यत्वे प्रमाणाभाव इति वाच्यम्—पूर्व-कालीनवेदोच्चारणसामान्यं तत्पूर्वकालीनवेदोच्चारणध्वंससमानकालीनं वेदोच्चारणत्वादेतत्कालीनवेदोच्चारणवत्। पूर्वकालसामान्यं वेदगतानु-पूर्व्याश्रयवर्णध्वंसवत्, कालत्वात्, एतत्कालवत्। तथा वेदोऽपौरुषेयोऽ-नवच्छिन्नसंप्रदायत्वे सत्यस्मर्यमाणकर्तृकत्वादाकाशादिवदित्याद्यनुमान स्यैव तन्नित्यत्वे प्रमाणत्वादनवच्छिन्नसम्प्रदायत्वमशिथिलस्वधर्मकत्वं वेदस्य स्वधर्मा वर्णक्रमः, पाठक्रम, उदात्तादिस्वराश्च। अत्र जीर्णकूपादा-वस्मर्यमाणकर्तृके पौरुषेये व्यभिचारवारणाय सत्यन्तम्; भारतादौ व्यभिचारवारणाय विशेष्यमिति वदन्ति। तन्न—तथा सति पूर्वकालीन-भारतोच्चारणसामान्यं तत्पूर्वकालीनभारतोच्चारणध्वंससमानकालीनं भारतोच्चारणत्वादेतत्कालीनभारतोच्चारणवदित्याद्यनुमानेन भारतादेरप्य-पौरुषेयत्वसिद्ध्यापत्तेः। अथ व्यासकर्तृकं भारतोच्चारणं भारतोच्चारण ध्वंसासमानकालीनत्ववत्, पुराणादिषु तद्वत्त्वेन प्रतिपादितत्वात्। यत्पु-राणादिषु यद्धर्मवत्वेन प्रतिपाद्यते तत्तद्धर्मवत्। यथा गन्धवत्वेन पुराण-प्रतिपन्ना पृथिवी गन्धवतीति प्रत्यनुमाननिरस्तत्वादुक्तानुमानेन भारत-स्यापौरुषेयत्वं न सिध्यतीति चेत्—वेदापौरुषेयत्वसाधकप्रथमानुमान-स्यापि वेदोच्चारणं किंचित् स्वपूर्वकालीनवेदोच्चारणध्वंसासमानकालीन-वाक्योच्चारणत्वाद्भारताद्युच्चारणवदित्यनुमानेन निरस्तत्वाद्वेदस्याप्यपौरु-षेयत्वसिद्ध्यनुपपत्तेः। एवं द्वितीयानुमानेनापि नापौरुषेयत्वसिद्धिः।

---

[1] केनचित्कारणेन (ख).

पूर्वकालीनसामान्यं भारतोच्चारणध्वंसवत् कालत्वाद्वर्तमानकालवदित्यनुमानेन भारतस्याप्यपौरुषेयत्वसिद्ध्यापत्तेः। व्यासकर्तृकभारतोच्चारणकालो भारतोच्चारणध्वंसाभाववान्, तथा पुराणप्रतिपन्नत्वादिति प्रत्यनुमाननिरस्तत्वाद्भारतस्य तदसिद्धौ वेदोच्चारणध्वंसो यत्किञ्चित्कालवृत्तिर्वाक्योच्चारणध्वंसत्वाद्भारताद्युच्चारणध्वंसवदिति प्रत्यनुमाननिरस्तत्वाद्वेदस्याप्यपौरुषेयत्वसिद्ध्यनुपपत्तेः। तृतीयानुमानमपि न युक्तं। इह वटे वैश्रवण इत्याद्यज्ञातकर्तृकवाक्येऽनवच्छिन्नसंप्रदायेऽपौरुषेयत्वाभावेन व्यभिचारात्। असिद्धश्चायं हेतुः पुराणेषु वेदस्य ब्रह्मकर्तृकत्वस्मरणात्। अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृता इति। प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत इति च पुराणवचनात्। यो वेदांश्च प्रहिणोतीति वेदवाक्येऽपि तत्कर्तुः स्मरणात्। यथा मनुस्मृतिः। याज्ञवल्क्यस्मृतिरित्यादिऋषिनामाङ्कितानां स्मृत्यादीनां तत्तदृषिकर्तृकत्वं, तथा काण्वशाखा, माध्यंदिनशाखा तैत्तिरीयशाखेत्यादिऋषिनामाङ्कितत्वेन वेदघटकशाखानां तत्तत्कर्तृकत्वावश्यकत्वाच्च। न चोदाहृतपुराणादिकं सर्वं चतुर्मुखादिप्रवक्तृकत्वाभिप्रायकं न तत्कर्तृकत्वाभिप्रायकमिति वाच्यं—प्रवक्तृत्वं हि पाठयितृत्वं। तद्बोधनोपाध्यायादिसाधारणमिति विशिष्य चतुर्मुखे तदभिधानानुपपत्तेः। ऋषिभिः प्रवर्तितत्वाच्छाखायास्तन्नामाङ्कितत्वे उपाध्यायादिनामाङ्कितत्वस्यापि दुर्वारतापत्तेः। एतेन वेदोऽपौरुषेयो व्याख्यानेन तथा प्रतिपाद्यमानत्वात्। यद्ग्रन्थो व्याख्यानेन यादृशधर्मवत्तया प्रतिपाद्यते स ग्रन्थस्तादृशधर्मको यथाऽष्टाध्याय्यादिकं पाणिनिकर्तृकत्वेन व्याख्यानप्रतिपाद्यत्वात् पाणिनिकर्तृकं। अपौरुषेयतया च वेदो व्याख्यानेन प्रतिपाद्यत इत्यपौरुषेयो वेदः। व्याख्यानानुरोधेन मूले पुरुषविशेषकर्तृकत्वास्वीकारेऽष्टाध्याय्याः पाणिनिकर्तृकत्वासिद्धिप्रसङ्गः। तद्व्याख्यानानुरोधेन तत्र पाणिनिकर्तृकत्वस्वीकारे वेदव्याख्यानानुरोधेन वेदेऽपौरुषेयत्वस्वीकारे कः प्रद्वेष इति निरस्तं। पाणिनि सूत्रव्याख्यानस्य मूलाविरुद्धत्वेन तदनुरोधेन सूत्रे पाणिनिकर्तृकत्वस्वीकारेऽपि वेद एव सकर्तृकत्वप्रतिपादनस्योदाहृतत्वेन तद्विरुद्धव्याख्यानस्यानुपादेयत्वात्। व्याख्यातृभिरपि कैश्चित्पौरुषेयत्वस्वीकारेण व्याख्यानस्याव्यवस्थितत्वाच्च। किं च वेदस्यापौरुषेयत्वे शाब्दबोधजनकत्वानुपपत्तिस्तात्पर्याभावात्। तात्पर्यं हीदं वाक्यमिममर्थं बोधयत्वित्याकारकवक्तृगतेच्छयोच्चरितत्वं। ईदृशतात्पर्यज्ञानस्य च शाब्दबोधेऽवश्यं कारणत्वं स्वीकर्तव्यं।

अन्यथा सैन्धवमानयेत्यादिवाक्यात् कदाचिल्लवणानयनबोधः कदाचिद-श्वानयनबोध इत्यत्र नियामकाभावप्रसङ्गात् । तात्पर्यज्ञानस्य हेतुत्वे चाश्वानयनबोधेच्छयोच्चरितत्वेऽश्वानयनबोधः । लवणानयनबोधेच्छयो-च्चरितत्वे च लवणानयनबोध इति नियामकनिर्वाहात्, वेदस्यापौरुषेयत्वे पुरुषेच्छाघटिततात्पर्यानिर्वाहात् ।

अत्र वेदान्तिनः-तात्पर्यं नाम न तदर्थप्रतीतीच्छयोच्चरितत्वं । अर्थ-ज्ञानशून्येन पुरुषेणोच्चरिताद्वेदाच्छुकादिवाक्याच्च शाब्दबोधाभावप्र-सङ्गात् । न च तत्र तात्पर्यभ्रमादेव बोध इति वाच्यं—अयमध्यापकोऽ-व्युत्पन्न इति विशेषदर्शनदशायामपि बोधोदयेन तत्र तात्पर्यभ्रमस्यापि कल्पयितुमशक्यत्वात् । न चेश्वरीयतात्पर्यज्ञानात्तत्र बोध इति वाच्यं—ईश्वरानङ्गीकर्तुरपि तद्वाक्याच्छाब्दबोधदर्शनात् । किंतु तत्प्रतीतिजनन-योग्यत्वमेव तात्पर्यं । गेहे घट इति वाक्यं गेहघटसंसर्गप्रतीतियोग्यं । न तदन्यप्रतीतियोग्यमिति तद्वाक्यं घटसंसर्गपरं, न तु पटसंसर्गपर-मित्युच्यते ।

ननु सैन्धवमानयेति वाक्यं यदा लवणप्रतीतीच्छयोच्चरितं तदाप्यश्व-संसर्गप्रतीतिजनने स्वरूपयोग्यतासत्त्वाल्लवणपरत्वज्ञानदशायामप्यश्वादि-बोधापत्तिरिति चेन्न-तदितरप्रतीतीच्छयाऽनुच्चरितत्वस्यापि तात्पर्य-विशेषणत्वात् । तथा च यद्वाक्यं यत्प्रतीतिजननयोग्यत्वे सति तदितर-प्रतीतीच्छयाऽनुच्चरितं, तद्वाक्यं तत्संसर्गपरमित्युच्यते । शुकादिवाक्येऽ-व्युत्पन्नोच्चरितवेदवाक्यादौ प्रतीतीच्छाया एवाभावेन तदन्यप्रतीतीच्छ-योच्चरितत्वाभावेन लक्षणसत्त्वान्नाव्याप्तिः । एवं च वेदस्यापौरुषेयत्वेऽपि तात्पर्योपपत्तेर्बोधोपपत्तिरिति वदन्ति । तन्न श्वेतगुणविशिष्टवस्तुनि धावनबोधेच्छयोच्चरिते शुनि धावनसंसर्गबोधेच्छया चोच्चरिते श्वेतो धाव-तीति वाक्ये निरुक्ततात्पर्यलक्षणस्याव्याप्तेः । तत्र तत्पदेन श्वेतगुणवि-शिष्टवस्तुधावनसंसर्गोपादाने तदितरश्वादिसंसर्गबोधेच्छयोच्चरितत्वेन तदितरप्रतीतीच्छयाऽनुच्चरितत्वाभावात् । अतस्तदर्थबोधेच्छयोच्चरितत्व-मेव तात्पर्यमिति स्वीकार्यं । एवं च वेदस्यापौरुषेयत्वे तात्पर्यानुपपत्ति-र्दुर्वारा । निरुक्तरूपमेव तात्पर्यं वक्तव्यं । न तु वेदान्त्युक्तरीत्येति च सूचितं प्रमेयरत्नमालायां । केषांचिद्वाक्यानामुभयार्थप्रतिपादनपरत्वेनापि दृश्यमानत्वात् । यथा श्वेतो धावतीत्युक्ते श्वा+इतो धावति, श्वेतगुण-युक्तो धावतीत्यर्थद्वयप्रतीतिरिति । उभयार्थप्रतिपादनपरत्वेनोभयार्थ-

बोधेच्छयोच्चरितत्वेनेत्यर्थः। न च तदितरमात्रप्रतीतीच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वमेव तात्पर्यं। उभयार्थबोधस्थले च तदितरमात्रप्रतीतीच्छाविरहान्नाव्याप्तिरिति वाच्यं—तदितरमात्रप्रतीतीच्छयानुच्चरितत्वं हि तत्प्रतीतीच्छयोच्चरितत्वाभावविशिष्टं यत्तदितरप्रतीतीच्छयोच्चरितत्वं तदभावरूपमितीदशशिरोवेष्टनापेक्षया तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यमित्यस्य युक्तत्वात्। शुकादिवाक्ये शिक्षयितृतात्पर्यं, वेदे चेश्वरतात्पर्यमस्तीत्यस्मदीयलक्षणस्य न कुत्राप्यव्याप्तिरिति वेदस्य पौरुषेयत्वमेव युक्तमिति दिक्।

ननूक्तरीत्या वेदस्याप्तप्रणीतत्वेऽपि तस्माद्बोधो न सम्भवति। शाब्दबोधे हि न तावदर्थोपस्थितिमात्रं कारणं, चक्षुरादिजन्यार्थोपस्थितिदशायामपि शाब्दबोधप्रसङ्गात्ः किंतु पदजन्यपदार्थोपस्थितिः कारणं। तत्र च पदार्थोपस्थितेः पदजन्यत्वं न सम्भवति। उपस्थितेः स्मृतिरूपतया तत्रानुभवस्य कारणत्वेऽपि पदस्य कारणत्वायोगात्। न च स्मृतौ संस्कारोद्बोधकस्यापि कारणत्वमावश्यकं, हस्तिहास्तिपकयोस्सम्बन्धज्ञानवतः पुंसो हस्तिज्ञाने सति हास्तिपकस्य स्मरणदर्शनात्; एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मृतावुद्बोधकत्वात्; एवं च पदतदर्थयोरपि परस्परं सम्बन्धितया पदज्ञानस्य पदार्थस्मृतिहेतुत्वावश्यकत्वात् पदार्थोपस्थितेः पदजन्यत्वं सम्भवतीति वाच्यं—पदपदार्थयोस्सम्बन्धाभावेन सम्बन्धिज्ञानत्वे पदार्थस्मृतौ पदस्य कारणत्वासम्भवादित्याशङ्कां वारयति—

सहजयोग्यतासङ्केतवशाद्धि शब्दादयो
वस्तुप्रतिपत्तिहेतवः॥ १००॥

सहजा स्वाभाविकी, योग्यता वह्न्यादौ दाहजनकतावच्छेदकशक्तिवत्पदेऽर्थबोधजनकतावच्छेदकशक्तिरूपा। तस्यां सत्यां यः सङ्केतोऽस्माच्छब्दादयमर्थो बोध्य इतीच्छारूपस्तद्वशादित्यर्थः। शब्दादय इत्यादिपदेन चेष्टापरिग्रहः। तथा च गवादिपदेषु गवादिरूपार्थबोधजनकतावच्छेदकशक्तिमत्वे सति सङ्केतरूपस्य सम्बन्धस्य सत्वाद्गवादिपदेन गवादिरूपार्थस्मृत्या शाब्दबोधनिर्वाह इति भावः। न च सङ्केतरूपसम्बन्धेनैव पदस्यार्थस्मृतिजनकत्वोपपत्तौ योग्यताकल्पन व्यर्थमिति वाच्यं। योग्यता हि न पदतदर्थयोस्सम्बन्धार्थं कल्प्यते। यद्वस्तुनो

यत्कार्यजनकत्वं तत्र तत्कार्यजनकतावच्छेदकशक्तिमत्वमिति नियमेन दण्डादौ घटादिजनकतावच्छेदकशक्तिवत्पदेऽपि शाब्दबोधजनकतावच्छेदकशक्तेरावश्यकत्वात्। अन्यथा पदाच्छाब्दबोधानुपपत्तेः। न चैवं गवादिविषयकबोधजनकतावच्छेदकशक्तिमत्वस्य गवादिपदे सत्त्वे तादृशशक्तिमत्वरूपसम्बन्धेनैव पदार्थस्मृत्युपपत्तौ सङ्केतकल्पनं व्यर्थमिति वाच्यं—तथा सति गवादिपदादश्वमहिषादिसकलार्थबोधापत्तेः। सर्वेषां पदानां सकलार्थविषयकबोधजनकतावच्छेदकशक्तिमत्वात्। अन्यथाऽनिश्चितसङ्केते पदे प्रयुक्ते कमर्थं बोधयितुमनेन शब्दः प्रयुक्त इति सन्देहानुपपत्तेः। उक्तं च न्यायकुमुदचन्द्रोदये—सर्वशब्दानां सर्वार्थेषु प्रत्यायनशक्तिरस्ति। न चैवं सकृत्सर्वार्थप्रतिपत्तिप्रसङ्गः, प्रतिनियतसङ्केतवशात्तेषां प्रतिनियतार्थप्रतिपादकत्वोपपत्तेरिति। अयमाशयः—यथा सकलरूपविषयकप्रत्यक्षजनकतावच्छेदकशक्तिमतोऽपि चक्षुषस्सहकारिभेदेनैकैकरूपचाक्षुषजनकत्वं। प्रत्यासन्नपदार्थे तिमिरसत्त्वे दूरस्थद्रव्यगतरूपचाक्षुषजनकत्वं दूरे तिमिरसत्त्वे समीपस्थवस्तुगतरूपचाक्षुषजनकत्वं। अञ्जनादिसत्त्वेऽन्धकारेऽपि रूपादिचाक्षुषजनकत्वं। पित्तादिदोषसत्त्वेऽविद्यमानपीतरूपादिज्ञानजनकत्वं। तथा पदस्य सकलार्थबोधजनकतावच्छेदकशक्तिसत्त्वेऽपि सहकारिवशात्प्रतिनियतार्थबोधजनकत्वमिति। तथा च पदानां बोधजनकतावच्छेदकशक्तिरूपयोग्यता सर्वार्थसाधारणी। सङ्केतश्च प्रतिनियतार्थगोचर इति विवेकः। गवादिपदे गवादिविषयकबोधजनकतावच्छेदकशक्तेः सत्त्वेऽपि तज्ज्ञानं शाब्दबोधे पदार्थोपस्थितौ वा न कारणं। तथा सति गवादिपदादश्वादेरप्युपस्थितिशाब्दबोधयोः प्रसङ्गात्। किंतु सङ्केतज्ञानमेव। सङ्केतश्चाऽस्मात्पदादयमर्थो बोद्धव्य इत्याकारिका एतत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेषताशालीच्छा। यद्वा—इदं पदमिममर्थं बोधयत्वित्याकारिका तदर्थविषयकबोधजनकत्वप्रकारतानिरूपितपदनिष्ठविशेष्यताशालीच्छा। अयं च सङ्केतो द्विविधः—अनादिसङ्केतः, शास्त्रकारसङ्केतश्चेति। तत्राद्यो गवादिपदस्य गोत्वावच्छिन्ने सङ्केतः। द्वितीयस्तु वैयाकरणकृतो नदीवृद्ध्यादिसङ्केतः। तत्राद्यसङ्केतो वाच्यवाचकभाव इत्युच्यते। द्वितीयस्तु परिभाषेति।

अत्र मीमांसकाः—गवादिपदस्य गवादिविषयकबोधजनकतावच्छेदकशक्तिमत्वमेव गवादिरूपार्थेन सम्बन्धः। न चैवं गवादिपदादश्वादे-

रपि बोधप्रसङ्ग इति वाच्यं--अश्वादिबोधजनकतावच्छेदकशक्तेर्गवादि-पदेऽकल्पनात्। शक्तिर्हि कार्यानुरोधेन कल्प्यते । गवादिपदेनाश्वादि-बोधस्याऽजायमानतया तज्जनकतावच्छेदकशक्तेस्तत्रानावश्यकत्वादन्यथा तन्त्वादावपि घटादिजनकतावच्छेदकशक्तिप्रसङ्गात् । तस्माच्छक्तेरेव तत्तदर्थनियतत्वात्सङ्केतकल्पनं व्यर्थमिति वदन्ति । तन्न—अश्वेन सह गामानयति चैत्र इत्यादिवाक्यादश्वसहितगवानयनविषयको बोधो जायत इति तद्वाक्ये तादृशबोधजनकतावच्छेदकशक्तेरावश्यकत्वेन वाक्यस्य च गवादिपदसमुदायात्मकस्य गवादिपदानतिरिक्तत्वेन गवा-दिपदेऽश्वविषयकबोधजनकतावच्छेदकशक्तेर्दुर्निवारकत्वात्। न च गवादि-विषयकत्वावच्छिन्नबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकशक्तिमत्व-मेव गवादिवाचकत्वं ; एवं चोक्तवाक्ये गवादिपदस्याश्वविषयकबोध-जनकत्वेऽप्यश्वविषयकत्वावच्छिन्नबोधनिष्ठजन्यतानिरूपितजनकतावच्छे-दकशक्तिमत्वस्याश्वपद एव स्वीकाराद्गोपदे तदस्वीकारान्नातिप्रसङ्ग इति वाच्यं—एवमपि गङ्गायां घोष इत्यादौ गङ्गापदेन तीरविषयकबोधो-त्पत्त्या तीरविषयकत्वावच्छिन्नबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदक-शक्तिमत्वस्य तीरपदे आवश्यकतया तस्य तीरवाचकत्वापत्तेः। सङ्केता-ङ्गीकारे च गङ्गापदस्य तीरे सङ्केताभावान्न तीरवाचकत्वमिति सङ्केत-कल्पनं सार्थकमेव ।

नैयायिकास्तु—पदानां बोधजनकतावच्छेदकशक्तिमत्वरूपयोग्यत्व-मप्रामाणिकमेव, शक्तिरूपपदार्थान्तरस्यैवाप्रामाणिकत्वेन वह्न्यादावपि दाहानुकूलशक्तेरभावात् । किंतु—अस्माच्छब्दादयमर्थो बोद्धव्य इती-श्वरसङ्केत एव शक्तिशब्देनोच्यते। स एव पदपदार्थयोस्सम्बन्ध इति वदन्ति । तन्न—शक्त्याख्यपदार्थान्तरस्य प्रागेव प्रसाधितत्वात्। किंच तत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताशालीच्छा-यास्तत्पदशक्तित्वे गङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपिततीरादि-निष्ठविशेष्यताकेच्छायास्सत्त्वाद्गङ्गापदस्य तीरे शक्त्यापत्तिः। न चेश्वरे-च्छाप्रवाह एव गङ्गापदजन्यबोधविषयतामवगाहते, न तीर इति वाच्यं—भवन्मते हीश्वरेच्छाया विद्यमानसर्ववस्तुविषयकत्वमङ्गीक्रियते। गङ्गायां घोष इत्यादौ गङ्गापदेन तीरबोधोदयेन गङ्गापदजन्यबोधविषयताया-स्तीरे सत्त्वेन तस्यास्तद्विषयकत्वाभावे सर्वविषयकत्वानुपपत्तेः। ईश्वरा-नङ्गीकर्तृणां तदीयसङ्केतरूपशक्तिज्ञानासम्भवेन शाब्दबोधानुपपत्तेश्च ।

तस्मात्सहजयोग्यतावच्छिन्नाऽनादिसङ्केतरूपैव शक्तिरिति युक्तं । सा च शक्तिः सामान्यविशेषात्मके वस्तुन्येव स्वीकार्या, न तु केवलसामान्ये केवलविशेषे वा । केवलसामान्यकेवलविशेषयोरप्रामाणिकताया वक्ष्यमाणत्वादित्यभिप्रेत्योदाहरति—

यथा मेर्वादयः सन्ति ॥ १०१ ॥

सन्तीत्यनेन सामान्यात्मकत्वस्य मेर्वादय इत्यनेन विशेषात्मकत्वस्य च वस्तुनि बोधनादुभयात्मक एव वस्तुनि पदानां शक्तिरिति भावः ॥

अत्र सौगताः—निरुक्तसङ्केतरूपा शक्तिर्हि न तावत्स्वलक्षणरूपे वस्तुनि, तस्य क्षणिकत्वेन व्यवहारकालपर्यन्तस्थायित्वाभावात् । सङ्केतस्य व्यवहारैकफलत्वेन व्यवहारकालपर्यन्तानवस्थायिनि सङ्केतस्य विफलत्वात्, किंत्वन्यापोहे । अन्यापोहश्च गवादौ गवादिभिन्नभेदः । स चाभावत्वान्न क्षणिक इति तस्य व्यवहारकालस्थायित्वात्तत्र सङ्केतोपपत्तिः । यत् सत्तत् क्षणिकमित्यनुमानेन भावसामान्यस्यैव क्षणिकत्वाभ्युपगमात् । न चान्यापोहस्यैव गवादिशब्दार्थत्वे शुक्लां गामानयेत्यादौ गवादिपदेन तस्य बोधानुपपत्तिः, अन्यापोहे शुक्लाद्यभेदस्यानयनयोग्यत्वस्य चाभावादिति वाच्यं—तत्रान्वयानुपपत्त्याऽपोहाश्रये स्वलक्षणे गवादिपदानां लक्षणास्वीकारादिति वदन्ति । तन्न—वस्तुनः क्षणिकत्वस्य निरस्तत्वेन तस्य व्यवहारकालस्थायित्वेन तत्र संकेतोपगमे बाधकाभावात् । अन्यापोहस्य स्थायित्वेऽप्यानयनाद्यनर्हत्वेन व्यवहाराविषयतया तत्र संकेतस्वीकारस्य विफलत्वात् । किंच—बहुव्यवहारविषये पदानां शक्तिः । अल्पव्यवहारविषये लक्षणा । यथा—गङ्गापदस्य प्रवाहे शक्तिस्तीरे लक्षणेति सर्वसम्मतं । अतोऽस्यापि व्यवहारस्यागोचरेऽपोहे शक्तिः । सर्वव्यवहारविषये वस्तुनि लक्षणेत्युपहास्यम् ।

ब्रह्माद्वैतवादिनस्तु—सर्वेषां पदानां मिथ्याभूते पदार्थ एव शक्तिः, ब्रह्मभिन्नसामान्यस्य मिथ्यात्वात् ; सत्यभूते ब्रह्मणि च पदानां लक्षणेति वदन्ति । तदपि न—ब्रह्मपदस्य ब्रह्मणि लक्षणाङ्गीकारे शक्तेरन्यत्र स्वीकारप्रसङ्गात्—लक्षणायाः शक्यसम्बन्धरूपत्वेन ब्रह्मपदस्य शक्याभावे तत्सम्बन्धरूपलक्षणानुपपत्तेः । न च ब्रह्म द्विविधं—मायोपहितं, शुद्धं चेति,

तत्र मायोपहिते ब्रह्मपदस्य शक्तिः, शुद्धे तु लक्षणेति वाच्यं—मायोपहितं नाम मायारूपोपाधि तदाश्रयब्रह्मोभयमेवेति मायोपहिते शक्त्यङ्गीकारे तद्घटकशुद्धेऽपि शक्तेर्दुस्त्यजत्वात् । न च शुद्धमायोपहितापेक्षया भिन्नमेव विशिष्टशुद्धयोर्भेदाङ्गीकारात्, शुद्धस्य धर्मसामान्यशून्यतया मायासम्बन्धानुपपत्तेश्चेति वाच्यं—शुद्धस्य निर्धर्मकत्वे तत्र लक्षणाया अप्यसम्भवात्, तस्या अपि धर्मत्वाविशेषात् ।

मीमांसकास्तु—गवादिपदानां न व्यक्तौ शक्तिरानन्त्यात् । देशान्तरस्थस्य पुंसः काश्यां गौरित्यादिवाक्याच्छाब्दबोधानुपपत्तेश्च । देशान्तरीणपुंसः काशीस्थगौरसन्निकृष्टत्वेन तत्र शक्तेरग्रहात् । तद्विशेष्यकशाब्दबोधे तद्विशेष्यकशक्तिज्ञानत्वेन कारणत्वात्, किन्तु गोत्वादिरूपजातावेव । तस्याश्चैकत्वाच्छक्त्यैक्यनिर्वाहः । गोत्वविशिष्टे शक्तिस्वीकारे विशेषणीभूतजातिविशेष्यभूत[1] व्यक्त्योर्द्वयोरेव शक्तेः स्वीकरणीयतया तदपेक्षया विशेषणमात्रे शक्तिस्वीकारे लाघवात् । तदुक्तं—"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषण" इति । न च व्यक्तौ शक्त्यभावे गवादिपदाद्गोत्वादिजातेरेव बोधापत्तिर्न तु व्यक्तेरिति वाच्यम् । गौरस्तीत्यादौ गोत्वरूपसामान्य एवास्तित्वान्वयसम्भवेन जातेरेव तत्र बोधात् । गामानयेत्यादौ तु गोत्वस्यानयनकर्मत्वासम्भवेन लक्षणया गवादेर्बोध इति वदन्ति । तन्न—यतो गोपदादेतद्गौर्बोद्धव्या तद्गौर्बोद्धव्येति सङ्केतो नांगीक्रियते येन व्यक्तिभेदेन शक्त्यानन्त्यं स्यात् । किंतु गोपदाद्गौर्बोद्धव्येत्याकारको गोसामान्यविषयक एक एव सङ्केतः स्वीक्रियत इति जात्यात्मकव्यक्तौ शक्तिस्वीकारेऽपि न शक्त्यानन्त्यप्रसङ्गः । एवं धूमो वह्निव्याप्य इति तर्केण धूमत्वावच्छेदेन वह्निनिरूपितव्याप्तिग्रहवत् । गौर्गोपदवाच्येति तर्केण गोत्वावच्छेदेन सङ्केतग्रहोपगमान्न काशीवृत्तिर्गौरित्यादिवाक्याच्छाब्दबोधानुपपत्तिः । किञ्च—बहुतरव्यवहारविषये व्यक्तौ शक्तिं परित्यज्याल्पतरव्यवहारविषये जातौ शक्तिकल्पनं चायुक्तमेव । तस्मात्सामान्यविशेषात्मके वस्तुन्येव पदसङ्केतरूपा शक्तिरिति युक्तं । सा च शक्तिर्द्विविधा—रूढिर्योगश्चेति । तत्र समुदायशक्ती रूढिः । अवयवशक्तिर्योगः । उक्तशक्तिभेदेन तदाश्रयीभूतं पदं चतुर्विधं—रूढं, यौगिकं, योगरूढं, यौगिकरूढं चेति । तत्र गवादिपदं रूढं, गोपदस्य गोत्वावच्छिन्ने समुदाये शक्तेः । यद्यपीत्थंभूतनयाभि-

---

1 शक्त्योर्द्वयोरेव (ख).

प्रायेण रूढशब्द एव नास्ति। तन्नयेन गवादिशब्दानामपि गच्छतीति गौरिति यौगिकत्वस्यैवाभिप्रेतत्वात्। तथापि समभिरूढनयाभिप्रायेणायं विभागस्तन्नयाभिप्रायेण रूढेः सत्त्वात्। तदुक्तं मार्तण्डे "समभिरूढो हि शकनक्रियायां सत्यामसत्यां च देवराजार्थस्य शक्रव्यपदेशमभिप्रैति। पशोर्गमनक्रियायां सत्यामसत्यां च गोव्यपदेशवत्तथा रूढेः सद्भावादिति"। यौगिकं पाचकादिपदं। तत्र पचधातोः पाके प्रत्ययस्य कर्तरि शक्तत्वेन पाककर्तृबोधस्यावयवशक्त्यधीनत्वात्। पङ्कजादिपदं योगरूढं। तत्र पङ्कजनिकर्तुरवयवशक्त्या पद्मत्वावच्छिन्नस्य समुदायशक्त्या बोधनेन योगरूढ्योर्द्वयोरपि सत्त्वात्। न च पङ्कजपदस्य योगेनैव पद्मबोधकत्वसम्भवेन तत्र रूढिस्वीकारो व्यर्थ इति वाच्यं—तथा सति भेकादावपि पङ्कजपदप्रयोगापत्तेः। तत्रापि पङ्कजनिकर्तृत्वस्य सत्त्वात्, रूढिस्वीकारस्यावश्यकत्वात्। न च रूढिमात्रेणैव सकलातिप्रसङ्गवारणसम्भवाद्योगकल्पनं विफलमिति वाच्यं—पङ्कजपदादनुभवसिद्धस्य पङ्कजनिकर्तृत्वबोधस्यापलापानर्हतया तदर्थं योगस्यापि स्वीकार्यत्वात्। मण्डपादिपदं यौगिकरूढं जनाश्रये मण्डपपदस्य रूढिशक्तेर्मण्डपानकर्तरि योगशक्तेश्च सद्भावात्। यद्यपि योगरूढयौगिकरूढयोरविशेषः। उभयत्र शक्तिद्वयसाम्यात्। तथाप्येकस्मिन् धर्मिणि योगरूढ्योस्सत्त्वे योगरूढं। भिन्नधर्मि[1]णोर्योगरूढिसत्त्वे च यौगिकरूढिसत्त्वे च यौगिकरूढमिति विशेषो बोध्यः। एवं च योगरूढिभेदभिन्ना निरुक्तसंकेतरूपा शक्तिरेव पदपदार्थयोस्सम्बन्ध इति सहजयोग्यतेत्यादिसूत्राभिप्रायः।

ननु निरुक्तशक्तिर्यथा पदपदार्थसम्बन्धस्तज्ज्ञानजन्योपस्थितिश्च शाब्दबोधे कारणं, तथा लक्षणापि पदपदार्थयोस्सम्बन्धस्तज्ज्ञानजन्योपस्थितिरपि शाब्दबोधे कारणम्। गङ्गायां घोष इत्यादौ गङ्गापदजन्यतीरोपस्थित्या तीरबोधजननात्। एवं च पदपदार्थसम्बन्धभूतलक्षणाया अनुक्त्या न्यूनतेति चेन्न—न्यायवाक्यजन्यज्ञाने परार्थानुमानपदस्य शक्तिमभिधाय तद्वचनमपि तद्धेतुत्वादिति सूत्रे परार्थानुमानपदशक्त्यज्ञानजनकत्वात्, न्यायवाक्येऽपि परार्थानुमानव्यवहार इत्युक्त्या शक्यसम्बन्धरूपलक्षणायास्तत्सूत्रे प्रतिपादितत्वात् न न्यूनता। शक्य सम्बन्धरूपा लक्षणा द्विविधा—जहद्वाच्या, अजहद्वाच्या चेति। तत्राद्या गङ्गायां घोष इत्यादौ। तत्र गङ्गापदेन शक्यभूतप्रवाहं परित्यज्य तीर-

---

[1] इदमधिकं पदं (क).

बोधनात्। द्वितीया तु काकेभ्यो दधि रक्ष्यतामित्यादौ। तत्र काकपदेन वाच्यभूतकाकस्यावाच्यभूतबिडालकुक्कुटादीनां च बोधात्। एवं च पदं प्रथमं द्विविधं—लाक्षणिकं वाचकं चेति। तत्र लाक्षणिकं जहद्वाक्य लक्षणाविशिष्टमजहद्वाक्यलक्षणाविशिष्टं चेति द्विविधं। वाचकं तु पूर्वोक्तरूढयौगिकयोगरूढयौगिकरूढभेदेन चतुर्विधमिति विभागस्सम्पन्न इति ध्येयं। पदसामान्यलक्षणं तु अर्थोपस्थितिजनकतावच्छेदकविषय-ताश्रयवर्णत्वव्यापकत्वे सति तादृशविषयताश्रयवर्णत्वव्याप्यसमुदायत्व-वत्वं। घटादिरूपार्थोपस्थितिजनकतावच्छेदिका घकारादिविषयताः। तदाश्रयवर्णत्वव्यापकं तद्व्याप्यं च यत्समुदायत्वं घकाराकारटकाराकार-समुदायत्वं। तद्वत्त्वस्य घटादिपदे सत्त्वाल्लक्षणसङ्गतिः। मधुकरादि-वर्णचतुष्टयात्मकपदैकदेशे वर्णसमुदायेऽतिव्याप्तिवारणाय सत्यन्तम्। समुदायत्वविशेषणं वाक्यत्वात्मकसमुदायत्वमादाय वाक्येऽतिव्याप्ति-वारणाय तादृशविषयताश्रयवर्णत्वव्याप्येति। शाब्दबोधजनकतावच्छे-दकविषयताश्रयवर्णत्वव्यापकत्वे सति तादृशवर्णत्वव्याप्यसमुदायत्ववत्वं वाक्यस्य लक्षणं। पदत्वात्मकसमुदायत्वमादाय पदेऽतिव्याप्तिवारणाय सत्यन्तम्। ग्रन्थत्वात्मकसमुदायत्वमादाय ग्रन्थेऽतिव्याप्तिवारणाय तादृश विषयताश्रयवर्णत्वव्यापयत्वनिवेशः। न च नीलं घटमानयेत्यादौ वाक्यैकदेशेनापि नीलं घटमित्यनेन खण्डवाक्यार्थबोधजननात्तादृश-खण्डवाक्यार्थबोधजनकतावच्छेदकविषयताश्रयवर्णसमुदायत्वमादाय नीलं घटमिति वाक्यैकदेशेऽतिव्याप्तिरिति वाच्यम्। बोधे निराकाङ्क्ष-त्वस्य विशेषणत्वात् नीलं घटमिति खण्डवाक्यार्थबोधानन्तरं क्रिया-काङ्क्षोदयेन निराकाङ्क्षबोधानुत्पत्त्या तादृशबोधजनकतावच्छेदक-विषयताश्रयवर्णसमुदायत्वाभावात्। न च शब्दः परिणामी सत्त्वादिति न्याये उक्तवाक्ये लक्षणस्याव्याप्तिः, तत्रोदाहरणाद्याकाङ्क्षासत्त्वेन निराकाङ्क्षबोधानुदयादिति वाच्यं—व्युत्पन्नस्य ततो निराकाङ्क्ष-बोधस्यैव जायमानत्वेन तं प्रति वाक्यलक्षणोपपत्तेः। अव्युत्पन्नस्य प्रतिज्ञाहेतुभ्यां निराकाङ्क्षबोधाजननेऽपि न क्षतिः। तं प्रति पञ्चावयव-समुदायस्यैव न्यायत्वेन तस्यैव वाक्यत्वादिति॥

वैयाकरणास्तु—सुप्तिङन्यतरान्तत्वं पदस्य लक्षणम्। सुबन्तत्व-मात्रोक्तौ तिङन्ते, तिङन्तत्वमात्रोक्तौ च सुबन्तेऽव्याप्तिरित्यन्यतरान्त-त्वनिवेशः। तादृशपदसमुदायत्वं च वाक्यत्वमिति वदन्ति। तत्र—

अव्ययादौ सुबन्तत्वाभावेनाव्याप्तेः। न च तत्र सुपोऽश्रवणेऽपि लुप्त-विभक्तेरनुसन्धानमस्त्येवेति सुप्तिङन्यतरपूर्वत्वेनानुसन्धीयमानत्वमेव तल्लक्षणार्थ इति नाव्याप्तिरिति वाच्यम्। यादृशपदव्यक्तावन्यतरपूर्वत्वानु-सन्धानं नास्ति तत्राव्याप्तेः। न च सुबन्तत्वाद्यज्ञाने पदाच्छाब्दबोध एव न जायत इति सर्वत्रानुसन्धानं कल्पनीयमिति वाच्यम्—अव्ययादौ सुबन्तत्वाज्ञानदशायामपि शाब्दबोधस्यानुभवसिद्धत्वेनानुसन्धानकल्पना नर्थक्यात्। सुबन्तत्वादिज्ञानस्य शाब्दबोधाहेतुत्वात्। हेतुत्वेऽपि यद्वाक्याच्छाब्दबोधो न जातस्तद्वाक्यघटकाव्ययेष्वव्याप्तेश्च। तत्रानु-सन्धानकल्पनस्य प्रसक्तेरेवाभावात्। न च यद्वाक्याद्बोधो न जातस्त-द्वाक्ये बोधजनकताघटितभवदीयलक्षणस्याप्यव्याप्तिरिति वाच्यम्—वाक्यविषयकज्ञानत्वेन शाब्दबोधं प्रति कारणत्वेन वाक्याद्बोधाजननेऽपि वाक्यविषयतायां बोधजनकतावच्छेदकत्वानपायात्। अरण्यस्थदण्डस्य घटाजनकत्वेऽपि घटजनकतावच्छेदकदण्डत्वस्य घटे स्वीकारात्। एवं सुप्तिङन्यतरान्तत्वस्य पदलक्षणत्वे राजपुरुष इति समासस्यापि पदत्वा-पत्तिः, समासानन्तरमेव सुबुत्पत्तेः। पदसमुदायत्वं वाक्यत्वमित्यपि न युक्तं—वाक्यैकदेशेऽनेकवाक्यसमुदायात्मकग्रन्थे च पदसमुदायत्वस्या-क्षतत्वेनातिव्याप्तेर्दुर्वारत्वादिति।

नैयायिकास्तु—शक्तिमत्त्वं पदस्य लक्षणम्। न च घकारटकारादि समुदाये शक्तिसत्त्वे समुदायस्य प्रत्येकानतिरिक्ततया प्रत्येकवर्णेऽति व्याप्तिरिति वाच्यम्—पर्याप्तिसम्बन्धेन शक्तिमत्त्वस्य विवक्षितत्वात्। पर्याप्तिसम्बन्धेन शक्तेर्घकारादिसमुदाय एव सत्त्वात्प्रत्येकवर्णेऽतिव्याप्ति-विरहादिति वदन्ति। तदपि न-प्रत्येकापर्याप्तस्य समुदाये पर्याप्त्यनुयोगेन पर्याप्तिसम्बन्धेनापि प्रत्येकवर्णे शक्तिमत्त्वस्य दुर्वारत्वात्। न च शक्तता-वच्छेदकतापर्याप्त्यधिकरणसमुदायत्ववत्त्वं पदस्य लक्षणमिति स्वीका-रान्न प्रत्येकवर्णेऽतिव्याप्तिः, घकारटकारसमुदायस्य घटे शक्तत्वेन तत्समुदायत्वस्यैव शक्ततावच्छेदकता पर्याप्त्यधिकरणत्वादिति वाच्यम्। तथा सति मतङ्गजपदघटकगजशब्दे घनाघनपदघटकघनशब्दे चाति-व्याप्तेः। प्रत्येकस्य गजशब्दस्य पदत्वेऽपि मतङ्गजपदघटकस्य पदत्व-विरहात्। अन्यथा समुदायप्रयोगवैयर्थ्यात्। गकारजकारसमुदायस्यापि गजे शक्ततया तदवच्छेदकता पर्याप्त्यधिकरणत्वस्य गकारजकारसमुदा-यत्वे सत्त्वात्। अर्थोपस्थितिजनकतावच्छेदकविषयताश्रयवर्णत्वव्याप-

कत्वघटितास्मदीयलक्षणस्य मतङ्गजपदैकदेशगजशब्दे नातिव्याप्तिः। तत्र समुदायेनैवार्थोपस्थितिजननेनोपस्थितिजनकतावच्छेदकविषयताश्रयवर्णत्वव्यापकत्वस्यैकदेशसमुदायत्वेऽभावादिति दिक्।

स्मृत्यादिप्रमितिप्रभेदभिदुरं मानं परोक्षाभिधम्।
यद्देवैः प्रतिपादितं स्फुटतरं सूत्रैर्विचित्रक्रमैः॥
तद्व्याख्याविशदं व्यधायि च मया सारं समुद्धृत्य ता।
सन्तः सार्थकयन्त्विमां शुभगुणास्सानन्दमालोकनैः॥

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेल्गुळपुरनिवास रसिकस्याभिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां परोक्षप्रमाणपरिच्छेदः तृतीयः

---

## अथ चतुर्थः परिच्छेदः

---

अथ स्वरूपसङ्ख्याविषयविप्रतिपत्तिं निराकृत्य विषयविप्रतिपत्ति-निरासार्थमाह—

**सामान्यविशेषात्मा तदर्थो विषयः ॥ १ ॥**

सामान्यविशेषोभयात्मक एव विषयस्तदर्थः, तस्य प्रमाणस्यार्थो-ग्राह्य इत्यर्थः । अत्र केवलसामान्यस्य प्रमाणविषयत्वनिरासाय विशेष-ग्रहणम् । केवलविशेषाणां प्रमाणग्राह्यतानिरासाय सामान्यग्रहणम् । सामान्यविशेषयोरत्यन्तभिन्नयोः प्रमाणविषयतानिरासार्थमात्मग्रहणम् । अत्र सत्सामान्यरूपब्रह्मणः पूर्वमेव निरस्तत्वात्तदितरद्विचार्यते । अत्र प्रधानसामान्यवादिनः साङ्ख्याः । ज्ञेयत्वं कालसम्बन्धित्वं वा पदार्थ-सामान्यस्य लक्षणम् । उक्तलक्षणलक्षितः पदार्थश्च द्विविधः—चेतनाचेतनभेदात् । स्वयं प्रकाशत्वं चेतनस्य लक्षणम् । तच्च स्वनिरूपित विषयतावत्वम् । चेतनस्य स्वपदेनोपादाने तन्निरूपितविषयताया आत्मनि सत्त्वाल्लक्षणसङ्गतिः । घटादेः स्वपदेनोपादाने तन्निरूपित-विषयताया घटादावभावात्स्व[1]भिन्नज्ञाननिरूपितविषयताया एव सत्त्वान्नातिव्याप्तिः । ते चात्मानो नित्या, विभवश्च । नित्यत्वं ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । ते चात्मानो द्विविधाः—बद्धा मुक्ताश्च । तत्र न दुःखसम्बन्धित्वं बद्धत्वं, दुःखस्यान्तःकरणधर्मत्वेन तद्वत्वस्य जीवेऽभावात् । किंतु दुःखाश्रयान्तःकरणेन सह परस्परानुप्रवेशात्मकसंयोगवत्वमेव बद्धत्वम् । तादृशसंयोगध्वंसवत्वमेव मुक्तत्वम् । सत्त्वात्मकत्वं, रज आत्मकत्वं, तम आत्मकत्वं वाऽचेतनसामान्यस्य लक्षणं । सत्त्वरजस्तमो-रूपगुणानामचेतनत्वात् । गुणगुणिनोरभेदाच्चाचेतने सत्त्वात्मकत्वो-पपत्तेः । तत्र प्रकाशलाघवादिहेतुभूतो गुणस्सत्त्वम् । चन्द्रिका-चण्डातपादौ प्रकाशलाघवादेस्सत्त्वकार्यत्वात् । चलनधारणादिहेतुभूतो

---

[1] स्वामिन्नज्ञान (क).

गुणो रजः। वाय्वादौ चलनधारणादेरजःकार्यत्वात्। गुरुत्वावरणादि-हेतुर्गुणस्तमः। पृथिव्यादौ गुरुत्वादेस्तत्कार्यत्वात्। न च पृथिव्यादौ सत्त्वात्मकत्वाभावात्तेजआदौ तमआत्मकत्वाभावादुक्तलक्षणानामव्याप्तिरिति वाच्यं—पृथिव्यादावपि सत्त्वस्य सद्भावात्, तमोगुणाधिक्येन सत्त्वकार्यानुपलम्भात्। अन्यथा पृथिव्यादेस्सकाशात् लघुभूतानां तृणादीनां प्रकाशकानां मण्यादीनां चानुत्पत्तिप्रसङ्गात्। कार्ये कारणगुणानुवृत्तेरेव सम्भवेन पृथिव्यां सत्त्वाभावे तत्कार्ये तृणादौ तदनुपपत्तेः। अचेतनसामान्ये सत्त्वादीनां न्यूनाधिकभावेन सत्त्वादुक्तलक्षणानामुपपत्तिः। तच्चाचेतनं त्रिविधं—प्रकृति, विकृति, प्रकृतिविकृति चेति। तत्र प्रधानं प्रकृतिः। एकादशेन्द्रियाणि, पञ्च महाभूतानि च विकृतयः। महदहङ्कारौ, तन्मात्राणि पञ्च प्रकृतिविकृतयः। प्रकृतेर्महानुत्पद्यते। महतोऽहङ्कारः। स चाहङ्कारस्त्रिविधः—सात्त्विकराजसतामसभेदात्। तत्र सात्त्विकादेकादशेन्द्रियाणि जायन्ते। इन्द्रियाणि हि त्रिविधानि—ज्ञानेन्द्रियकर्मेन्द्रियोभयेन्द्रियभेदात्। घ्राणरसचक्षुस्त्वक्श्रोत्राणि ज्ञानेन्द्रियाणि पञ्च। वाक्पाणिपादपायूपस्थभेदात्पञ्च कर्मेन्द्रियाणि। उभयेन्द्रियं मनः। तामसाहङ्काराद्भूतादिनामकात् शब्दस्पर्शरूपरसगन्धनामकानि तन्मात्राणि जायन्ते। तत्र शब्दतन्मात्रादाकाशम्। अत आकाशस्य शब्दगुणकत्वम्। शब्दतन्मात्रस्पर्शतन्मात्राभ्यां वायुः। अतो वायोश्शब्दस्पर्शोभयगुणवत्त्वम्। शब्दस्पर्शरूपतन्मात्रैस्तेजः। अतस्तेजसो गुणत्रयवत्त्वं। शब्दस्पर्शरूपरसतन्मात्रैर्जलं। अतो जलस्य गुणचतुष्टयवत्त्वं। शब्दस्पर्शरूपरसगन्धतन्मात्रैः पृथिवी। अतोऽस्याः पञ्चगुणवत्त्वमिति सृष्टिक्रमाङ्गीकारात्। अजन्यत्वे सति तत्त्वान्तरोपादानत्वं प्रकृतेर्लक्षणम्। मूलप्रकृतेः केनाप्यजन्यत्वान्महदादितत्त्वोपादानत्वाच्च लक्षणसङ्गतिः। महदादिवारणाय सत्यन्तम्। जीववारणाय विशेष्यं। जन्यत्वे सति तत्त्वान्तरानुपादानत्वं विकृतिलक्षणम्। एकादशेन्द्रियपञ्चमहाभूतानां तत्त्वान्तरानुपादानत्वादहङ्कारजन्यत्वाच्च लक्षणसङ्गतिः। जीववारणाय सत्यन्तम्। प्रकृत्यादिवारणाय विशेष्यं। पृथिव्यादेर्घटाद्युपादानत्वे नाव्याप्तिवारणाय तत्त्वान्तरेति। जन्यत्वे सति तत्त्वान्तरोपादानत्वं प्रकृतिविकृतीनां लक्षणम्। महदहङ्कारतन्मात्राणां प्रकृत्याजन्यत्वात्तत्त्वान्तरोपादानत्वाच्च लक्षणसमन्वयः। प्रकृतिवारणाय सत्यन्तम्। विकृतिवारणाय विशेष्यं। घटाद्युपादानमृदादिवारणाय विशेष्यदले तत्त्वान्तरेति। उक्तं च—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ॥

ननु एकादशेन्द्रियपञ्चमहाभूतानां प्रमाणप्रतिपन्नत्वाद्वाद्यन्तरस्वीकृतत्वाच्च युक्तत्वेऽपि प्रकृतिमहदहङ्कारतन्मात्राणां कल्पनमप्रामाणिकमिति चेन्न—पञ्चमहाभूतानि स्वापेक्षया सूक्ष्मावस्थापन्नस्वगतगुणसजातीयगुणवद्द्रव्योपादानकानि कार्यत्वात्पटवत् । यथा नीलपटः स्वापेक्षया सूक्ष्मभूतनीलतन्तूपादानकस्तद्वत् आकाशं शब्दवत्सूक्ष्मद्रव्योपादानकं । वायुः स्पर्शवद्द्रव्यशब्दवद्द्रव्योपादानक इति रीत्या पञ्चभूतोपादानानि पञ्च सूक्ष्मद्रव्याणि सिध्यन्ति । तान्येव तन्मात्राणीत्युच्यन्ते । एवं तन्मात्राणि ममेदं कर्तव्यमित्याकारकाभिनवद्रव्यमूलकानि कार्यत्वाद्घटादिवदित्यनुमानेनाभिमानवद्द्रव्यं सिध्यति । घटादेर्निरुक्ताभिमानवत् । कुलालान्तःकरणपूर्वकत्वदर्शनेन तन्मात्राणामपि तथाविधद्रव्यमूलकत्वावश्यकत्वात् । तादृशाभिमानद्रव्यमेवाहङ्कारः । न च घटादौ मृद उपादानत्वस्याभिमानवद्द्रव्यस्य निमित्ततायाश्च दर्शनेनाहङ्कारस्तन्मात्राणां निमित्तः स्यादितरदुपादानं स्यादिति वाच्यं—घटादिस्थले विभिन्नोपादानयोः प्रत्यक्षसिद्धत्वेनावश्यकत्वेऽप्यत्राभिमानवद्द्रव्यस्यैवोपादानत्वकल्पने उपादानान्तराकल्पनेन लाघवात् । न च तादृशाभिमानवान् चेतन एव, न त्वचेतनं प्रधानकार्यमिति वाच्यं—चेतनस्य निर्गुणत्वेन तत्र तादृशाभिमानासम्भवात् । तादृशाभिमानवद्द्रव्यं निश्चयवद्द्रव्यपूर्वकमभिमानवद्द्रव्यत्वात् । मया घटः कर्तव्य इत्यभिमानाश्रयकुलालान्तःकरणवत् । घट एतादृशोऽहमेतादृश इति कुलालोऽभिमन्यते । तथा चाभिमानविशिष्टान्तःकरणस्य, निश्चयविशिष्ट[1]तत्पूर्वकत्वमभिमानवृत्तिकस्याहङ्कारस्य निश्चयवृत्तिकमहदुपादानकत्वमावश्यकम् । तदेव महत्तत्त्वमहं सुखी, दुःखी, मुग्ध इत्यादिप्रत्यक्षसिद्धम् । एवं सुखदुःखमोहात्मकं महत्तत्त्वं सुखदुःखमोहात्मकद्रव्यजन्यं कार्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तावदित्यनुमानेन महत्तत्त्वकारणभूतप्रधानसिद्धिः । कारणगुणानुसारेण कार्यगुणौचित्यात् । न चाहं सुखीत्याद्यनुभवेनाहमर्थस्य सुखादिमत्त्वेऽपि कान्तादिविषये सुखादिमत्वे प्रमाणाभावाद्दृष्टान्ते साधनवैकल्यमिति वाच्यम् । स्त्रीसुखं चन्दनसुख-

---

[1] तत्पूर्वकत्ववद् (ख).

मित्याद्यनुभवेन विषयाणामपि सुखादिधर्मकत्वसिद्धेः। न च स्त्रीसुखमित्यादौ स्त्रियो निमित्तत्वमेव प्रतीयते, नोपादानत्वमिति वाच्यं— स्त्रीसुखमित्यादौ स्त्रियो निमित्तत्वमन्यस्योपादानत्वमिति कल्पने कारणद्वयकल्पनागौरवात् स्त्रिय एवोपादानत्वौचित्यात्। एवं च प्रकृतिश्चतुर्विंशतितत्त्वात्मिका, पुरुषश्च पञ्चविंशतिरिति पञ्चविंशतितत्त्वज्ञानान्मोक्षः "पञ्चविंशतितत्त्वज्ञस्संसाराद्विमुच्यत" इति शास्त्रादिति वदन्ति। अत्रोच्यते—स्वनिरूपितविषयतावत्त्वं जीवस्य लक्षणमिति न युक्तम्। अन्तःकरणवृत्तिरूपतया त्वन्मतसिद्धेरयं घट इत्यादिज्ञाने स्वनिरूपितविषयतासत्त्वेनातिव्याप्तेः। वृत्तेर्वृत्त्यन्तरवेद्यत्वेऽनवस्थापत्त्या स्वप्रकाशत्वस्यैव युक्तत्वात्। न च नित्यत्वे सतीति [1]विशेषणान्न वृत्तावतिव्याप्तिरिति वाच्यं—तथा सति स्वनिरूपितविषयतावत्त्वस्य व्यर्थत्वात्। न च प्रधानस्य नित्यत्वात्तत्रातिव्याप्तिरिति तद्वारणाय तत्सार्थक्यमिति वाच्यं- भवन्मते कार्यकारणयोरभेदेन महदादेरुत्पत्तिमत्त्वे तदभिन्नस्य नित्यत्वायोगात्। अथास्मन्मते महदादिकमपि नोत्पद्यते, प्रधाने सदेव महदादिकं कालविशेषेऽभिव्यज्यते। तिले तैलवद्दध्नि नवनीतवच्चेति सत्कार्यवादाभ्युपगमात्। सतोऽभिव्यक्तेरेव सत्कार्यवादशब्दार्थत्वात्। पूर्वमसत एवोत्पत्तिस्वीकारे तिलादेरिव सिकतादेरपि तैलोत्पत्तिप्रसङ्गादिति चेन्न—सर्वथा सतः कार्यत्वं सत्कार्यत्वं सत्कार्यवादस्य विषयः? कथंचिद्वा? नाद्यः सर्वथा सतः कार्यत्वविरोधात्। न द्वितीयः—द्रव्यरूपेण सतः पर्यायरूपेण कार्यत्वे स्याद्वादिमतप्रवेशात्। एवमन्तःकरणवृत्तेरपि भवद्रीत्या नित्यत्वेन तद्विशेषणेन तत्रातिव्याप्तेर्दुर्वारता। किं चाभिव्यक्तिरुत्पद्यते? न वा? आद्ये सत्कार्यवादभङ्गः। असत्या एवाभिव्यक्तेरुत्पत्तिस्वीकारात्। द्वितीयेऽभिव्यक्तेर्नित्यत्वापत्तिः। तथा च घटाद्यभिव्यक्तेरपि नित्यत्वेन कारकव्यापारवैयर्थ्यं। अभिव्यक्तेरभिव्यक्त्यन्तरस्वीकारे चानवस्थेति। आत्मनां नित्यत्वकथनमपि न युक्तम्। सर्ववस्तूनामपि भवन्मते नित्यत्वेन नित्यानित्यविभागस्यैवायुक्तत्वात्। न च सर्वदाऽभिव्यक्तत्वं नित्यत्वं, कदाचिदनभिव्यक्तत्वमनित्यत्वं, जीवस्य प्रधानस्य च सर्वदाभिव्यक्तत्वान्नित्यत्वं, महदादेः कदाचिदनभिव्यक्तत्वादनित्यत्वमिति विभागो युज्यत इति वाच्यम्—अभिव्यक्तेर्ज्ञानरूपत्वेन सर्वदा

---

1 विशेषणानुवृत्तौ (क).

ज्ञानविषयत्वस्य जीवादावप्यभावात्। न च स्वात्मकज्ञानविषयत्वं जीवस्य सर्वदाऽस्त्येव, वृत्त्यात्मकज्ञानस्यैव कादाचित्कत्वादिति वाच्यम्—एवमपि प्रधानस्य निरुक्तनित्यत्वानुपपत्तेः। ध्वंसाप्रतियोगित्वे सतीत्यादिनित्यत्वनिर्वचनविरोधाच्च। ध्वंसाद्यप्रतियोगित्वस्यैव नित्यतारूपत्वे शशविषाणादावतिव्याप्तिः, तस्यापि ध्वंसाद्यभावात्। दुःखाश्रयान्तःकरणेन परस्परानुप्रवेशात्मकसंयोगवत्त्वं बन्धत्वम्। तादृशसंयोगध्वंसवत्त्वं च मुक्तत्वमित्यपि न युक्तम्। भवन्मते जीवानां विभुत्वेन मुक्तस्यान्तःकरणेन सह परस्परानुप्रवेशात्मकसंयोगस्याक्षततया बन्धत्वापत्तेर्दुर्वारत्वात्। चैत्रादेस्सञ्चारदशायामात्मन्येकैकप्रदेशेऽन्तःकरणसंयोगनाशेन प्रतिक्षणं बन्धमोक्षोपपत्तेर्दुर्वारत्वाच्च। सत्त्वाद्यात्मकत्वमचेतनस्य लक्षणमित्यपि न सत्। सत्त्वादिगुणानामप्रामाणिकत्वात्। सत्त्वाद्यात्मकप्रधानाभेदस्य जीवे सत्त्वेन सत्त्वाद्यात्मकत्वस्य तत्रातिव्याप्तेश्च। प्रधानजीवयोः परस्परानुप्रवेशेन कथंचिदभेदोत्पत्तेः, द्रव्यत्वेनाभेदसत्वाच्च प्रकृतेर्महान्, महतोऽहङ्कार इत्यादिसृष्टिक्रियावर्णनमपि न युक्तम्—प्रधानस्य महदादिसृष्टौ प्रयोजनाभावेन प्रवृत्त्यनुपपत्तेः। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायात्। यत्तु पुरुषस्य शब्दादिसाक्षात्काररूपभोगस्य मोक्षहेतुभूतप्रकृतिपुरुषविवेकज्ञानस्य च शरीरेन्द्रियादिकं विनाऽसम्भवात्। पुरुषस्य भोगमोक्षयोरुपपत्तये सृष्टौ प्रधानस्य प्रवृत्तिरिति तन्न—तथा सति सर्वेषामेकजातीयभोगस्यैकदाऽपवर्गस्य च प्रसङ्गात्। न च कर्मवैचित्र्याद्भोगवैचित्र्यमुपपद्यत इति वाच्यम्—जीवस्य निर्विशेषत्वेन कर्माश्रयत्वासम्भवात्। मोक्षस्य कर्मजन्यत्वाभावेन केषाञ्चिन्मोक्षः, केषाञ्चिन्नेति नियमानुपपत्तेः। किञ्चेदं प्रधानं निरंशं, सांशं वा महदाद्युपादानम्? आद्ये प्रधानस्य कृत्स्नत एव महद्रूपेण महतः कृत्स्नत एवाहङ्काररूपेण परिणामापत्त्या पृथिव्येकमात्रपरिशेषप्रसङ्गः। द्वितीयेऽपसिद्धान्तो जगत एककारणकत्वानुपपत्तिश्च। तत्तदंशानामेव महदादिभिन्नं भिन्नकार्यजनकत्वात्। एवं पञ्च महाभूतानि स्वापेक्षया सूक्ष्मभूतस्वगतगुणसजातीयगुणवद्द्रव्योपादानकानि कार्यत्वादिति तन्मात्रसाधकानुमानमयुक्तम्। तन्मात्रे व्यभिचारात्, तदुपादानस्याहङ्कारस्य स्वगतगुणसजातीयगुणवत्त्वाभावात्। एवं तन्मात्राणामभिमानवद्द्रव्योपादानकत्वसाधनमपि न युक्तम्। उपादानगुणस्योपादेयेऽनुवृत्तिदर्शनेन तन्मात्राणामप्यभिमानवत्त्वापत्त्या भूतानामपि तद्वत्त्वस्य दुर्वारता-

पत्तेः। सुखादेर्विषयधर्मत्वोपपादनमपि न युक्तम्। अहं सुखीतिवच्चन्दनं सुखीत्यादिप्रतीत्यापत्तेः। चेतनाचेतनविभागानुपपत्तेश्चेति। तस्मात्सामान्यैकान्तो न श्रेयान्।

विशेषैकान्तवादिनो बौद्धास्तु–सर्वे पदार्थाः सामान्यरहितविशेषात्मका एव। सत्सामान्योपादानकत्वस्य प्रधानोपादानकत्वस्य चाप्रामाणिकत्वात्, सामान्योपादानकत्व एव तदाश्रयत्वसम्भवात्। अस्माभिः प्रतीत्यसमुत्पादमङ्गीकृत्य विश्ववैचित्र्योपपादनात् प्रतीत्याऽन्योन्यहेतूकृत्य तां तां सामग्रीमाश्रित्य हेतु हेतुमद्भावेन यस्मिन् सङ्घातेभ्यः सङ्घाताः प्रभवन्ति प्रधानब्रह्मादिसामान्यकारणनिरपेक्षाः स प्रतीत्यसमुत्पादः। तस्य च द्वादशाङ्गानि हेतुफलभावेन व्यवस्थितानि। तथाहि—अविद्या, अविद्याप्रत्ययस्संस्कारः, संस्कारप्रत्ययं विज्ञानं, विज्ञानप्रत्ययं नामरूपं, नामरूपप्रत्ययं षडायतनं, षडायतनप्रत्ययः स्पर्शः, स्पर्शप्रत्यया वेदना, वेदनाप्रत्यया तृष्णा, तृष्णाप्रत्ययमुपादानं, उपादानप्रत्ययो भवः, भवप्रत्यया जातिः, जातिप्रत्ययं जरामरणमिति। तत्र क्षणिकनिरात्मकाशुचिदुःखरूपेषु भावेषु [1] स्थिरत्वसात्मकत्वशुचित्वसुखरूपत्वप्रकारकज्ञानमविद्या। संस्कारा रागादयः। ते त्रिविधाः—पुण्यात्मकाः, पापात्मकाः, उभयात्मकाश्चेति। शुभाचरणहेतू रागः पुण्यम्। अशुभाचरणहेतुर्द्वेषः पापं। मिश्राचरणहेतुभूतो रागउभयम्। निरुक्तसंस्कारे चाविद्यायाः कारणत्वं स्थिरत्वसुखत्वादिज्ञानाभावे कुत्रापि रागाद्यसम्भवात्। अविद्याप्रत्ययसंस्कार इत्यस्याविद्याहेतुकसंस्कार इत्यर्थत्वात्, प्रत्ययशब्दस्य कारणे परिभाषांगीकारात्। विज्ञानं षड्विधम्। पञ्चविधेन्द्रियजन्यप्रत्यक्षात्मकनिर्विकल्पकानि पञ्च, सविकल्पकं चेति। तादृशज्ञाने च रागादिर्हेतुः। कामिन्यादिविषयकरागवतश्चक्षुरादिव्यापारेऽपि घटादिप्रत्यक्षानुत्पत्त्या तद्विषयकज्ञाने तद्विषयकरागस्य कारणत्वात्। नामरूपं चतुर्विधं—रूपस्कन्ध, वेदनास्कन्ध, संज्ञास्कन्ध, संस्कारस्कन्धभेदात्। तत्र रूपस्कन्धः पञ्चेन्द्रियाणि, पञ्च तदर्थाः, अविज्ञप्तिश्चेत्येकादशधा। तत्राविज्ञप्तिः प्राणिनां शरीरोपादानभूतं शुभाशुभानुभवनरूपं कर्म। तस्याऽयोगिभिर्ज्ञातुमशक्यत्वादविज्ञप्तिरित्यन्वर्थसंज्ञा। तदर्थाः पृथिव्यादिभूतानि। भवन्ति भावयन्ति वा प्राणिनामुप-

---

[1] स्थिरात्मकत्व (ख).

योगमिति भूतानि । तत्राकाशं छिद्रम् । तच्चालोकतमःपरमाणुभ्यो-नान्यदिति न पृथक्परिगण्यते । तानि च पृथिवीधातुरित्यादिसंज्ञामपि भजन्ते, उत्पत्तिस्थानत्वात्, ताम्रादिधातुवत् । सुखानुभवदुःखानु-भवोभयानुभवभेदेन वेदना त्रिविधा । अर्थेषु पदानां योगवृत्तिज्ञानं संज्ञा । यथा रूपणाद्रूपम् । धारणाद्धातवः । अर्थक्रियायां घटनाद्घट इत्यादिरनेकप्रकारा । संस्कारोऽपि रागादिभेदादनेकधा । उक्तस्कन्ध-चतुष्टयरूपे नामरूपे विज्ञानस्कन्धः कारणं, विज्ञानाधीनसिद्धिकत्वादि-न्द्रियादीनाम् । विज्ञानस्य नामरूपशब्दवाच्यत्वाभावेऽपि स्कन्धशब्द-वाच्यत्वमस्त्येव । राशीभूतत्वरूप स्कन्धत्वस्य पञ्चानामविशेषात् । रूपं ह्येकादशात्मको राशिः । वेदना त्र्यात्मकः । संज्ञासंस्कारावनेकात्मकौ । विज्ञानं षडात्मकमिति । पञ्चेन्द्रियादयस्सास्रवा निरास्रवाश्चेति द्विविधाः । संसारहेतुभूतव्यापारवन्तस्सास्रवाः । तन्निरोधहेतुव्यापारवन्तो निरा-स्रवाः । तत्र सास्रवा दुःखशब्दवाच्याः । निरास्रवा मार्गशब्दवाच्याः । निरोधो द्विप्रकारः । प्रतिसङ्ख्यानिरोधोऽप्रतिसङ्ख्यानिरोधश्चेति । घटा-दिसन्ताननाशः प्रतिसङ्ख्यानिरोधः । प्रतिक्षणजायमानो घटादिनाशोऽ-प्रतिसङ्ख्यानिरोधः । चक्षुरादीन्द्रियाणि षडायतनानि । नामरूपस्य पृथिव्यादेरिन्द्रियेषु कारणत्वान्नामरूपप्रत्ययत्वम् । चक्षुषा रूपं पश्या-मीति विषयेन्द्रियविज्ञानानां समुदायः स्पर्शः । तादृशसमुदाये इन्द्रियं हेतुः । दुःखाद्यनुभवो वेदना । लोभस्तृष्णा । तृष्णाया वैपुल्यमुपादानम् । पुनः शरीरारम्भकं कर्म भवः । अपूर्वस्कन्धप्रादुर्भावो जातिः । जरामरणं प्रसिद्धम् । इत्थं भवचक्रं भ्रमतीति वदन्ति । तन्न—जगति विद्यमानानां कार्यकारणभावापन्नानां पर्यायाणामनन्तत्वेऽनाद्यविद्यादीनि द्वादशान्येव प्रतीत्यसमुत्पादेऽङ्गानीत्यस्यायुक्तत्वात् । न च मुमुक्षूणां ज्ञातव्यानि द्वादशाङ्गान्येव, तेषामेव मोक्षोपयोगित्वादिति वाच्यम्—मिथ्याज्ञान-रूपाविद्यावत् विपरीतश्रद्धानाचरणस्वरूपयोर्मिथ्यादर्शनचारित्रयोरपि संसारहेतुत्वेन हेयतया सम्यग्ज्ञानादेश्च मोक्षहेतुत्वेनोपादेयतया तेषामपि मुमुक्षुज्ञातव्यत्वात्, द्वादशेति नियमायोगात् । स्थिरत्वज्ञानमविद्येति न युक्तम् । जगति क्षणिकत्वस्य निरस्तत्वेन तज्ज्ञानस्यैवाविद्यात्वात् । तदभाववति तत्प्रकारकज्ञानत्वस्यैवाविद्यालक्षणत्वात् । रागादीनां पुण्यादिप्रकारतावर्तनमयुक्तम् । लोके शास्त्रे च सुखादिसाधनेष्वेव पुण्यादिप्रसिद्धिसत्त्वेऽपि रागादौ पुण्यादिव्यपदेशस्य कुत्राप्यभावात् । न

च रागादेः पुण्यजनकत्वात्तद्व्यपदेश इति वाच्यम्—विहितकर्मादीनामेव तज्जनकत्वेन रागादेस्तथात्वाभावात्। परम्परया तज्जनकत्वस्याविद्यादावपि सत्त्वेनाविद्यादेरपि तद्व्यपदेशप्रसङ्गात्। विज्ञानस्य षट्प्रकारत्वमयुक्तम्—निर्विकल्पकस्य प्रागेव निरासात्। विज्ञानप्रत्ययं नामरूपमित्यपि न युक्तम्—विज्ञानस्य रूपादिस्कन्धचतुष्टयात्मकनामरूपजन्यतायाः कथंचिद्युक्तत्वेऽपि स्कन्धचतुष्टयस्य विज्ञानजन्यताया अत्यन्तमप्रामाणिकत्वात्। किंच विज्ञानं नामरूपे उपादानं? निमित्तं वा? नाद्यः—विज्ञानं स्कन्धचतुष्टययोरत्यन्तविलक्षणत्वेन सुवर्णमृद्घटयोरिवोपादानोपादेयभावासम्भवात्। न द्वितीयः—अन्वयव्यतिरेकाभावेन सहकारित्वस्याप्यप्रामाणिकत्वात्। यत्तु शरीरहेतुभूतं कर्म विज्ञप्तिरित्युक्तं सा किं चिद्रूपा? अचिद्रूपा वा? आद्येऽपसिद्धान्तात्, द्वितीये इष्टापत्तेः, कार्मणशरीरस्य तथा नामान्तरकरणात्। नामरूपप्रत्ययं षडायतनमित्यप्ययुक्तम्—रूपस्कन्ध एव षडायतनस्यान्तर्भूतत्वेन पृथगभिधाने प्रयोजनाभावात्। यत्तु सजातीयविजातीयव्यावृत्ताः परस्परासम्बद्धा निरंशाः क्षणिका रूपादिपरमाणुरूपविशेषा एव तत्त्वम्। न च सामान्यस्य व्यावर्तकस्यानभ्युपगमात् कथं व्यावृत्तत्वमिति वाच्यम्—विशेषाणां सामान्येन व्यावृत्तत्वे सामान्यं केन व्यावर्त्यते? सामान्यान्तरेण चेदनवस्था। स्वतश्चेद्विशेषाणामेव स्वतो व्यावृत्तत्वं युक्तम्। तेषां परस्परासम्बन्धत्वं च तत्सम्बन्धस्य विचार्यमाणस्यासम्भवात्। किमेकदेशेनाणूनां सम्बन्धस्सर्वात्मना वा? आद्ये एकस्यैवाणोरुपर्यधस्ताच्चतुर्दिक्षु च षड्भिः परमाणुभिर्युगपत्सम्बन्धत्वात्परमाणोः [1]षडंशत्वापत्तिः। द्वितीयेऽपि पिण्डस्याणुपरिमाणादधिकपरिमाणानुपपत्तिः। सर्वात्मना सम्बन्धे एकस्मिन्नणावन्याणोस्तन्मायःपिण्डे जलस्येव सर्वात्मना लीनत्वात्। उक्तं च—

षट्केन युगपद्योगात्परमाणोः षडंशता।
सर्वात्मना तु सम्बन्धे पिण्डः स्यादणुमात्रकः ॥ इति ॥

तथाविधाणुरूपविशेषाश्च निर्विकल्पकप्रत्यक्षेण गृह्यन्ते। न च प्रत्यक्षस्य स्थिरस्थूलाकारावगाहित्वेनैवानुभवान्न तादृशाणुविषयकत्वं

---

1 षडङ्गत्वापत्तिः (ख). 2 अधीनत्वात् (क).

प्रत्यक्षस्येति वाच्यं—निर्विकल्पकानन्तरभाविविकल्प एव स्थिरस्थूलाकारभानात्। निर्विकल्पकसविकल्पकयोर्भेदाग्रहेण स्थिराद्यवगाहिज्ञानेऽपि विशदत्वारोपोपपत्तेरिति। तन्न—व्यावृत्तिकर्मत्वरूपव्यावृत्तत्व-व्यावृत्तिकरणत्वरूपव्यावर्तकत्वयो[1]रेकत्रासम्भवात्। अन्यथा छेदनकर्मभूत[2]काष्ठस्यैव तत्करणत्वापत्तेः। अंशभेदेनाकारभेदेन वा करणत्वकर्मत्वयो[3]रुपपादनसम्भवेऽपि निरंशे निराकारे परमाणौ तदुपपादनासम्भवात्। कृत्स्नैकदेशविकल्पानुपपत्त्या परमाणूनां परस्परसम्बन्धखण्डनमपि न युक्तं—न ह्यर्थानां कार्त्स्न्येनैकदेशेन वा सम्बन्धः स्याद्वादिभिरिष्यते—ताभ्यां जात्यन्तरस्य स्निग्धरूक्षतानिबन्धनस्य परमाणूनां सक्तुतोयादिवदभ्युपगमात्। सम्बन्धो ह्यर्थानां विश्लिष्टरूपपरित्यागेन संश्लिष्टरूपतया परिणामः, चित्रसंवेदननीलाद्याकारवत्। न हि चित्रज्ञानं नीलादिभिरेकदेशेन सर्वात्मना वा सम्बध्यते, प्रागुक्तरीत्या दोषप्रसङ्गात्। किंतु संश्लिष्टताकारेण परिणामरूप एव सम्बन्धः स्वीकर्तव्यः। स च सम्बन्धः क्वचिदर्थानां परस्परानुप्रवेशात्मको यथा सक्तुतोयादीनाम्। क्वचिच्चैकदेशसंश्लिष्टतारूपो यथाऽङ्गुल्यादीनाम्। निर्विकल्पकप्रत्यक्षेण तादृशाणुसिद्धिवर्णनमपि न युक्तं—भवदभिमतनिर्विकल्पकस्य पूर्वमेव निरस्तत्वात्। तस्माद्विशेषैकान्तोऽपि न साधीयान्।

अत्यन्तभिन्नसामान्यविशेषवादिनो नैयायिकास्तु—द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्तपदार्थाः। तत्र ज्ञेयत्वं पदार्थसामान्यस्य लक्षणं। ईश्वरज्ञानविषयतायाः सर्वत्र सत्त्वेनाव्याप्तिविरहात्। गुणवत्त्वं क्रियावत्त्वं वा द्रव्यस्य लक्षणं। घटादावाद्यक्षणावच्छेदेन गुणाभावेऽपि द्वितीयादिक्षणावच्छेदेन तत्सत्त्वान्नाव्याप्तिः। गुणवत्त्वं समवायेन बोध्यते न कालिकेन गुणवति गुणादौ [4]नातिव्याप्तिः। न चाकाशादिविभुद्रव्येषु क्रियाविरहादव्याप्तिरिति वाच्यं—क्रियासमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात्। तादृशद्रव्यत्वादिकमादाय विभुषु लक्षणोपपत्तेः। अत्र सत्ताभिन्नगुणत्वादिजातिमादाय गुणादावतिव्याप्तिवारणाय समानाधिकरणान्तं। क्रियासमानाधिकरणसत्तामादाय गुणादावतिव्याप्तिवारणाय सत्ताभिन्नेति। द्रव्यगुणान्यतरत्वमादाय गुणादौ तद्वारणाय जातीति। तानि द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव। तत्र गन्धवत्त्वं पृथिवीलक्षणं। वाय्वाद्यानीतपुष्परजोरूपपृथिवीगत-

---

[1] एकत्वासम्भवात् (क). [2] काष्ठस्येव (ख). [3] उपादान (ख). [4] नाव्याप्तिः (क)

गन्ध एव वाय्वादेरुपलभ्यते इति न तत्रातिव्याप्तिः। न च सुरभ्यसुरभिकपालारब्धघटेऽ[1]व्याप्तिः, तत्र परस्परविरोधेन कस्यापि गन्धस्यानुत्पत्तेरिति वाच्यं-गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात्। तादृशपृथिवीत्वजातेः सुरभ्यसुरभिकपालारब्धनिर्गन्धघटेऽपि सत्त्वात्। अत्र द्रव्यत्वव्याप्यजलत्वादिकमादाय जलादावतिव्याप्तिवारणाय समानाधिकरणान्तम्। गन्धसमानाधिकरणद्रव्यत्वमादाय जलादौ तद्वारणाय द्रव्यत्वव्याप्येति। जलपृथिव्यन्यतरत्वजलपृथिवीसंयोगादिकमादाय जलेऽतिव्याप्तिवारणाय जातिरिति। पृथिवी द्विविधा—नित्यानित्या च। नित्या परमाणुरूपा। द्व्यणुकादिरूपाऽनित्या। अनित्या त्रिविधा—शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनां। इन्द्रियं गन्धग्राहकं घ्राणं। विषयो मृत्पाषाणादिः। शीतस्पर्शवत्वं जलस्य लक्षणम्। पृथिव्यादिवारणाय शीतेति। तदपि द्विविधं—नित्यानित्यभेदात्। नित्यं परमाणुरूपम्। तद्भिन्नमनित्यम्। अनित्यमपि त्रिविधं—शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनम्। विषयः सरित्समुद्रादिः। उष्णस्पर्शवत्तेजः-तदपि पूर्ववदेव द्विविधम्। किंतु तत्र शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः। विषयो वह्न्यादिः। रूपरहितत्वे सति स्पर्शवत्वं वायोर्लक्षणम्। पृथिव्यादिवारणाय सत्यन्तम्। गगनादिवारणाय विशेष्यं। सोऽपि पूर्ववदेव द्विविधः। किंतु शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक्। विषयो व्यजनपवनादिः। शब्दत्वमाकाशस्य लक्षणं। तच्चैकं विभु नित्यं च। विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वं। नित्यत्वं प्रागभावा[2]प्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। ध्वंसवारणाय सत्यन्तम्। प्रागभाववारणाय विशेष्यम। अतीतादिव्यवहारहेतुत्वं कालस्य लक्षणम्। व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वेन घटोऽतीतकालवानिति, व्यवहारकालवानिति, व्यवहारे कालस्य हेतुत्वाल्लक्षणसङ्गतिः। दण्डीतिव्यवहारहेतुभूते दण्डेऽतिव्याप्तिवारणायातीतेति। स चैको विभुर्नित्यश्च। तस्यैकत्वेऽपि सूर्यपरिस्पन्दादिरूपोपाधीनां भेदात्तत्तदुपाधिविशिष्टस्य कालस्य क्षणादिव्यवहारविषयत्वमुपपद्यते। न च सूर्यक्रियायाः क्षणचतुष्टयस्थायित्वात्तद्विशिष्टस्य कालस्य कथं क्षणत्वमिति वाच्यं—स्वजन्यविभागप्रागभावविशिष्टा या क्रिया

---

[1] अतिव्याप्तिः (ख). [2] प्रातियोगित्वे (ख).

तद्विशिष्टमहाकालस्य क्षणत्वात्। क्रियाक्रियावतोर्विभागो, विभागात् पूर्वसंयोगनाश, उत्तरसंयोगोत्पत्तिः, क्रियानाश इत्यङ्गीकारेण स्वजन्यविभागप्रागभावविशिष्टक्रियाया एकक्षणमात्रस्थायित्वेन तद्विशिष्टकालस्य क्षणत्वे बाधकाभावात्। घटः प्राच्य इत्यादिव्यवहारहेतुर्दिक्। सा चैका विभुर्नित्या च। तस्या ऐक्येऽप्युपाधिभेदात्प्राच्यादिव्यवहारः। तत्रोदयगिरिसन्निहिता दिक् प्राची। अस्तगिरिसन्निहिता दिक् प्रतीची। सुमेरुसन्निहिता दिगुदीची। तद्व्यवहिता दिगवाची। ज्ञानाश्रय आत्मा। स विभुर्नित्यश्च। स द्विविधः—जीवेश्वरभेदात्। अनित्यज्ञानवान् जीवः नित्यज्ञानवानीश्वरः। जीवः प्रतिशरीरं भिन्नः। सुखादिसाक्षात्कारजनकत्वे सतीन्द्रियत्वं मनसो लक्षणम्। चक्षुरादिवारणाय सत्यन्तम्। आत्मवारणाय विशेष्यम्। तच्चानन्तं, परमाणुरूपं, नित्यं। द्रव्यकर्मभिन्नत्वे सति जातिमत्वं गुणसामान्यस्य लक्षणम्। द्रव्यकर्मवारणाय सत्यन्तम्। सामान्यादिवारणाय विशेष्यं। सामान्यादौ जात्यभावान्नातिव्याप्तिः। ते च गुणा रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसुखदुःखेच्छाद्वेषप्रयत्न—गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दा इति चतुर्विंशतिसङ्ख्याकाः। तत्र त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयगुणत्वं रूपस्य लक्षणम्। संयोगादिवारणाय सत्यन्तम्। धर्माधर्मवारणाय चक्षुरिन्द्रियजन्यप्रत्यक्षविषयेति। प्रभावारणाय गुणत्वनिवेशः। तच्च रूपं शुक्लनीलरक्तपीतहरितकपिशचित्रभेदात्सप्तविधम्। तच्च पृथिवीजलतेजोवृत्ति। तच्च सप्तविधमपि रूपं पृथिव्याम्। जलेऽभास्वरशुक्लम्। भास्वरशुक्लं तेजसि। रसनग्राह्यत्वे सति गुणत्वं रसस्य लक्षणम्। रसत्ववारणाय सत्यन्तम्। यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिरपि तदिन्द्रियग्राह्येति नियमात्। स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः। स च पृथिवीजलवृत्तिः। तत्र षड्विधोऽपि रसः पृथिव्याम्। जले तु मधुर एव। घ्राणग्राह्यो गुणो गन्धः। स द्विविधः—सौरभासौरभभेदात्, पृथिवीमात्रवृत्तिः। चक्षुरिन्द्रियाग्राह्यत्वे सति त्वगिन्द्रियग्राह्यगुणत्वं स्पर्शस्य लक्षणम्। संयोगादिवारणाय सत्यन्तम्। धर्माधर्मवारणाय त्वगिन्द्रियग्राह्येति। वायुवारणाय गुणत्व निवेशः। स त्रिविधः—शीतोष्णानुष्णाशीतभेदात्। स च पृथिव्यादिचतुष्टयवृत्तिः। तत्र शीतं जले। उष्णस्तेजसि। अनुष्णा-

शीतः पृथिवीवाय्वोः। रूपादिचतुष्टयं पृथिव्यां पाकजत्वादनित्यमेव। जलादौ पाकाभावान्नित्यगतं नित्यमनित्यगतमनित्यमिति। एको द्वावित्यादिव्यवहारहेतुत्वं सङ्ख्याया लक्षणम्। सा एकत्वादिपरार्ध्यपर्यन्ता बहुविधा नवद्रव्यवृत्तिः। तत्रैकत्वं नित्यगतं नित्यमनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव, अपेक्षाबुद्धिजन्यत्वात्। अणुर्महानित्यादिव्यवहारकारणं परिमाणम्। तच्चतुर्विधम्। अणुत्वमहत्त्वदीर्घत्वह्रस्वत्वभेदात् नवद्रव्यवृत्ति। घटः पटात् पृथगित्यादिव्यवहारकारणं पृथक्त्वं नवद्रव्यवृत्ति। संयुक्तव्यवहारहेतुस्संयोगो नवद्रव्यवृत्तिः। संयोगनाशहेतुत्वे सति गुणत्वं विभागस्य लक्षणम्। रूपादिवारणाय सत्यन्तम। क्रियावारणाय विशेष्यं। स च नवद्रव्यवृत्तिः। परापरव्यवहारकारणे परत्वापरत्वे। ते द्विविधे—दिक्कृते, कालकृते चेति। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्। सर्वव्यवहारहेतुत्वं ज्ञानस्य लक्षणं। तच्च ज्ञानं द्विविधं—स्मृतिरनुभवश्चेति। संस्कारमात्रजन्यं ज्ञानं स्मृतिः। तद्भिन्नं ज्ञानमनुभवः। स द्विविधः—यथार्थानुभवायथार्थानुभवभेदात्। तद्वति तत्प्रकारकं ज्ञानं यथार्थानुभवः। स चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। प्रत्यक्षादिलक्षणं तु पूर्वमेवोक्तम्। इतरेच्छानधीनेच्छाविषयत्वं सुखस्य लक्षणम्। सुखजनककान्तादावतिव्याप्तिवारणायेतरेच्छानधीनेति। कान्तादाविच्छायास्सुखेच्छाधीनत्वान्नातिव्याप्तिः। इतरद्वेषानधीनद्वेषविषयत्वं दुःखस्य लक्षणम्। दुःखजनकसर्पादावतिव्याप्तिवारणायेतरद्वेषानधीनेति। इच्छात्वजातिमत्त्वमिच्छाया लक्षणम्। अहमिच्छामीत्यनुभवसिद्धो जातिविशेषः। अहं द्वेष्मीत्याद्यनुभवसिद्धद्वेषत्वरूपजातिमत्त्वं द्वेषस्य लक्षणम्। प्रयत्नत्वरूपजातिमत्त्वं प्रयत्नस्य लक्षणम्। प्रयत्नस्त्रिविधः—प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्चेति। इष्टसाधनताज्ञानजन्यत्वे सति यत्नत्वं प्रवृत्तिलक्षणम्। निवृत्त्यादिवारणाय सत्यन्तम्। इष्टसाधनताज्ञानजन्येच्छावारणाय विशेष्यं। द्विष्टसाधनताज्ञानजन्ययत्नत्वं निवृत्तिलक्षणम्। प्रवृत्तिवारणाय जन्यान्तम्। प्राणसञ्चारहेतु यत्नत्वं जीवनयोनेर्लक्षणम्। आद्यपतनासमवायिकारणत्वं गुरुत्वस्य लक्षणम्। द्वितीयादिपतनासमवायिकारणे वेगेऽतिव्याप्तिवारणायाद्येति। पतनं चाधोदेशसंयोगानुकूलव्यापारः। आद्यस्यन्दनासमवायिकारणत्वं स्नेहस्य लक्षणम्। द्वितीयादिस्यन्दनासमवायिकारणे

वेगेऽतिव्याप्तिवारणायाद्येति। स्यन्दनं स्रवणम्। निम्नदेशसंयोगानुकूलजनिष्ठव्यापारः चूर्णादिपिण्डीभावहेतुगुणत्वं स्नेहस्य लक्षणम्। संस्कारत्वजातिमत्वं संस्कारस्य लक्षणम्। स त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति। तत्र वेगः पृथिव्यप्तेजोवायुमनस्सु मूर्तद्रव्येष्वभिघातविशेषाज्जायते। अनुभवजन्या स्मृतिहेतुर्भावना।' आकर्षणादिना स्थानान्तरं प्रापितस्य द्रव्यस्य पुनः स्वस्थानप्राप्तिहेतुभूतो गुणः स्थितिस्थापकः। विहितकर्मजन्यः स्वर्गादिहेतुर्गुणो धर्मः। निषिद्धकर्मजन्यो नरकादिहेतुर्गुणोऽधर्मः। श्रोत्रग्राह्यो गुणः शब्दः। शब्दत्ववारणाय गुण इति। कर्मत्वजातिमत्वं कर्मणां लक्षणम्। कर्मत्वजातिश्चलतीति प्रत्यक्षसिद्धा। तानि कर्माणि पञ्च। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात्। ऊर्ध्वदेशसंयोगहेतुकर्मत्वमुत्क्षेपणस्य लक्षणम्। अपक्षेपणादिवारणाय हेत्वन्तम्। पूर्वदेशसंयोगनाशवारणाय कर्मत्वनिवेशः। अधोदेशसंयोगहेतुत्वे सति कर्मत्वमपक्षेपणस्य लक्षणम्। उत्क्षेपणवारणाय सत्यन्तम्। पूर्वदेशसंयोगनाशवारणाय कर्मत्वनिवेशः। समीपदेशसंयोगहेतुकर्मत्वमाकुञ्चनत्वम्। दूरदेशसंयोगहेतु कर्मत्वं प्रसारणत्वम्। एतच्चतुष्टयभिन्नकर्मत्वं गमनत्वमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यस्य लक्षणम्। संयोगादिवारणाय सत्यन्तम्। गगनादिवारणाय विशेष्यम्। सामान्यं त्रिविधं—परमपरं परापरं चेति। तत्र परं सत्ता—सर्वजात्यपेक्षया व्यापकत्वात्। अपरं घटत्वादि—सर्वजात्यपेक्षया व्याप्यत्वात्। परापरं द्रव्यत्वादि। घटत्वाद्यपेक्षया व्यापकत्वात्सत्तापेक्षया व्याप्यत्वाच्च। विशेषाणां स्वतो व्यावृत्तत्वं लक्षणम्। तच्च स्वात्मकलिङ्गजन्येतरभेदानुमितिविषयत्वम्। न चैतद्विशेषो विशेषान्तराद्भिन्नः, तादात्म्येनैतद्विशेषादित्यनुमानेन स्वात्मकलिङ्गजन्येतरभेदानुमितिविषयत्वं, यथा विशेषस्य तथा एतद्घटस्तद्घटाद्भिन्नः, एतद्घटादिति स्वात्मकलिङ्गजन्येतरभेदानुमितिविषयत्वं घटस्यापीत्यतिव्याप्तिरिति वाच्यं—स्वभिन्नलिंगजन्येतरभेदानुमित्यविषयत्वस्य विवक्षितत्वात्। एतद्घटस्तद्घटाद्भिन्न एतद्घटत्वादित्यनुमानेनैतद्घटस्य स्वभिन्नलिंगजन्येतरभेदानुमितेरपि विषयत्वादतिव्याप्तिविरहात्। नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्। संयोगवारणाय सत्यन्तम्। आकाशादिवारणाय विशेष्यम्। स चावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च सम्बन्धो

भवति। स चैक एव समवायः। स्वसमवायसमवेतत्वान्यतर–सम्बन्धेन सत्ताविशिष्टान्यत्वमभावस्य लक्षणम्। द्रव्यगुणकर्मसु समवायसम्बन्धेन सामान्यविशेषसमवायेषु स्वसमवायिसमवेतत्वसम्बन्धेन सत्तायाः सत्त्वेनोक्तान्यतरसम्बन्धेन सत्ताविशिष्टान्यत्वमभावे वर्तत इति लक्षणसमन्वयः[१]। यद्यपि समवायस्य स्वरूपसम्बन्धेन द्रव्यादिषु सत्त्वेऽपि समवायसम्बन्धेनाभावात्स्वसमवायिसमवेतत्वं समवायस्य न सम्भवति। तथापि समवायीयस्वरूपसम्बन्धस्य समवायात्मकत्वात्समवायस्यापि द्रव्यादिसमवेतत्वं सम्भवतीति बोध्यम्। स चाभावश्चतुर्विधः—प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावभेदात्। तत्रोत्पत्तिशून्यत्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणम्। घटादिवारणाय सत्यन्तम्। गगनादिवारणाय विशेष्यम्। स च घटो भविष्यतीत्यादिप्रतीतिसिद्धः। भविष्यत्त्वस्य वर्तमानकालीनप्रागभावप्रतियोगित्व–रूपत्वात्। उत्पत्तिमत्वे सति ध्वंसाप्रतियोगित्वं प्रध्वंसाभावस्य लक्षणम्। गगनादिवारणाय सत्यन्तम्। घटादिवारणाय विशेष्यम्। स च घटो नष्ट इत्यादिप्रतीतिसिद्धः। नित्यत्वे सत्यन्योन्याभावभिन्नाभावत्वमत्यन्ताभावस्य लक्षणम्। ध्वंसादिवारणाय सत्यन्तम्। अन्योन्याभाववारणायान्योन्याभावभिन्नेति। गगनादिवारणायाभावत्वनिवेशः। स च घटो नास्तीत्यादिप्रतीतिसिद्धः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। प्रागभावादिवारणाय प्रतियोगिताकान्तम्। स च घटः पटाद्भिन्न इत्यादिप्रतीतिसिद्ध इति वदन्ति। अत्र ब्रूमः—यदुक्तं ज्ञेयत्वं पदार्थसामान्यस्य लक्षणं, ईश्वरज्ञानविषयतायाः सर्वत्र सत्त्वाल्लक्षणसमन्वय इति। तन्न—भवदभिमतेश्वरस्य निराकरणेन तद्ज्ञानविषयतामादाय लक्षणसमन्वयासंभवात्। न च सर्वं प्रमेयमित्यादिवाक्यजन्यं यदस्मदादिज्ञानं तद्विषयत्वमादाय सर्वत्र लक्षणसमन्वय इति वाच्यं—तथा सति शशशृङ्गं तीक्ष्णमित्यादिवाक्यजन्यज्ञानमादाय शशशृङ्गादावतिव्याप्तेर्दुर्वारत्वात्। "एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर" इत्यादिवाक्यादसद्विषयकबोधो जायत इत्यस्य प्रमेयरत्नमालान्यायमणिदीपिकयोर्ग्रन्थारम्भ एवोक्तत्वात्। किंच ज्ञेयत्वं हि ज्ञाननिरूपितविषयत्वम्। तत्र विषयत्वमात्रस्य लक्षणत्वसम्भवाज्ज्ञाननिरूपितत्वं व्यर्थम्। समवायेन गुणवत्वं द्रव्यसामान्यलक्षणमित्यपि न युक्तं—भवदभिमतसमवायस्यैकत्वेन गुणकर्मणोर्विध-

मानस्य सत्तासमवायस्य गुणसमवायादभिन्नत्वेन समवायेन गुणवत्त्वस्य गुणकर्मणोस्सत्त्वेनातिव्याप्तेः। न च गुणादौ [1]गुणसमवायसत्त्वेऽपि समवायेन गुणाभावान्नातिव्याप्तिरिति वाच्यं—यत्र यदीयसम्बन्धसत्त्वं तत्र तेन सम्बन्धेन तत्सत्त्वमिति नियमाद्धटसंयोगवति भूतले घटादिसत्त्ववत्, गुणसमवायवति गुणादौ समवायेन गुणवत्त्वस्यावश्यकत्वात्। चतुर्विंशतिर्गुणाः। पञ्च कर्माणि। सामान्यं द्विविधम्। रूपं रसात्पृथक्कर्मसामान्यात्पृथगित्यादिव्यवहारेण गुणादौ संख्यापृथक्त्वरूपगुणसत्त्वेन [2]गुणलक्षणातिव्याप्तेश्च। न च गुणाश्चतुर्विंशतिरित्यादावयमेकोयमेक इत्याद्यपेक्षाबुद्धिविशेषविषयत्वमेव चतुर्विंशतित्वम्, न तु संख्या, एवं रूपं रसात् पृथगित्यस्य रसाद्भिन्नमित्यर्थाद्भिद एव प्रतीयते, न तु गुण इति नातिव्याप्तिरिति वाच्यं—सर्वत्र संख्याव्यवहारे पृथगिति व्यवहारे चोक्तापेक्षाबुद्धिविशेषविषयत्वान्योन्याभावयोरेव विषयत्वसम्भवेन संख्यापृथक्त्वयोर्गुणत्वस्यैव लोपापत्तेः। यदपि क्रियावत्वं द्रव्यलक्षणमित्युक्त्वा तस्य क्रियासमानाधिकरणसत्ताभिन्नजातिमत्वे तात्पर्यमिति तात्पर्यवर्णनम्, तदपि न युक्तम्। क्रियासमानाधिकरणसत्ताभिन्नजातिमत्वेन द्रव्यत्वनिवेशमङ्गीकृत्य तस्य द्रव्यलक्षणत्वापेक्षया द्रव्यत्वजातिमत्वं लक्षणमित्यस्य युक्तत्वात्। एवं कतिपयद्रव्यवर्तिनोऽपि क्रियावत्वस्य द्रव्यलक्षणत्वे घटत्वादेरपि द्रव्यलक्षणत्वापत्तिः। घटत्वसमानाधिकरणसत्ताभिन्नजातिमत्वे तात्पर्याङ्गीकारेण घटादावव्याप्तिवारणस्य संशयकत्वात्। एवं पृथिव्यप्तेजोवाय्वाकाशेत्यादिना पृथिव्यप्तेजोवायूनां द्रव्यचतुष्कत्वाभिधानमनुचितम्। पृथिव्यप्तेजोवायूनामेकपुद्गलद्रव्यपरिणामत्वेनैकद्रव्यत्वात्। रूपरसगन्धस्पर्शवन्तः पुद्गला इति तल्लक्षणात्। न च यथा नवद्रव्याणां द्रव्यत्वेन साम्येऽपि द्रव्यावान्तरभेदवद्रूपरसगन्धस्पर्शवत्वरूपपुद्गलत्वेन साम्येऽपि द्रव्यावान्तरभेदत्वं दुर्निवारमिति वाच्यं—पृथिव्यप्तेजोवायूनां भिन्नद्रव्यत्वे उपादानोपादेयभावानुपपत्तेः। अस्ति चंद्रकान्ताज्जलस्य जलादेश्च मुक्ताफलादेरुत्पत्तिः। न च तत्र चन्द्रकान्ताद्यन्तर्गतजलादिद्रव्यादेव जलाद्युत्पत्तिर्न तु चन्द्रकान्तादिति वाच्यं—चन्द्रकान्तादौ जलादिसद्भावावेदकप्रमाणाभावात्, कार्यभूतद्रव्यस्योपादानांतर्वृत्तित्वकल्पने मृत्पिण्डा-

---

[1] गुणसत्त्व (ख). [2] गुणवत्व (क).

दावप्यन्तर्वृत्तिनो घटादेरेवाभिव्यक्तिरिति कल्पनाप्रसङ्गेन सांख्यमतप्रवेशापत्तेः। अतो जलपृथिव्यादीनामुपादानोपादेयभावदर्शनादेकद्रव्यत्वमावश्यकम्। एतेन गन्धवत्वं पृथिव्या लक्षणमित्यपि निरस्तम्। जलतेजोवायुष्वपि गन्धसत्त्वेनातिव्याप्तेः। सुरभि जलं, सुरभिर्धूपाग्निः, सुरभिर्वायुरिति प्रत्यक्षेण जलादयो गन्धवन्तः स्पर्शवत्वात्पृथिवीवदित्यनुमानेन च जलादौ गन्धसिद्धेः। उक्तं च न्यायकुमुदचन्द्रोदये—"पुद्गलद्रव्यत्वेन जलादावपि गन्धादिगुणचतुष्टयसद्भाव" इति। एवं शीतस्पर्शवत्वं जलस्य लक्षणमित्यपि न युक्तं—चन्द्रकान्तादावतिव्याप्तेः। उष्णस्पर्शवत्वं तेजस इत्यपि न युक्तं—तप्तशिलादावतिव्याप्तेः। तत्र शिलादावेवातपादिसम्बन्धादुष्णस्पर्शात्मकपर्यायोत्पत्तेः। रूपरहितत्वे सति स्पर्शवत्वं वायुलक्षणमित्यपि न। वायावप्यनुद्भूतरूपसत्त्वादन्यथा पुद्गलद्रव्यत्वानुपपत्तेः। वायू रूपवान्, स्पर्शवत्वादित्यनुमानेन वायावपि रूपसिद्धेः। यदपि पृथिव्यप्तेजोवायवो द्विविधाः—नित्यानित्यभेदात्। नित्याः परमाणुरूपाः। अनित्या द्व्यणुकादिरूपा" इति। तदयुक्तं—नित्यपरमाणुसद्भावे प्रमाणाभावात्—परमाणूनामतीन्द्रियत्वेन प्रत्यक्षासम्भवात्। न च द्व्यणुकादिकार्यं स्वपरिमाणादल्पपरिमाणवद्द्रव्यारब्धं कार्यत्वाद्घटादिवदित्यनुमानेन परमाणुस्सिध्यतीति वाच्यं—रूपादौ परिमाणाभावेन स्वपदेन रूपाद्युपादानासम्भवेन निरुक्तसाध्याभाववति तत्र व्यभिचारात्। द्रव्यत्वे सतीति विशेषणेऽपि भस्मतूलपिण्डादौ व्यभिचारात्। महतः पलालकूटात्प्रशिथिलावयवकार्पासपिण्डाच्च न्यूनपरिमाणस्य भस्मनो निविडावयवकार्पासपिण्डस्य चोत्पत्तिदर्शनात्। किंच कार्यद्रव्यत्वस्य कारणद्रव्यारब्धत्वेनैव व्याप्तिः। न तु न्यूनपरिमाणकारणारब्धत्वेन। कार्यं हि क्वचित्समपरिमाणादपि कारणाज्जायते। यथा मण्डादेर्दध्यादि। क्वचिन्न्यूनपरिमाणात्—यथा बीजाद्वृक्षः। क्वचिदधिकपरिमाणात्—यथा काष्ठकूटाद्भस्म। अतः परमाणूनामसिद्धेर्नित्याः पृथिव्यादयः परमाणुरूपा इति न युक्तम्। एतेन परमाणवो नित्याः, कारणशून्यत्वात् गगनादिवदित्यपि निरस्तं, आश्रयासिद्धेः। कथंचिन्नित्यत्वसाधने जैनमतप्रवेशापत्तेः। सर्वथा नित्यत्वसाधने च साध्याप्रसिद्धेः। सर्वथा नित्यस्य गगनस्य निराकरिष्यमाणतया दृष्टान्तासिद्धेः। स्थूलावयविद्रव्यनाशात्सूक्ष्मावयवोत्पत्तेः प्रत्यक्षादिसिद्धत्वेन परमाणोर्द्व्यणुकनाशकारणकत्वाव-

श्यकत्वेन कारणशून्यत्वरूपहेतोरसिद्धेश्च । न चावयवद्वयसंयोगनाशादवयवानां विभागः, अवयविनाशश्च जायते; तेन प्रत्येकमवयवानां स्फुटं प्रतीतिमात्रं न तूत्पत्तिरिति वाच्यं—उक्तरीत्या परमाणूनामहेतुकत्वोपपादने द्व्यणुकादिस्कन्धस्याप्यहेतुत्वप्रसङ्गात्। तत्रापि कुलालादिव्यापारेण कपालादिसंयोग एव जायते। न तु घटादिरूपस्कन्ध इति वक्तुं शक्यत्वात्। परमाणवः स्कन्धनाशपूर्वकाः, तदन्वयव्यतिरेकानुविधायित्वात् । घटनाशान्वयव्यतिरेकानुविधायिकपालवत्। न च स्वतन्त्रपरमाणुषु स्कन्धनाशमन्तरेणापि सद्भावप्रतीतेस्तेपूक्तहेतोर्भागासिद्धिर्बाधश्चेति वाच्यं—स्वतन्त्रपरमाणूनामेवासिद्धेः। विवादापन्नाः परमाणवः स्कन्धनाशपूर्वकाः, परमाणुत्वात्, द्व्यणुकनाशपूर्वकपरमाणुवदित्यनुमानेन स्वतन्त्रपरमाणूनां निरस्तत्वाच्च। न च पटोत्तरकालभाविनां तन्तूनां पटनाशपूर्वकत्वेऽपि पटपूर्वकालभाविनां तेषां पटनाशपूर्वकत्वाभाववत्, केषांचित्परमाणूनां द्व्यणुकनाश[1]पूर्वकत्वाभावसम्भव इति वाच्यं—पटपूर्वकालभाविनामपि तन्तूनां प्रवेणीनाशपूर्वकत्वेन स्कन्धनाशपूर्वकत्वाऽविघातात्। न च परमाणूनामेवासिद्धत्वात्तत्र स्कन्धनाशपूर्वकत्वानुमानं न युज्यते, आश्रयासिद्धेरिति वाच्यं—भवदुक्तानुमानेनैव परमाणूनामसिद्धेरुक्तत्वात्। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं, परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवदित्यनुमानेन महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यविश्रान्त्याश्रयतया परमाणूनां सिद्धौ बाधकाभावात्। तस्मान्नित्याः परमाणव इत्ययुक्तम्। अनित्या द्व्यणुकादिरूपावयविन इत्यपि न युक्तं—अवयविद्रव्यस्य वृत्तिविकल्पेनानुपपन्नत्वात् । द्व्यणुकादिरूपमवयविद्रव्यं परमाण्वादावेकदेशेन वर्तते? सर्वात्मना वा? आद्ये तथाविधैकदेशेऽपि वृत्तिविकल्पानतिवृत्त्याऽनवस्था। द्वितीये द्व्यणुकादेरेकस्मिन्परमाणौ सर्वात्मना सत्त्वेन परमाण्वन्तरे सत्त्वानुपपत्तिरिति । यत्तु शब्दवत्त्वमाकाशस्य लक्षणं तच्चैकं विभु नित्यं चेत्युक्तम् । तन्न—शब्दस्य पुद्गलद्रव्यपरिणामत्वेनाकाशतद्वृत्ताभावनासम्भवात्। भवदभिमताकाशे प्रमाणाभावाच्च । न च शब्दः किंचिद्द्रव्याश्रितो गुणत्वाद्रूपादिवदित्यनुमानेन शब्दाश्रयतया

[1] पूर्वकत्वासम्भव (ख).

आकाशं सिध्यतीति वाच्यं—शब्दस्य पुद्गलद्रव्यपरिणामत्वेन तदाश्रितत्व-मादाय सिद्धसाधनात् । नित्यविभुद्रव्याश्रितत्वसाधने रसगन्धादौ व्यभिचारो रूपादिवदिति दृष्टान्ते साध्यवैकल्यं च । किंच शब्दस्य द्रव्यत्वाभ्युपगमाद्गुणत्वादिति हेतोः स्वरूपासिद्धिश्च । अथ शब्दो गुणश्चक्षुर्ग्रहणायोग्यत्वे सति बहिरिन्द्रियग्राह्यजातिमत्वात् सुखादि-वदित्यनुमानाद्गुणत्वं सिध्यति। घटादौ व्यभिचारवारणाय सत्यन्तं। कालादौ व्यभिचारवारणाय विशेष्यं । चक्षुर्ग्रहणायोग्यत्वे सति बहि-रिन्द्रियग्राह्यत्वादित्युक्ते शब्दत्वे व्यभिचारः । अतो जातिमत्वादिति। तथा च शब्दस्य गुणत्वसिद्धेर्नासिद्धिरिति[1] चेन्न—गुणत्वाभाववति वायावप्युक्तहेतुसत्त्वेन व्यभिचारात् । वायोस्त्वगिन्द्रियजन्यप्रत्यक्ष-विषयत्वस्य नवीनैः सिद्धान्तितत्वात्। शब्दो द्रव्यं गुणवत्वात् क्रिया-वत्वाद्घटादिवदित्यनुमानबाधितत्वेन भवदनुमानेन [2] गुणत्वासिद्धेश्च । शब्दस्य [3] गुणवत्वं च स्पर्शपरिमाणसङ्ख्यासंयोगाश्रयत्वादेव सिद्धम्। न च शब्दस्य स्पर्शवत्वमसिद्धम्। शब्दः स्पर्शवान् स्वसम्बन्धादर्था[4]-न्तराभिचलनहेतुत्वात् वाय्वादिवदित्यनुमानेन स्पर्शवत्वसिद्धेः। दृश्यते हि [5] शतघ्न्यादिशब्दे निःसृते सौधादिचलनं । न च तत्र शब्दसह-चरितवायुसम्बन्धादेव सौधादिचलनं; न तु शब्दसम्बन्धादित्युक्तहेतुर-सिद्ध इति वाच्यं—चलने शब्दसम्बन्धान्वयव्यतिरेकानुविधानप्रतीत्या शब्दसम्बन्धहेतुकत्वावश्यकत्वात् । अन्यथा घटादावपि दण्डादिहेतु-कत्वासिद्धिप्रसंगात्। न च शब्दस्य गुणत्वेन स्पर्शरहितत्वात् तत्स-म्बन्धस्य चलनहेतुत्वाऽसम्भवाद्वायुसम्बन्धस्यैव तद्धेतुत्वं युक्तमिति वाच्यं—तथा सति चक्रकप्रसंगात् । शब्दस्य गुणत्वसिद्धौ द्रव्यत्वा-सिद्धिः प्रयोजिका। द्रव्यत्वासिद्धौ स्वसम्बन्धादर्थान्तरे चलनहेतुत्वा-दिति [6] हेतुत्वसिद्धिः प्रयोजिका । तथाविधहेत्वसिद्धौ च गुणत्वं प्रयोजकमिति। तथा शब्दः स्पर्शवान्, स्पर्शवता द्रव्येण निरुध्यमान-त्वात्; पाषाणादिना निरुध्यमानजलप्रवाहवत् । निरुध्यते च शब्दः स्पर्शवद्भिः प्रतिवातभित्त्यादिभिरित्यनुमानेनापि स्पर्शवत्वसिद्धिः। अयमल्पः, अयं महान्, अयमेको वर्णः, इमौ द्वौ वर्णौ, अयं संयुक्तो वर्ण

---

[1] न सिद्धिरिति (क). [2] द्रव्यगुणत्वासिद्धेश्च (क). [3] गुणवत्वाच्च (ख). [4] अर्था-न्तरे चलनहेतुत्वात् (क). [5] शतघन्यादि (क). [6] हेत्वसिद्धिः (ख).

इत्यादिप्रतीत्या शब्दे परिमाणसङ्ख्यासंयोगासिद्धिः। शब्दः संयोगाश्रयो वाय्वादिनाऽऽनीयमानत्वात्पांस्वादिवदित्यनुमानेनापि संयोगसिद्धिः। न च वाय्वानीयमाने गन्धे संयोगाश्रयत्वाभावाद्व्यभिचार इति वाच्यं—तत्र गन्धाश्रयसुरभिभागानामेव द्रव्याणां वायुनाऽऽनीयमानत्वात्। न चात्रापि शब्दाश्रयद्रव्यानयनमिति वक्तुं युक्तं—शब्दाश्रयस्य गगनस्य विभुत्वेना[1]नयनायोग्यत्वात्। एवं च शब्दस्य क्रियावत्त्वमपि सिध्यति। शब्दः क्रियावान्, पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगवत्वात्, बाणादिवदित्यनुमानात्। क्रियाशून्ये उत्तरदेशसंयोगाश्रये गगने व्यभिचारवारणाय विभागपूर्वकेति। शब्दे उत्तरदेशसंयोगाभावे भेरीदेशे जातस्य तस्य श्रोत्रासन्निकर्षात्प्रत्यक्षानुपपत्तेः शब्दानयनकल्पनावश्यकत्वात्। न च गगने भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तं वीचीतरंगन्यायेन शब्दधारा जायते, न तु शब्दो वायुनाऽऽनीयत इति वाच्यं—तथा सत्यनन्तशब्दकल्पनागौरवप्रसंगात्। देवदत्तमुखोद्गतं शब्दं शृणोमीति प्रतीतेर्भ्रमत्वापत्तेश्च। तत्र वीचीतरंगन्यायेन श्रोत्रदेशे जातस्य शब्दस्य श्रवणेऽपि मुखोद्गतशब्दस्याश्रवणात्। प्राच्यं शब्दं शृणोमि, प्रतीच्यं शब्दं शृणोमीत्यादिप्रतीत्यनुपपत्तिश्च। तत्तद्देशजातशब्दानामग्रहणात्। अतः शब्दस्य द्रव्यत्वेन गुणत्वाभावाद्गुणत्वेऽपि तदाश्रयतया पुद्गलस्यैव सिद्धेर्नाकाशसिद्धिः। न चाकाशस्य जैनैरपि स्वीकारात्तन्निराकरणेऽपसिद्धान्तप्रसंग इति वाच्यम्—नैयायिकपरिकल्पितस्य सर्वथा नित्यनिरंश स्वभावस्यैवाकाशस्यास्माभिः प्रतिक्षेपात्। कथंचिन्नित्यस्य सांशस्या काशस्यांगीकारात्। ननु तादृशाकाशसद्भावे किं मानमिति चेत् युगपन्निखिलपदार्थावगाहः साधारणकारणजन्यो युगपन्निखिलावगाहत्वात् एकसरस्सलिलान्तःप्रविष्टमत्स्यावगाहवदित्यनुमानस्यैव निखिलवस्त्ववगाहनाधारत्वेनाऽऽकाशसाधकत्वात्। न चालोकतमसोरेवाशेषवस्त्ववगाहनाधारतया ताभ्यां सिद्धसाधनमिति वाच्यम्—आलोकतमसोरपि सर्वान्तर्गतत्वेन तदवगाहनाधारत्वस्य तयोरसम्भवात्। न चाकाशस्य कल्पनेऽपि स्वावगाहनाधारत्वमाकाशस्य न सम्भवति, स्वस्यापि स्वावगाहनाधारत्वकल्पने च निखिलपदार्थानामेव तथात्वसम्भवादाकाशकल्पनं व्यर्थमिति वाच्यम्—आका-

[1] आनयनायोग्यत्वाभावात् (ख).

शस्य विभुत्वेनान्यत्रावस्थानासम्भवेन स्वाधारत्वोपपत्तेः । तदतिरिक्तपदार्थानां चाल्पपरिमाणत्वेन स्वाधारत्वायोगात्तदवगाहनाधारतयाऽऽकाशावश्यकत्वात् । न चैवं दिक्कालात्मनामाकाशेऽवगाहो न स्यात्तेषां विभुत्वादिति वाच्यं—दिग्द्रव्यस्यैवाप्रामाणिकत्वात् । कालात्मनोः प्रामाणिकत्वेऽपि तयोर्विभुत्वस्य निराकरिष्यमाणत्वादिति यदप्यतीतादिव्यवहारहेतुत्वं कालस्य लक्षणमित्यादि, तदपि न—कालस्यैकत्वे घटोऽतीतकालवान्, वर्तमानकालवान्, भविष्यत्कालवानित्यादिविलक्षणव्यवहारजनकत्वानुपपत्तेरुक्तलक्षणस्यासम्भवग्रस्तत्वात् । न च कालस्यैकत्वेऽपि प्रकृतशब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगिक्रियाविशिष्टत्वेनातीतव्यवहारविषयत्वं, प्रकृतशब्दाधिकरणत्वेन वर्तमान व्यवहारविषयत्वं, प्रकृतशब्दध्वंसवत्वेन भविष्यद्व्यवहारविषयत्वमङ्गीक्रियते; विशेष्यस्यैक्येऽपि विशेषणभेदाद्व्यवहारभेदोपपत्तिः, एकस्यैव पुरुषस्य पचनयाचनादिक्रियाभेदेन पाचक याचक इति विलक्षणव्यवहारदर्शनादिति वाच्यम्—एवमपि वर्तमानकालोऽयं, नातीतकाल इति भेदव्यवहारानुपपत्तेः । उदाहृतस्थलेऽयं याचको न पाचक इति व्यवहारविरहात्, कालस्यैक्यासम्भवात् । एवं चिरक्षिप्रयौगपद्यघटिकामुहूर्तदिनपक्षमासादिव्यवहारभेदानुपपत्तिरपि बोध्या । एवं चायं कालोऽणुरूपः प्रत्याकाशप्रदेशं विभिन्नोऽभ्युपगन्तव्यः, विभोरेकस्य स्वीकारे कुरुक्षेत्रलङ्काकाशप्रदेशयोर्दिवसादिभेदानुपपत्तेरित्यन्यत्र विस्तरः । यदपि घटः प्राच्य इत्यादिव्यवहारहेतुर्दिगित्यादि तदपि न दिशो निरंशैकद्रव्यत्वाङ्गीकारे घटः प्राच्यः, घटः प्रतीच्य इत्यादिविलक्षणव्यवहारजनकत्वानुपपत्तेः । न च चैत्रापेक्षयेयं प्राचीत्यस्य चैत्रनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवन्मूर्तावच्छिन्ना दिगित्यर्थात्, चैत्रापेक्षयेयं प्रतीचीत्यत्र चैत्रनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽधिकतरोदयगिरिसंयुक्तसंयोगवन्मूर्तावच्छिन्ना दिगित्यर्थादुपाधिभेदेन विभिन्नव्यवहारजनकत्वोपपत्तिः, मूर्तं च क्रियावद्द्रव्यमिति वाच्यम्—एवमपीयं प्राची न प्रतीचीति व्यवहारानुपपत्तेः । तत्तदुपाध्यवच्छिन्नाकाशप्रदेशैरेव प्राच्यादिव्यवहारनिर्वाहेऽतिरिक्तदिग्द्रव्यकल्पने गौरवात् । आकाशप्रदेशानां भेदेनेयं प्राची न प्रतीच्यादिव्यवहारनिर्वाहात् । तस्माद्दिग्द्रव्यं नातिरिक्तम् । यत्तु ज्ञानाश्रय आत्मा, स विभुर्नित्यश्चेति । तन्न—आत्मनो विभुत्वे मानाभावात् ।

ननु आत्मा विभुः, अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वादाकाशवदित्यनुमानमेवात्मनो विभुत्वे मानम्। न च हेतौ विशेषणासिद्धिः। आत्माऽणुपरिमाणानधिकरणं, प्रत्यक्षविषयत्वाद्घटादिवदित्यनुमानेन विशेषणांशसिद्धेः। न च विशेष्यासिद्धिः। आत्मा नित्यः, स्पर्शशून्यद्रव्यत्वात्, क्षणिकविशेषगुणवत्वाद्वा, आकाशवदित्यनुमानेन स्पर्शशून्यस्य क्षणिकशब्दाश्रयस्या[1]काशस्येव क्षणिकज्ञानाश्रयस्यात्मनोऽपि नित्यत्वसिद्धेरिति चेन्न—अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वादित्यत्र नित्यत्वं यदि सर्वथा विवक्षितं तदा हेत्वप्रसिद्धिः, सर्वथा नित्यत्वस्य काप्यसिद्धत्वात्। यदि कथंचित्तदा घटादौ व्यभिचारः। घटादेरपि द्रव्यरूपेण नित्यत्वान्निरुक्तहेतुमति तत्र विभुत्वरूपसाध्याभावात्। अत उक्तानुमानेन विभुत्वासिद्धेरणुत्वे प्रत्यक्षानुपपत्तेर्देहसमपरिमाणत्वरूपमध्यमपरिमाणत्वमेव युक्तमिति। यदपि सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम्। तच्चानन्तं परमाणुरूपं नित्यमिति। तन्न—मनसः पौद्गलिकत्वेनातिरिक्तद्रव्यत्वासिद्धेः। मनः पौद्गलिकमिन्द्रियत्वाच्चक्षुरादिवदित्यनुमानेन तस्य पौद्गलिकत्वसिद्धेः। न च चक्षुरादीनां प्रतिनियतरूपादिग्राहकतया [2]प्रतिनियतभूतान्तर्भावस्य युक्तत्वेऽपि मनसः [3]कस्मिन् भूतेऽन्तर्भावो विनिगमनविरहादिति वाच्यम्—पृथिव्यादिद्रव्यचातुर्विध्यस्यैव निरस्तत्वात्। पृथिव्यादिभेदाङ्गीकारेऽपि प्रतिनियतरूपादिग्राहकस्य प्रतिनियतभूतकार्यतावत्सकलरूपादिग्राहकस्य मनसः [4]सकलभूतकार्यतया युक्तत्वात्। किं च मनसः सुखादिसाक्षात्कार ज़नकत्वं हि संयुक्तसमवायरूपसन्निकर्षद्वारा भवद्भिरिष्यते। भवन्मते आत्मनां विभुत्वेनान्यदीयमनसाप्यन्यात्मगतसुखादिसाक्षात्कारापत्तिः। न चान्यात्ममनस्संयोगव्यावृत्तं वैजात्यं कल्पयित्वा विजातीयात्ममनस्संयोगत्वेन हेतुतास्वीकारान्न तदापत्तिरिति वाच्यं—तथाविधवैजात्ये मानाभावाद्गौरवाच्च। भवदभिमतात्ममनसोर्द्वयोरपि निरंशत्वेनैकदेशेन कार्त्स्न्येन वा संयोगासम्भवाच्चेति। एवं रूपरसगन्धस्पर्शेत्यादीनां चतुर्विंशतित्ववर्णनमपि न युक्तम्। शौर्यौदार्याद्यनेकगुणानां लोकसिद्धत्वात्। तत्र रूपस्य पृथिवीजलतेजोवृत्तित्वं रसस्य पृथिवीजलवृत्तित्वं, गन्धस्य पृथिवीवृत्तित्वं, स्पर्शस्य पृथिव्यादिचतुष्टयवृत्तित्वमिति नियमोपपादन-

---

1 आकाशस्यैव (ख). 2 प्रतीतिनियत (क). 3 अस्मिन् (ख). 4 सकलभूतकार्यताया.

मपि न युक्तम् । रूपादिचतुष्टयस्यापि पुद्गलद्रव्यगुणत्वेन स्पर्शवत्सर्वत्रावस्थानस्य युक्तत्वात्प्रतिनियतव्यवस्थानुपपत्तेः । सङ्ख्यायास्तु गुणत्वमेव न युक्तम् । गुणादावपि सत्त्वात्—चतुर्विंशतिर्गुणाः, पञ्च कर्माणीत्यादिव्यवहारात् । द्वित्वादेरपेक्षाबुद्धिजन्यत्ववर्णनमपि न युक्तम् । एकत्ववद्वित्वादेरपि पदार्थेषु स्वभावसिद्धत्वात् । द्वित्वादिव्यवहार एवापेक्षाबुद्धेः कारणत्वात् । यथैव स्वकारणकलापात् स्थूलत्वादिधर्मोपेतेषु बदरादिषूत्पन्नेष्विदमस्मात् स्थूलमिदमस्मात्सूक्ष्ममित्यादिव्यवहार एवापेक्षाबुद्धिजन्यस्तद्वत् । ज्ञानमात्रेणार्थोत्पत्त्यङ्गीकारे सर्वस्याप्यभिप्रेतार्थसिद्धिप्रसङ्गात् । एवमपेक्षादिबुद्धेर्द्वित्वादिहेतुत्वे कयाचिदपेक्षाबुद्ध्या द्वित्वम्, कयाचिद्बहुत्वमिति नियमानुपपत्तिः । न च द्रव्यद्वयविषयतया तद्बुद्ध्या द्वित्वं, द्रव्यत्रयविषयिण्या बहुत्वमिति स्वीकारान्नानुपपत्तिरिति वाच्यं—द्वित्वादिसङ्ख्योत्पत्तेः प्राग्द्रव्येषु द्वित्वस्य बहुत्वस्य वाऽसम्भवात् । एवं परिमाणाख्यगुणवर्णनमपि न सत्, वस्तुसंस्थानव्यतिरिक्तस्य तस्यासंभवात् । अन्यथा त्र्यश्रत्वचतुरश्रत्ववर्तुलत्वादेरपि तथात्वप्रसङ्गेन परिमाणचातुर्विध्यानुपपत्तेः । यदपि पृथग्व्यवहारकारणं पृथक्त्वमिति, तदपि न—तथा सत्यपृथग्व्यवहारकारणस्यापृथक्त्वस्यापि गुणान्तरत्वापत्तेः । ननु घटः स्वस्मादपृथगिति व्यवहारविषयो भेद एव न गुणान्तरमिति चेत्पृथक्त्वव्यवहारविषयोऽपि भेद एव न गुणान्तरमित्यस्य तुल्यत्वात् । संयोगोऽपि नैरन्तर्यावस्थितपदार्थान्तरव्यतिरिक्तो नानुभूयते । नैरन्तर्येण परिणतानां पदार्थानामेव संयुक्तव्यवहारहेतुत्वात् । नैरन्तर्यरूपसंयोगस्य च गुणत्वे सामीप्यदूरत्वादेरपि गुणान्तरत्वप्रसङ्गात् । विभागोऽपि नैरन्तर्याभावमात्रं, न गुणः । भवदभिमतविभागशून्ययोरपि सह्यविन्ध्ययोर्विभक्तप्रत्ययोत्पत्तिदर्शनात् । न हि तत्र भवदभिमतविभागसम्भवः—संयुक्तार्थेष्वेव संयोगनाशे विभागस्य भवद्भिरुक्तत्वात् । परापरत्वे अपि न गुणौ, बहुकालवत्वन्यूनकालवत्वदूरदेशस्थत्वसमीपदेशस्थत्वानामेव परापरप्रत्ययविषयतया गुणत्वायोगात् । अन्यथा कालकृतस्य दिक्कृतस्य च मध्यव्यवहारदर्शनेन मध्यत्वस्यापि गुणान्तरत्वप्रसङ्गात् । एवं गुरुत्वमपि न गुणः । तत्सद्भावे मानाभावात् । न च पतनरूपकार्येण तत्कारणभूतं गुरुत्वमनुमीयत इति वाच्यं—पतनरूपकार्येण तज्जनकतावच्छेदकशक्तेरेवानुमानेन तदतिरिक्तगुणासिद्धेः । अन्यथा गुरुत्ववल्लघुत्वस्यापि गुणत्वप्रसङ्गात् । न च गुरुत्वाभाव एव

लघुत्वमिति वाच्यं—विनिगमनविरहेण लघुत्वाभाव एव गुरुत्वमित्यपि वक्तुं शक्यत्वात्। किंच गुरुत्वस्य गुणत्वे कारणगुणात् कार्ये गुणारम्भदर्शनेन तन्तुगतेन दशपलपरिमितगुरुत्वेन पटे गुरुत्वारम्भे दशपलतन्त्वारब्धपटे तदधिकगुरुत्वोपलम्भप्रसङ्गः। तथा द्रवत्वमपि स्यन्दनजनकतावच्छेदकशक्तिविशेष एव न गुणः। तच्च पृथिवीजलतेजोवृत्तीत्यपि न युक्तम्। सुवर्णस्य तैजसत्वे प्रमाणाभावात्। तैजसत्वस्वीकारेऽपि तत्संयुक्तपार्थिवभाग एव द्रवत्वस्य युक्तत्वात्—पीतं घृतमिति प्रतीत्या पृथिव्यामेव द्रवत्वप्रतीतेः, तेजसि पीतरूपाभावात्। एतेन स्नेहस्यापि गुणत्वं निरस्तम्। चूर्णादिपिण्डीभावजनकतावच्छेदकशक्तेरेव तथात्वात्। यत्तु संस्कारस्त्रिविध इत्युक्तं, तन्न—सन्ततक्रियाजनकतावच्छेदकशक्त्यतिरिक्तस्य वेगाख्यगुणस्याप्रामाणिकत्वात्। न चैवं वेगेन गच्छतीति प्रतीत्यनुपपत्तिरिति वाच्यं—तादृशप्रतीतेः सातत्येन गच्छतीति प्रतीतिसमशीलतया वेगेनेत्यस्य सातत्येनेत्यर्थात्। अन्यथा सातत्यस्यापि गुणान्तरत्वप्रसङ्गात्। वेगेन शास्त्रं जानाति, वेगेन पाथिकाः पच्यन्त इत्यादावपि वेगाख्यगुणापत्तेः। भावनाख्यसंस्कारोप्यात्मनिष्ठस्मरणजनकतावच्छेदकशक्त्यपेक्षया नातिरिक्तः। एतेन स्थितिस्थापकस्यापि गुणत्वं निराकृतम्। तस्यापि यथावस्थितवस्तुस्थितिजनकतावच्छेदकशक्तिरूपत्वात्। धर्माधर्मौ तु न गुणौ, तयोः पौद्गलिकत्वस्य पूर्वमेवोक्तत्वात्। शब्दोऽपि पौद्गलिक इत्युक्तः। तन्न गुणपदार्थः परपरिकल्पितो विचार्यमाणो घटते। यदपि कर्मत्वजातिमत्वं कर्मणां लक्षणम्। तानि च कर्माणि पञ्चोत्क्षेपणादि, तदपि न—देशान्तरसंयोगहेतुपरिस्पन्दात्मकपरिणामो द्रव्यस्य कर्मेत्येतावतैव पर्याप्तत्वेन तत्पञ्चप्रकारतावर्णनस्यायुक्तत्वात्। अन्यथा भ्रमणरेचनोर्ध्वज्वलनतिर्यग्गमनानामपि भेदेनोत्कीर्तनप्रसङ्गात्। तेषां गमनेऽन्तर्भावे उत्क्षेपणादीनामपि तत्रान्तर्भावापत्तेः। उत्क्षेपणादिदशायामप्यूर्ध्वं गच्छत्यधो गच्छतीत्यादिप्रतीत्यविशेषादिति। यदपि नित्यत्वे सत्यनेकसमवेतत्वं सामान्यस्य लक्षणमित्यादि तदपि न—द्रव्यत्वादिसामान्यस्यानेकव्यक्तिगतस्यैकस्य स्वीकारेऽनेकस्तंभोपरि निक्षिप्तैकवंशादिवद्व्यक्त्यन्तरालेऽपि प्रतीत्यापत्तेः। न च द्रव्यत्वादिप्रत्यक्षे चक्षुस्संयुक्तसमवायस्य कारणत्वात् स्वसमवायिसमवेतत्व सम्बन्धेन रूपस्य कारणत्वाच्च व्यक्त्यन्तराले तयोरभावान्न तत्र जातिप्रत्यक्षापत्तिरिति वाच्यं—जातौ व्यक्त्यवच्छेदेन संयुक्तसमवायादि—

सत्त्वेन [1] तदवच्छेदेन प्रत्यक्षवत्तथाविधसन्निकर्षबलादेवाऽन्तरालेऽपि प्रत्यक्षापत्तेर्दुर्वारत्वात्। न च तदवच्छेदेन जातिप्रत्यक्षं प्रति तदवच्छेदेन सन्निकर्षस्य कारणत्वात् अन्तरालावच्छेदेन सन्निकर्षाभावान्न जाति प्रत्यक्षमिति वाच्यं—तथा सति रूपादीनामनेकव्यक्तिगतानामैक्यापत्तेरुक्तरीत्यैवान्तराले तत्प्रत्यक्षवारणसंभवात्।

ननु च सर्वगोव्यक्त्यनुगतस्यैकस्य गोत्वस्यानङ्गीकारे गौर्गौरित्यनुगतप्रतीत्यनुपपत्तिः। तथा गवादिपदसङ्केतानुपपत्तिश्च। व्यक्तीनामानन्त्येन सङ्केतासम्भवेन जात्यवच्छिन्न एव सङ्केतावश्यकत्वादिति चेन्न—सामान्यादौ जात्यभावेऽपि घटत्वं सामान्यं, पटत्वं सामान्यमि[2]त्यनुगतप्रतीतिवत् सामान्यादिपदसङ्केतवच्च गवादौ जात्यभावेऽपि तयोरुपपत्तेः। न चानुगतप्रतीतिसङ्केतयोर्न जात्युपपाद्यत्वनियमः, किंत्वेकधर्मोपपाद्यत्वनियम इति सामान्यादौ जात्यभावेऽपि नित्यत्वे सत्यनेकसमवेतत्वरूपैकधर्मसत्त्वान्नानुपपत्तिरिति वाच्यं—अनेकसमवेतत्वस्यानेकानुयोगिकसमवायप्रतियोगित्वरूपस्य स्वरूपसंबन्धरूपतया घटत्वपटत्वादिभेदेन भिन्नत्वात्। न च समवायप्रतियोगित्वानां भेदेऽपि समवायप्रतियोगितात्वस्यैक्यादनुगतप्रतीत्युपपत्तिरिति वाच्यं—प्रतियोगितात्वस्यापि स्वरूपसम्बन्धरूपत्वेनैक्यायोगात्। अन्यथा सामान्ये जातिस्वीकारेणापसिद्धान्तप्रसङ्गात्। एवं चानुगतप्रतीतेरेकधर्मविषयकत्वनियमं परित्यज्य सजातीयधर्मविषयकत्वं स्वीकर्तव्यमिति गौर्गौरित्याद्यनुगतप्रतीतेरपि सदृशपरिणामविषयकत्वमेव युक्तम्। अनुगतसामान्यस्वीकारे तथाविधं सामान्यमेकैकव्यक्तिष्वेकदेशेन वर्तते? सर्वात्मना वा? आद्ये सामान्यस्य सांशत्वापत्तिः। द्वितीये व्यक्त्यन्तरवृत्त्यनुपपत्तिः। एकव्यक्तावेव सर्वात्मना स्थितत्वात्।

ननु सदृशपरिणामस्यैव सामान्यरूपतापक्षेऽपि सदृशपरिणामेष्वनुगतप्रत्ययः किं निबन्धनः? सदृशपरिणामान्तरनिबन्धनश्चेदनवस्था। स्वभावनिबन्धनश्चेद्घटादावप्यनुगतप्रत्ययस्य स्वभावनिबन्धनत्वापत्त्या सदृशपरिणामकल्पनावैयर्थ्यमिति चेन्न—सदृशपरिणामस्य प्रत्यक्षसिद्धत्वेनापलापायोगात्। भावानां विचित्रशक्तित्वेन सदृशपरिणामस्य स्वभावतोऽनुगतप्रत्ययविषयत्वं, गवादीनां च सदृशपरिणामनिबन्धनमनुगतप्रत्ययविषयत्वमित्यस्योपपत्तेः। अत एव घटादीनां दीपेन प्रकाशो, दीपस्य

---

[1] न तदवच्छेदेन (क). [2] अनुगतप्रतीतिसामान्यादि (क).

स्वतः प्रकाश इत्युपपद्यते। अन्यथा घटादीनामेव स्वतः प्रकाशत्वोपपत्ते-र्दीपकल्पनावैयर्थ्यप्रसङ्गादिति। यदपि विशेषाणां स्वतो व्यावृत्तत्वं लक्षण-मित्यादि, तदपि न—विशेषसद्भावे प्रमाणाभावात्।

ननु घटपटयोर्व्यावृत्तिर्घटत्वपटत्वाभ्यां सम्भवति। घटयोरेव परस्परं व्यावृत्तिः कृष्णत्वरक्तत्वाभ्यां। रक्तघटयोरेव व्यावृत्तिः स्थूलत्वा-ल्पत्वाभ्यां। स्थूलनीलघटयोरेव व्यावृत्तिरारम्भकपालभेदात्। कपालव्या-वृत्तिरपि कापालिकाभेदादिति रीत्या परमाणुपर्यन्तं व्यावृत्तिसिद्धावपि परमाणूनां परस्परव्यावृत्तिसिद्ध्यर्थं विशेषकल्पनमावश्यकम्। अन्यथैक-जातीयपरमाणूनां परस्परं व्यावृत्त्यसिद्धिप्रसङ्गादिति चेन्न- परमाणूनां व्यावृत्त्यर्थं विशेषकल्पनं, विशेषाणां व्यावृत्त्यर्थं [1] विशेषान्तरकल्पनेनानव-स्थापत्तेः। विशेषाणां स्वतो व्यावृत्तत्वकल्पने परमाणूनामेव स्वतो व्यावृत्तत्वसम्भवेन विशेषकल्पनवैयर्थ्यात्। "अन्ते रण्डा विवाहश्चेदा-दावेव तथा न किं" इति न्यायात्। यदपि नित्यत्वे सति सम्बन्धत्वं सम-वायस्य लक्षणमित्यादि। तदपि न— तादृशसमवाये प्रमाणाभावात्। न च गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धि-त्वात्, दण्डीति विशिष्टबुद्धिवदित्यनुमानेन गुणगुण्यादीनां संयोग-सम्बन्धस्य बाधात्समवायस्सिध्यतीति वाच्यं—तादात्म्यसम्बन्धमादाय सिद्धसाधनात्। गुणगुण्यादीनां तादात्म्यसम्बन्धस्य जैनैः स्वीकारादुक्तं च न्यायकुमुदचन्द्रोदये—तन्तुपटादौ सम्बन्धमात्रं प्रसाध्यते? तद्विशेषो वा? प्रथमे सिद्धसाध्यता, तादात्म्यलक्षणसम्बन्धस्येष्टत्वादिति। न चैवं पटरूपमित्यादिप्रतीत्यनुपपत्तिरिति वाच्यं—तादात्म्यस्यैव भेदस्यापि स्वीकारेण तादृशप्रतीत्युपपत्तेः। किं च गुणगुण्यादीनां समवायसम्बन्ध-स्वीकारे घटो रूपसमवायवानित्यादिविशिष्टबुद्ध्यनुरोधेन समवाय-स्यापि घटादौ सम्बन्धान्तरं स्वीक्रियते? न वा? आद्येऽनवस्था—समवायप्रतियोगिकसम्बन्धस्यापि सम्बन्धान्तरस्वीकारावश्यकत्वात्। द्वितीये—विशेषणविशेष्यसम्बन्धविषयकत्वाभाववत्यां [2] समवायवानिति विशिष्टबुद्धौ विशिष्टबुद्धित्वरूपहेतोर्व्यभिचारः। तत्र तादात्म्यविषयक-त्वाङ्गीकारे गुणादिविशिष्टबुद्धावेव तादात्म्यविषयकत्वसम्भवात्समवाय-कल्पनं व्यर्थमिति। यदपि समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन सत्ताविशिष्टान्यत्वमभावस्य लक्षणमित्यादि। तदपि न—अभावलक्षणेऽ-

---

[1] विशेषान्तरकल्पनप्रसङ्गेनानवस्थापत्तेः (क). [2] समवायं वा (क).

[1]न्योन्याभावस्य प्रवेशेनान्योन्याश्रयापत्तेः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यान्योन्याभावत्वरूपत्वेनान्योन्याभावशरीरेऽभावत्व - प्रवेशात्। प्रागभावादिभेदादभावचातुर्विध्याभिधानमपि न युक्तं—घटत्वादिपूर्वपर्यायस्य मृत्पिण्डत्वादेरेव घटप्रागभावरूपत्वादुत्तरपर्यायस्य कपालादेरेव प्रध्वंसरूपत्वादतिरिक्तयोस्तयोरप्रामाणिकत्वात्, गौरवाभावाच्च। अत्यन्ताभावोऽपि घटानधिकरणकालावच्छिन्नभूतलादिकमेव। भूतलवृत्तेर्भूतलातिरिक्तस्याभावस्य केनाप्यप्रतीयमानत्वात्। न चैवं भूतले घटाभाव इति प्रत्ययानुपपत्तिः, अभेदे आधाराधेयभावविरहादिति वाच्यं—तथा सति घटाभावे घटो नास्तीति प्रतीत्या घटाभावेऽप्यतिरिक्तघटाभावकल्पनाप्रसङ्गेनानवस्थापत्तेः। न चाभावाधिकरणकाभावस्याधिकरणस्वरूपत्वान्नानवस्था-अभेदेऽप्याधाराधेयभावोपगमाद्घटाभावे घटो नास्तीति प्रतीत्युपपत्तिरिति वाच्यं—उक्तरीत्यैव भूतले घटो नास्तीति प्रतीत्युपपत्तेरतिरिक्ताभावकल्पनावैयर्थ्यप्रसङ्गात्। न चाभावरूपाधिकरणस्याभावरूपतासम्भवेऽपि कथं भावरूपाधिकरणस्याभावरूपत्वं विरोधादिति वाच्यं—भावाभावयोरैक्यानङ्गीकारे घटाभावाभावस्यापि घटरूपत्वानुपपत्त्याऽनवस्थापत्तेः। एवमन्योन्याभावोऽपि नातिरिक्तः। गवादिवृत्तिमहिषत्वादिविशिष्टमहिषादेरेव गवादिभेदरूपत्वात्। गवादिभेदस्य महिषादिगतस्यातिरिक्तत्वे [2]भेदस्याप्यतिरिक्तत्वापत्त्यानवस्थाप्रसङ्गात्। तस्मान्नैयायिकाभ्युपगतः स्वतन्त्र[3]सामान्यविशेषवादोऽप्ययुक्तः। किं तु सामान्यविशेषात्मा अर्थ एव प्रमाणविषय इति॥

ननु जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षपुण्यपापेषु नवपदार्थेषु प्रमाणविषयेषु सामान्यविशेषात्मकत्वव्यवस्थापनं कथं संगच्छते? विरोधादिदोषाणां सत्त्वात्। तथा हि—जीवपदार्थे तावज्जीवस्वरूपं सामान्यं—[4] संसार्यादयश्चित्सुखदुःखादयो विशेषाः। तदुभयात्मकं वस्त्वित्यभ्युपगम्यते। सामान्यविशेषयोश्च वस्तुनः सकाशाद्भेदाभेदावङ्गीक्रियेते। तन्न युज्यते—भेदाभेदयोः प्रतियोग्यभावरूपतया विरोधेनैकत्रासम्भवात्। तद्वत्ताबुद्धिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वं भेदाभावरूपाभेदस्य। तद्वत्ताबुद्धौ तदभाववत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञानस्य च प्रतिबन्धकत्वात्। यथा शीतस्पर्शवत्ताबुद्धौ शीतस्पर्शाभावव्याप्योष्ण-

---

1 अन्यत्वाभावस्य. 2 भेदः। भेदस्यापि (क). 3 विशेष्यसामान्यवादोपि (ख).
4 संसारादयो वा सुखदुःखादयो वा (ख).

स्पर्शवत्ताज्ञानस्य प्रतिबन्धकत्वात्तयोरेकत्रासम्भववद्भेदाभेदयोरप्येकत्र वृत्तिर्न सम्भवति । एवं भावाभावयोरेकाधिकरणावृत्तित्वस्य घटतदभावादिस्थले दर्शनाद्भेदाभेदयोरप्येकाधिकरणवृत्तित्वं न सम्भवति । न च यथा वृक्षेऽग्रावच्छेदेन कपिसंयोगवत्ताज्ञानं प्रति मूलावच्छेदेन कचित्संयोगाभावज्ञानस्य प्रतिबन्धकत्वं नास्ति । तथैकरूपेण भेदवत्ताज्ञानं प्रति रूपान्तरेण भेदाभावरूपाभेदज्ञानस्य प्रतिबन्धकत्वाभावाद्भेदाभेदयोः प्रतिबन्ध्यप्रतिबन्धकज्ञानविषयत्वरूपविरोधो न सम्भवति । धूपघटादौ भिन्नदेशावच्छेदेन शीतस्पर्शज्ञानेऽपि तदन्यदेशावच्छेदेनोष्णस्पर्शज्ञानदर्शनेन तयोरपि तथाविधविरोधाभावात् । एवं भावाभावयोरपि संयोग [1] तदभावयोर्विभिन्नावच्छेदकावच्छेदेनैकाधिकरणवृत्तित्वदर्शनेन तद्भेदाभेदयोरपि भिन्नरूपावच्छेदेनैकवस्तुवृत्तित्वसम्भवात् न वैयधिकरण्यं चेति वाच्यं—तथा सत्यनवस्थापत्तेः । सामान्यविशेषयोर्वस्तुनः सकाशाद्भेदाभेदोपपादनाय रूपद्वयस्वीकारे तादृशरूपयोरपि वस्तुनस्सकाशाद्भेदाभेदयोर्वक्तव्यतया तदुपपादनायापि रूपद्वयकल्पनापत्त्या विश्रान्तिविरहात् । न च वस्तुनोऽनन्तगुणपर्यायात्मकत्वादियमनवस्था न दोषाय प्रामाणिकत्वात्, प्रामाणिकानवस्थाया अदोषत्वं च सर्ववादिसंमतं, बीजाङ्कुरादिस्थलेऽनवस्थाया दोषत्वाभावस्य सर्वसम्मतत्वादिति वाच्यं—एवमपि सङ्कराद्यापत्तेः । येन रूपेण भेदस्तेन रूपेणाभेदस्यापि प्रसङ्गाद्येन चाभेदस्तेन भेदस्यापि प्रसङ्गेन सङ्करस्य दुर्वारत्वात् । विरुद्धयोर्धर्मयोरेकत्र समावेशस्य सङ्करशब्दार्थत्वात् । एवं येन स्वभावेन भेदो भवतामभिमतस्तेन स्वभावेनाभेद एव स्यान्न तु भेदः । येन च स्वभावेनाभेदोऽनुमतस्तेन स्वभावेन भेद एव स्यादिति व्यतिकरश्च भेदाभेदपक्षे दुस्त्यजः । परस्परविषयगमनं व्यतिकर इत्युक्तः । केन स्वभावेन भेदः, केन चाभेद इति निश्चेतुमशक्यत्वात्संशयश्चेति ।

अत्रोच्यते--सामान्यरूपेणाभेदस्य विशेषरूपेण भेदस्य च प्रत्यक्षादिप्रमाणप्रतिपन्नत्वेन तत्र संकराद्यनवतारात् । अन्यथा वृक्षेऽग्रावच्छेदेन संयोगस्येव तदभावस्य, मूलावच्छेदेन संयोगाभावस्येव संयोगस्य प्रसक्त्या संकराद्यापत्तेः । स्वतन्त्रेण प्रमाणेन पदार्थे व्यवस्थाप्यमाने

---

[1] तद्भावयोः (क).

कुबुद्धिकल्पितानां चोद्यानामप्रवृत्तेः । खलु मदोन्मत्तो हस्ती सन्निहितं व्यवहितं वा मारयति? नाद्यः—गजपालस्यापि मारणप्रसङ्गात् । न द्वितीयः—सर्वेषामपि मारणापत्तेरिति कुबुद्धिकल्पितखण्डनभयाद्धस्ती मारणादुपरमते । तस्माद्भेदाभेदयोः प्रमाणसिद्धत्वात्तत्र विरोधाद्युद्भावनमसङ्गतमेव । इदानीमनेकान्तात्मकवस्तुसमर्थनार्थमेव हेतुद्वयमाह—

अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्पूर्वोत्तराकारपरिहारावाप्तिस्थिति-
लक्षणपरिणामेनार्थक्रियोपपत्तेश्च ॥ २ ॥

गौर्गौरित्याद्यनुवृत्तप्रत्ययस्य, श्यामः शबल इत्यादिव्यावृत्तप्रत्ययस्य च विषयत्वात्पूर्वपर्यायनाशोत्तरपर्यायोत्पत्तिध्रौव्यरूपस्थित्येतत्त्रितयात्मकपरिणामेनार्थक्रियाकारित्वाच्च सामान्यविशेषात्मकोऽर्थ इत्यर्थः । अत्र प्रथमहेतुना तिर्यक्सामान्यव्यतिरेकविशेषोभयात्मकत्वं वस्तुनस्साधितं भवति । द्वितीयहेतुनोर्ध्वतासामान्यपर्यायविशेषोभयात्मकत्वं वस्तुनस्साधितं भवति । ज्ञानानां वैलक्षण्यं विषयवैलक्षण्यायत्तं, न स्वतः । अयं घटोऽयं पट इति विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यानुभवात् । तथानुवृत्तज्ञानव्यावृत्तज्ञानयोरपि वैलक्षण्यस्य विषयवैलक्षण्याधीनत्वावश्यकत्वादुभयविधप्रतीतिविषयस्य वस्तुनो गोत्वादिरूपसदृशपरिणाम श्यामत्वादिरूपव्यतिरेकोभयात्मत्वं दुरपह्नवम् । एवं वस्तुनो द्रव्यपर्यायोभयात्मकत्वेन नित्यानित्यरूपत्वमनङ्गीकृत्य नित्यैकान्तस्यानित्यैकान्तस्य वा स्वीकारेऽर्थक्रिया नोपपद्यते । अर्थक्रियाकारित्वं हि कार्यजनकत्वरूपं । तच्चैककार्योत्तरकालीनापरकार्यजनकत्वरूपक्रमिकानेककार्यजनकत्वं युगपदनेककार्यजनकत्वान्यतरव्याप्यम् । तत्र नित्यस्याद्यं न सम्भवति । नित्यं येन स्वभावेन पूर्वकार्यं करोति तेनैव यद्युत्तरकार्यं करोति तदा पूर्वोत्तरकार्ययोरेककालता स्यात्तयोरेकस्वभावजन्यत्वात् । न चात्मत्वरूपैकधर्मावच्छिन्नस्य नित्यस्यात्मनः क्रमिकानेकज्ञानादिरूपकार्यजनकत्वेऽपि न युगपदनेकज्ञानजनकत्वापत्तिः ; इन्द्रियसन्निकर्षादिरूपसहकारिसमवधाने प्रत्यक्षस्य व्याप्तिज्ञानसत्त्वेऽनुमितेः पदज्ञानसत्त्वे शाब्दबोधस्योत्पादेन सहकारिक्रमात् क्रमिकानेककार्यजनकत्वोपपत्तेरिति वाच्यं—इन्द्रियसन्निकर्षादिभिरात्मनि कश्चन परिणामो जायते? न वा? आद्ये आत्मनः परिणामित्वापत्त्या नित्यत्वव्याघातः । द्वितीये सन्निकर्षादीनां सहकारित्वानुपपत्तिः । उपादाने

कार्योपयोगिपरिणामविशेषसंपादकस्यैव सहकारित्वात् । अन्यथा मृदादिना घटे जननीये दण्डचक्रादीनामेव सहकारित्वं न रासभादीनामिति विभागानुपपत्तेः । नित्य आत्मादिस्सहकारिसहितः कार्यं करोति, न सर्वदेत्यभिदधताऽऽत्मनः परिणामित्वमेव स्वीकृतं भवति—पूर्वाकारपरित्यागोत्तराकारावाप्तयोस्सत्त्वात् । नित्यमात्मादिकमेकस्वभावेन पूर्वकार्यं करोति; तद्भिन्नस्वभावेनोत्तरकार्यं करोतीति स्वीकारे, तादृशस्वभावद्वयं नित्यमनित्यं वा ? नित्यत्वे उत्तरकार्यजननस्वभावस्यापि पूर्वकार्यजननकाले सत्त्वेन कार्ययौगपद्यापत्तिर्दुर्वारा । अनित्यत्वेऽनित्यानेकस्वभावकत्वेनात्मनोऽपि कथंचिन्नित्यत्वापत्त्या सर्वथा नित्यत्वव्याघातः । अतो नित्यस्य क्रमिकानेककार्यजनकत्वं न घटते । नापि युगपदनेककार्यजनकत्वम् । एकस्मिन्नेव क्षणे सकलकार्योत्पत्तिप्रसंगेन द्वितीयादिक्षणे आत्मनोऽर्थक्रियाकारित्वानुपपत्त्या गगनकुसुमवदसत्त्वापत्तेः । एवं च नित्यस्य क्रमिकानेककार्यजनकत्वयुगपदनेककार्यजनकत्वयोरभावेन तद्व्यापकार्थक्रियाकारित्वायोगादसत्त्वं दुर्वारम् । प्रयोगश्च सर्वथा नित्यमात्मादिकमसत्, अर्थक्रियाकारित्वाभावात् शशविषाणवत्। न चासिद्धमात्मादिकमर्थक्रियाकारित्वाभाववत् । क्रमिकानेककार्यजनकत्वयुगपदनेककार्यजनकत्वान्यतराभाववत्वात् शशविषाणवदेवेत्यनेन हेतोस्साधनादिति । एवं क्षणिकैकान्तेऽपि कार्यजनकत्वं न सम्भवति । कार्यपूर्वकालवृत्तित्वे सति कार्यकालवृत्तिन एव कार्योपादानत्वात् । अन्यथा मृतशिखिनोऽपि केकायितं प्रत्युपादानत्वापत्तेः । तथा च पूर्वघटक्षणस्योत्तरघटक्षणपूर्ववृत्तित्वेऽपि तत्समानकालीनत्वाभावात्, कार्योपादानत्वरूपार्थक्रियाकारित्वासम्भवादसत्त्वं दुर्वारमतो द्रव्यपर्यायनयाभ्यां वस्तुनो नित्यानित्यात्मकत्वमेव स्वीकर्तव्यम् । "नोदेति न विलयमृच्छति भावो नियमेन पर्ययनयस्य । नोदेति नो विनश्यति द्रव्यनयालिङ्गितो नित्यं" इति वचनात् । पूर्वपर्यायनाशोत्तरपर्यायोत्पत्तिध्रौव्यरूपस्थित्येतत्रितयात्मकपरिणामोऽनेकान्तपक्ष एवोपपद्यत इति । प्रथमोद्दिष्टं सामान्यं विभजते—

सामान्यं द्वेधा—तिर्यगूर्ध्वताभेदात् ॥ ३ ॥

तिर्यक्सामान्यमूर्ध्वतासामान्यं चेति सामान्यं द्विविधमित्यर्थः । तिर्यक्सामान्यस्य स्वरूपमुदाहरणं चाह—

सदृशपरिणामस्तिर्यक् खण्डमुण्डादिषु गोत्ववत् ॥ ४॥

अनेकविशेष्यकैकाकारप्रतीतिप्रकारत्वं तिर्यक्सामान्यस्य लक्षणम् । गौर्गौरिति तथाविधप्रतीतिप्रकारत्वस्य तत्र सत्त्वात् । तच्च सदृशपरिणामात्मकमित्यर्थः । ऊर्ध्वतासामान्यस्य स्वरूपमुदाहरणं चाह—

परापरविवर्तव्यापि द्रव्यमूर्ध्वता मृदिव
स्थासादिषु ॥ ५ ॥

पूर्वोत्तरपर्यायव्यापकं द्रव्यमूर्ध्वतासामान्यम् । यथा—स्थासकोशकुसूलादिव्यापकं मृद्द्रव्यमित्यर्थः । न च गुणपर्यायातिरिक्तद्रव्ये मानाभाव इति वाच्यं—रूपस्पर्शाभ्यामेकैकेन्द्रियग्राह्याभ्यामतिरिक्तस्योभयेन्द्रियग्राह्यस्य द्रव्यस्य प्रमाणसिद्धत्वात् । य एव घटो मया दृष्टस्तमेव त्वचा स्पृशामीति प्रतीतौ न तावद्रूपं भासते, तस्य त्वगिन्द्रियाग्राह्यत्वात् । नापि स्पर्शः, चक्षुरिन्द्रियाग्राह्यत्वादतो रूपस्पर्शाद्याश्रयभूतं द्रव्यमेव तादृशप्रतीतेर्विषय इति स्वीकर्तव्यम् । एवं पूर्वोत्तरपर्याययोर्विनाशोत्पादवत् ध्रौव्यरूपेण स्थितेरपि प्रत्यक्षसिद्धत्वात् । यत्सुवर्णं कुण्डलमभूदिदानीं तदेव कटकं जातमित्यादिप्रतीतेस्सर्वसिद्धत्वात्पूर्वोत्तर पर्यायव्यापकं द्रव्यमभ्युपगन्तव्यम् । विशेषस्यापि द्वैविध्यमाह—

विशेषश्च ॥ ६ ॥

सामान्यं द्वेधेति सूत्रादनुषक्तेन द्वेधेत्यनेन सम्बन्धाद्विशेषोऽपि द्विविध इत्यर्थः । द्वैविध्यमेवाह—

पर्यायव्यतिरेकभेदात् ॥ ७॥

पर्यायविशेषस्य स्वरूपमुदाहरणं चाह—

एकस्मिन् द्रव्ये क्रमभाविनः परिणामाः पर्याया
आत्मनि हर्षविषादादिवत् ॥ ८ ॥

तद्द्रव्याधिकरणकभिन्नकालावच्छिन्नोत्पत्तिमत्वं तद्द्रव्यपर्यायाणां लक्षणम् । आत्माधिकरणकभिन्नकालावच्छिन्नोत्पत्तिमत्वस्य हर्षविषादादिषु सत्त्वाल्लक्षणसंगतिः । स्थासकोशादीनां मृद्द्रव्यपर्यायाणामात्मपर्यायत्ववारणाय तद्द्रव्याधिकरणकेति । गुणवारणाय भिन्नकालावच्छिन्नेति । न च हर्षविषादातिरिक्तात्मन एवासत्त्वादुक्तोदाहरणानुपपत्ति-

रिति वाच्यं—योऽहं पूर्वं हर्षवान् सोऽहमिदानीं विषादवानित्युभयाश्रयस्य द्रव्यस्य प्रत्यभिज्ञासिद्धत्वात् । स्थिरस्यात्मद्रव्यस्यानभ्युपगमे कृतहानाकृताभ्यागमप्रसंगः । कर्तुर्निरन्वयनाशे हि कृतस्य कर्मणो नाशः, कर्तुः फलसम्बन्धाभावात् । अकृताभ्यागमश्चाकर्तुरेव फलाभिसम्बन्धात् । स चात्मा देहसमपरिमाणः । देवदत्तात्मा देवदत्तदेह एव सर्वत्र विद्यते, तद्देहमात्रव्यापकगुणाधारतयोपलभ्यमानत्वात् । यद्यन्मात्रव्यापकगुणाधारतयोपलभ्यते स तन्मात्रव्यापकः । यथा देवदत्तगेहमात्रव्यापकः प्रभाविशिष्टदीप इत्यनुमानस्य प्रमाणस्य सत्त्वात् । साध्यभूतं देवदत्तदेह एव । सर्वत्र विद्यमानत्वं च देवदत्तदेहबाह्यप्रदेशावृत्तित्वे सति तद्देहप्रदेशत्वसमानाधिकरणसंयोगसम्बन्धावच्छिन्ना[1]भावप्रतियोगित्वम् । अत्र विभुत्वमादाय साध्यपर्यवसानवारणाय सत्यन्तम् । अणुत्वमादाय साध्यपर्यवसानवारणाय विशेष्यं हेतुभूतम् । तद्देहमात्रव्यापकगुणाधारतयोपलभ्यमानत्वं च तद्देहेतरप्रदेशावृत्तियावत्तद्देहप्रदेशवृत्तिगुणाधारत्वप्रकारकप्रत्यक्षविषयत्वम् । सुरभिसुशीतलवाय्वादिस्पर्शदशायां सर्वाङ्गेषु सुखवानहमिति प्रत्यक्षमादाय हेतुरुपपादनीयः तादृशसुखस्य तद्देहेतरप्रदेशावृत्तित्वे सति यावत्तद्देहप्रदेशवृत्तित्वात् । अत्र तद्देहे यावत्प्रदेशवृत्तिसंयोगाद्याधारतयोपलभ्यमाने तद्देहाधिकपरिमाणे वायौ व्यभिचारवारणाय तद्देहेतरप्रदेशावृत्तीति । उदरैकदेशवृत्तिस्पर्शाद्याधारतयाप्रतीयमाने देहन्यूनपरिमाणग्रन्थ्यादौ व्यभिचारवारणाय यावत्तद्देहप्रदेशवृत्तीति । उक्तं च प्रमेयरत्नमालायां—देवदत्तात्मा तद्देह एव तत्र सर्वत्रैव च विद्यते । तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलम्भात् । यो यत्रैव यत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते स तत्रैव तत्र सर्वत्रैव विद्यते; यथा देवदत्तगृह एव तत्र सर्वत्रैव चोपलभ्यमानस्वासाधारणभासुरत्वादिगुणः प्रदीपस्तथा चायं, तस्मात्तथेति । अत्र तद्देह एवेत्यनेन तद्देहेतरप्रदेशावृत्तित्वस्य तत्र सर्वत्रैव चेत्यनेन तद्देहप्रदेशत्वसमानाधिकरणसंयोगसम्बन्धावच्छिन्नाभावाप्रतियोगित्वस्य बोधनात्पूर्वोक्तानुमान एव [2]पर्यवसानं बोध्यम् । न्यायमणिदीपिकाकृता तु साध्यनिर्देशगत च शब्देनानुमानद्वयं सूचितम् । तथा हि—देवदत्तात्मा तद्देह एव विद्यते । तत्रैव स्वासाधारणगुणाधारतयोपलभ्यमानत्वात् ।

---

[1] अभावाप्रतियोगित्वं (क). [2] पर्यवसन्नं (ख).

यो यत्रैव स्वासाधारणगुणाधारतयोपलभ्यते, स तत्रैव विद्यते; यथा देवदत्तसद्मन्येव स्वासाधारणगुणाधारतयोपलभ्यमानः प्रदीपस्तत्रैव विद्यत इत्यनेन देहाद्बहिर्भावनिराकृतिस्तथा देवदत्तात्मा देवदत्तदेहे सर्वत्रैव विद्यते, तत्र सर्वत्रैव स्वासाधारणगुणाधारतयोपलभ्यमानत्वात्। यो यत्र सर्वत्रैव स्वासाधारणगुणाधारतयोपलभ्यते स तत्र सर्वत्रैव विद्यते; यथा देवदत्तगेहे सर्वत्र स्वासाधारणगुणाधारतया प्रतीयमानो दीप इत्यनुमानेन देहपरिपूर्णत्वसिद्धिरित्यनुमानद्वयपरतया व्याचक्रुः। व्यतिरेकविशेषमाह—

अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको
गोमहिषादिवत्॥ ९॥

एकस्मादर्थात्सजातीयो विजातीयो वाऽर्थोऽर्थान्तरम्। तद्गतो विसदृशपरिणामः। यथा गोषु खण्डमुण्डादिलक्षणो विसदृशपरिणामो महिषेषु विशालत्वविशङ्कटत्वलक्षणः। गोमहिषेषु चान्योन्यमसाधारणस्वरूपलक्षणश्च व्यतिरेक इत्यर्थः।

मानानां विषयस्तु वस्तुनिवहः स्याद्वादमुद्राङ्कितः
सामान्याद्युभयात्मको न तु सदाद्यैकैकमात्रात्मकः।
इत्थं सूत्रगणैश्शुभोत्तरगुणैर्देवैर्यदाविष्कृतं
तद्व्याख्यातमभूत्प्रभेन्दुवचनव्यासङ्गसङ्गान्मया॥

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेल्गुळपुरनिवासरसिकस्याभिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां परोक्षप्रमाणपरिच्छेदः चतुर्थः.

———

## अथ पञ्चमः परिच्छेदः

अथेदानीं फलविप्रतिपत्तिनिरासार्थमाह—

**अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥ १ ॥**

तद्विषयकप्रवृत्तिहेतुभूतेच्छाजनकेच्छाविषयत्वं तत्फलत्वम्। यथा पाकप्रवृत्तिहेतुभूता या पाकेच्छा तज्जनकीभूता या भोजनेच्छा तद्विषयत्वस्य भोजने सत्त्वाद्भोजने पाकफलत्वोपपत्तिः। तथा प्रमाणप्रवृत्तिहेतुभूता या प्रमाणेच्छा तज्जनकीभूता याऽज्ञाननिवृत्त्यादीच्छा तद्विषयत्वस्याज्ञाननिवृत्त्यादौ सत्त्वात्तस्य फलत्वोपपत्तिः। तच्च फलं द्विविधं —साक्षात्परम्परया चेति। तत्र साक्षात्फलमज्ञाननिवृत्तिः। परम्परया फलं हानादिकम्। हानादेः प्रमेयनिश्चयात्मकाज्ञाननिवृत्त्युत्तरकालीनत्वात्। न चाज्ञाननिवृत्तेः प्रमाणभूतज्ञानस्वरूपत्वात् कथं प्रमाणफलत्वं? स्वस्यैव स्वफलत्वानुपपत्तेरिति वाच्यं—अज्ञाननिवृत्तेर्ज्ञानधर्मत्वेन कथंचिद्भेदस्यापि सत्त्वात्। यथा पिण्डत्वादिपर्यायविशिष्टस्य मृद्द्रव्यस्योपादानत्वं, घटत्वपर्यायविशिष्टस्य तस्यैव फलत्वम्। एवं स्वपरनिश्चयहेतुभूततादृशनिश्चयाव्यवहितपूर्ववृत्तिपर्यायविशिष्टस्य ज्ञानस्य प्रमाणत्वं तादृशनिश्चयात्मकपर्यायविशिष्टस्य फलत्वमिति स्वीकारेणैकस्यैव प्रमाणत्वफलत्वयोरुपपत्तेः।

नैयायिकास्तु—घटभूतलादिगतचक्षुस्सन्निकर्षरूपप्रमाणस्य घटवद्भूतलमित्याकारकभूतलविशेष्यकघटादिनिश्चयात्मकप्रमितिरूपं फलं प्रमाणाद्भिन्नमेव। तथाविधप्रमितेरपि भूतलं घटवन्नवेति संशयनिवृत्तिः फलम्। तदपि तदपेक्षया भिन्नमेवेति वदन्ति।

सौगतास्तु—अज्ञाननिवृत्तिः प्रमाणज्ञानादभिन्नमेव प्रमाणस्य फलम्। न चाभेदे प्रमाणफलभावानुपपत्तिरिति वाच्यं—अप्रमाणव्यावृत्तिविशिष्टत्वेन प्रमाणत्वस्याफलव्यावृत्तिविशिष्टत्वेन च फलत्वस्य

स्वीकारेण व्यावृत्तिभेदात् प्रमाणफलव्यवस्थोपपत्तेरिति वदन्ति। तदुभय-मतनिरासाय प्रमाणफलयोर्भेदाभेदं व्यवस्थापयति—

**प्रमाणादभिन्नं भिन्नं च ॥ २॥**

प्रमाणफलयोः पूर्वोत्तरवृत्तिजन्यजनकभावापन्नपर्यायद्वयात्मकतया-अवग्रहेहारूपयोरीहावायरूपयोरवायधारणारूपयोर्वा भेदस्य प्रत्यक्षसिद्ध-त्वात्। प्रमाणं स्वभिन्नफलजनकं, करणत्वाच्छिदाकरणकुठारवदित्यनु-मानसिद्धत्वाच्च। भेदांशे प्रमाणस्य स्फुटत्वादुपेक्ष्यं। कथंचिदभेदसमर्थ-नार्थं हेतुमाह—

**यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः॥ ३॥**

आत्मद्रव्यस्यैकस्यैव प्रमाणाकारेण तत्फलभूताज्ञाननिवृत्तिहानो-पादानोपेक्षारूपेण च परिणामाद्द्रव्यरूपेणाऽभेदः प्रतीतिसिद्ध इत्यर्थः। मार्तण्डन्यायकुमुदचन्द्रोदययोस्तु द्विविधं प्रमाणस्य फलं-प्रमाणादभिन्नं भिन्नं चेति। तत्राज्ञाननिवृत्तिलक्षणं फलं प्रमाणादभिन्नं, तद्धर्मत्वात्। सर्वथा भेदे सह्यविन्ध्ययोरिव धर्मधर्मिभावासम्भवात्। हानोपादाना-दिकं तु भिन्नं फलमज्ञाननिवृतिलक्षणेन फलेन व्यवहितत्वादिति विभाग-मङ्गीकृत्य व्याख्यातम्।

नन्वत्र केवलभेदस्य केवलाभेदस्य च स्याद्वादविरुद्धत्वादज्ञान-निवृत्तौ हानादौ च प्रमाणाद्भेदाभेदयोरविशेषात् भिन्नत्वाभिन्नत्वाभ्यां विभागो नोचितः। यः प्रमिमीते स एव निवृत्ताज्ञानो जहा-तीति सूत्रेऽज्ञाननिवृत्ताविव हानादावप्यभेदोपपादनेन द्वयोरप्यभिन्न-त्वस्य सूत्रसिद्धत्वात्तयोरेकं भिन्नमपरमभिन्नमिति विभागस्सूत्रविरुद्ध-श्चेति चेदुच्यते—प्रमाणादभिन्नं फलमित्यस्याव्यवहितपूर्वोत्तरवृत्त्येक-द्रव्यपर्यायत्वेनाभिन्नं फलमित्यर्थः। अज्ञाननिवृत्तिरेव तथाविधं फलं, हानादावेकद्रव्यपर्यायत्वेनाभिन्नत्वसत्त्वेऽप्यव्यवहितपूर्वोत्तरभावाभावेन तेन रूपेणाभिन्नत्वविरहात्। भिन्नं फलमित्यस्यापि व्यवहितपर्यायरूपेण भिन्नमित्यर्थः। तच्च हानादिकमज्ञाननिवृत्तेः, पर्यायरूपेण भिन्नत्वेऽपि व्यवहितपर्यायरूपेण भिन्नत्वाभावात्। भिन्नत्वाभिन्नत्वाभ्यां विभागस्यो-

करीत्या क्लिष्टतां सूत्रविरुद्धतां चाभिप्रेत्य लघुवृत्तौ साक्षात्परंपरया वा फलं द्विविधमिति भाग एव स्वीकृत इति बोध्यम् ॥

माणिक्यनन्दिगुरुणा परिणाहिभूम्ना
धाम्ना समस्तजिनशासनवारिराशेः ।
सन्दर्शितं समुचितं द्विविधं फलं य-
द्व्याख्यातमेतदमुना सुमनस्सुखाय ॥

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेळुगुळपुरनिवास रसिकस्याभिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां प्रमाणफलपरिच्छेदः

पञ्चमः.

———

## अथ षष्ठः परिच्छेदः

---

अथ प्रमाणस्वरूपसङ्ख्याविषयफलानि निरूप्य स्वरूपादिचतुष्टयाभासान्विवक्षुराभाससामान्यलक्षणमाह—

**ततोऽन्यत्तदाभासम् ॥ १ ॥**

ततः प्रतिपादितस्वरूपात्प्रमाणस्वरूपसङ्ख्याविषयफलाद्यदन्यत्तत्तदाभासमित्यर्थः । ननु निरुक्तप्रमाणस्वरूपादन्यत्वं प्रमाणाभासादेर्लक्षणं न सम्भवति, घटादेरपि तदन्यत्वेनातिव्याप्तेः । न च निरुक्तप्रमाणस्वरूपान्यत्वे सति वाद्यन्तरैः प्रमाणत्वेन कल्पितत्वं प्रमाणाभासलक्षणम् । निरुक्तप्रमाणसङ्ख्याभिन्नत्वे सति वाद्यन्तरैः प्रमाणसङ्ख्यात्वेन कल्पितत्वं सङ्ख्याभासत्वम् । तेन घटपटादिगतद्वित्वादिसङ्ख्यायां निरुक्तप्रमाणसङ्ख्याभिन्नत्वसत्वेऽपि न सङ्ख्याभासत्वम् । एवं विषयाभासादेरपि लक्षणमूह्यमिति वाच्यं—एवमपि रजतरङ्गयो[1]रयं रजत इति ज्ञाने रङ्गांशे रजतत्वप्रकारकत्वेन विपर्ययरूपे प्रमाणाभासेऽव्याप्तेः । तस्यैव ज्ञानस्य रजतांशे रजतत्वप्रकारकत्वेन प्रमाणतया तद्भिन्नत्वाभावात् । उक्तं च न्यायकुमुदचन्द्रोदये—द्विचन्द्रज्ञानमेकमेव चन्द्रद्वित्वांशे प्रमाणाभासं, चन्द्रगतधावल्यवर्तुलत्वादौ प्रमाणं भवतीति । एवं संशयविपर्यययोः प्रमाणत्वेन वाद्यन्तरकल्पितत्वाभावादव्याप्तिरिति चेदुच्यते—निरुक्तप्रमाणतावच्छेदकधर्मभिन्नप्रमाणव्यवहारविषयतावच्छेदकधर्मवत्वं प्रमाणाभासस्य लक्षणम् । प्रमाणतावच्छेदकस्वापूर्वार्थव्यवसायात्मकज्ञानत्वभिन्नयोः प्रमाणव्यवहारविषयतावच्छेदकधर्मः । अस्वसंविदितज्ञानत्वगृहीतार्थज्ञानत्वसंशयत्वादयः (प्रमाणाभासाः) तेषां नैयायिकादिकर्तृकप्रमाणव्यवहारविषयतावच्छेदकत्वात् । तद्वत्वस्यास्वसंविदितादिप्रमाणाभासे सत्त्वाल्लक्षणसङ्गतिः । जैनकर्तृकप्रमाणव्यवहारविषयतावच्छेदकधर्मवति प्रमाणेऽतिव्याप्तिवारणाय भिन्नान्तम् । निरुक्तप्रमाणतावच्छेदकस्वापूर्वार्थव्यवसायात्मकज्ञानत्वभिन्नघटत्वादिमति घटादा–

---

1 इमे रङ्गरजते इति (ख).

वतिव्याप्तिवारणाय प्रमाणव्यवहारविषयतावच्छेदकेति । द्विचन्द्रादिज्ञाने द्वित्वादिप्रकारकज्ञानत्वरूपविपर्ययत्वस्य प्रमाणत्वावच्छेदकभिन्नत्वात्त-द्वत्वमादाय तत्राप्याभासतानिर्वाहः । विपर्ययत्वादेरपि साङ्ख्यादिकर्तृक-प्रमाणव्यवहारविषयतावच्छेदकत्वात्, निरुक्तप्रमाणसङ्ख्यागतसङ्ख्यात्व-व्याप्यधर्मभिन्नप्रमाणसङ्ख्याव्यवहारविषयतावच्छेदकधर्मवत्वं सङ्ख्याभा-सत्वम् । निरुक्तप्रमाणसङ्ख्यागतसङ्ख्यात्वव्याप्यधर्मो द्वित्वं । तद्भिन्नो नैयायिकादिकर्तृकप्रमाणसङ्ख्याव्यवहारविषयताच्छेदकधर्म[1]श्चतुष्टयव-त्वम् । तद्वत्वमादाय [2]चतुष्टयवत्वादिसङ्ख्याभासे लक्षणसङ्गतिः । निरुक्त-प्रमाणविषयतावच्छेदकधर्मभिन्नप्रमाणविषयव्यवहारविषयतावच्छेदकधर्म-वत्वं विषयाभासत्वं । निरुक्तफलत्वावच्छेदकधर्मभिन्नफलव्यवहारविषय-तावच्छेदकधर्मवत्वं फलाभासत्वमिति बोध्यम् । तत्र क्रमप्राप्तं स्वरूपा-भासमुदाहरति—

अस्वसंविदितगृहीतार्थदर्शनसंशयादयः प्रमाणाभासाः ॥ २ ॥

अस्वसंविदितं च गृहीतार्थं च दर्शनं च संशयश्च आदिर्येषां ते संशयादयश्चेति सर्वेषां द्वन्द्वः । आदिशब्देन विपर्ययानध्यवसाययोरपि ग्रहणम् । नैयायिकपरिकल्पितस्यास्वसंविदितज्ञानस्य, गृहीतग्राहिणो धारावाहिकद्वितीयादिज्ञानस्य, बौद्धपरिकल्पितनिर्विकल्पकात्मकज्ञानस्य च प्रमाणत्वाभावः स्वापूर्वार्थेत्यादिसूत्र एव प्रदर्शितः । तत्रैकधर्मिनिष्ठ-विशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताकज्ञानं संशयः । अयं स्थाणुर्वा पुरुषो वेति संशये एकधर्मिनिष्ठविशेष्यतानिरूपितस्थाणुत्व-पुरुषत्वादिरूपविरुद्धनानाधर्मनिष्ठप्रकारताकत्वस्य सत्त्वाल्लक्षणसङ्गतिः । अयं स्थाणुरयं पुरुष इति भिन्नधर्मिकस्थाणुत्वादिनिश्चयेऽतिव्याप्तिवार-णाय निरूपितान्तम् । अयं स्थाणुरिति निश्चयवारणाय नानाधर्मेति । अयं स्थाणुर्द्रव्यं चेति निश्चयवारणाय विरुद्धेति । तदभाववन्निष्ठविशेष्यता-निरूपिततन्निष्ठप्रकारताकत्वे सति संशयान्यज्ञानत्वं विपर्ययलक्षणम् । शुक्ताविदं रजतमिति ज्ञाने रजतत्वाभाववत् शुक्तिनिष्ठविशेष्यतानिरू-पितरजतत्वनिष्ठप्रकारताकत्वस्य च सत्त्वाल्लक्षणसङ्गतिः । रजते इदं रजतमिति ज्ञानस्य प्रमाणभूतस्य वारणाय निरूपितान्तम् ।

---

[1] चतुष्ट्वम् (ख). [2] चतुष्ट्वादि (ख).

संशयवारणाय तदन्यत्वनिवेशः । विशेषानवधारणमनध्यवसायः । कथमस्वसंविदितादीनां प्रमाणाभासत्वमित्यत्राह—

स्वविषयोपदर्शकत्वाभावात् ॥ ३ ॥

स्वापूर्वार्थव्यवसायात्मकत्वाभावादित्यर्थः । अत्र दृष्टान्तं यथाक्रममाह—

पुरुषान्तरपूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥ ४ ॥

पुरुषान्तरं च पुरुषार्थश्च गच्छत्तृणस्पर्शश्च स्थाणुपुरुषादिश्च तेषां ज्ञानमिति द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धः । यथा चैत्रीयज्ञानं मैत्रस्य विषयोपदर्शकत्वाभावादप्रमाणं, तथाऽस्वसंविदितज्ञानमपि । एवं धारावाहिकद्वितीयादिज्ञानवत्पूर्वार्थज्ञानसामान्यं गच्छत उदासीनतृणस्पर्शज्ञानवद्दर्शनं संशयादयश्च न प्रमाणं, किंतु प्रमाणाभास इत्यर्थः । सन्निकर्षस्य प्रमाणत्वं निराकुर्वतां नैयायिकैकदेशिनां मतं निराकर्तुमाह—

चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च ॥ ५ ॥

यथा चक्षूरसयोस्संयुक्तसमवायो विद्यमानोऽपि रसप्रत्यक्षजनकत्वाभावादप्रमाणं तथा चक्षूरूपयोस्संयुक्तसमवायोऽपि न प्रमाणम् । प्रमित्यव्यवहितपूर्ववृत्तित्वे सति प्रमितिरूपेण परिणममानत्वाभावात् प्रमित्यव्यवहितपूर्ववृत्तिनः प्रमितिरूपेण [1]परिणममानस्यैव पूर्वपर्यायस्य प्रमाणत्वमिति प्रागेव व्यवस्थापितं । चक्षुषः प्राप्यकारित्वाभावेन रूपादौ सन्निकर्षाभावादपि न तस्य प्रामाण्यम् । प्राप्यकारित्वं च पूर्वमेव निरस्तम् । अतस्सन्निकर्षोऽपि प्रमाणाभास एव । सामान्यतः प्रमाणाभासमुक्त्वा प्रत्यक्षाभासमाह—

अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूमदर्शनाद्वह्नि विज्ञानवत् ॥ ६ ॥

प्रत्यक्षलक्षणभूतवैशद्याभाववत्वे सति प्रत्यक्षव्यवहारविषयत्वं प्रत्यक्षाभासलक्षणम् । विशदप्रत्यक्षेऽतिव्याप्तिवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यम् । व्याप्तिप्रकारकधूमविशेष्यकज्ञानजन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः । व्याप्तिस्मरणं विना केवलधूमदर्शनादकस्माद्य-

[1] परिणममानस्येव (क).

ह्निविज्ञानं तत्प्रत्यक्षमिति सौगताः। तच्च वह्निज्ञानं न प्रत्यक्षं, वैशद्या-भावात्। किंतु तदाभास इत्यर्थः। परोक्षाभासमाह—

वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् ॥ ७॥

अविशदत्वरूपपरोक्षलक्षणाभावे सति परोक्षव्यवहारविषयत्वं परोक्षाभासत्वम्। [1] परोक्षप्रमाणेऽतिव्याप्तिवारणाय सत्यन्तं। घटादि-वारणाय विशेष्यम्। मीमांसकैः प्रमितिकरणभूतमपि ज्ञानं वस्तुगत्या विशदमपि ज्ञाततालिङ्गकानुमानगम्यत्वात्परोक्षमित्युच्यते। तस्य वस्तु-गत्या परोक्षत्वाभावात्परोक्षाभासत्वमेवेत्यर्थः। सामान्यतः परोक्षा-भासत्वमुक्त्वा परोक्षविशेषाभासान्विवक्षुः प्रथमं क्रमप्राप्तं स्मरणाभास-माह—

अतस्मिंस्तदिति ज्ञानं स्मरणाभासं–जिनदत्ते स देवदत्तो यथा ॥ ८॥

अननुभूतविषयकस्मृतित्वं स्मृत्याभासस्य लक्षणं। जिनदत्तवि-शेष्यकदेवदत्तत्वप्रकारकस्मरणं स्मरणाभासमित्यर्थः। प्रत्यभिज्ञाभास-माह—

सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादि प्रत्यभिज्ञाभासम् ॥ ९॥

द्विविधं प्रत्यभिज्ञानं पूर्वमुक्तं-एकत्वविषयकं सादृश्यविषयकं चेति। तत्रैकत्ववति सादृश्यविषयकं सादृश्यवत्येकत्वविषयकं च प्रत्यभिज्ञानं प्रत्यभिज्ञाभासम्। एकत्ववन्निष्ठविशेष्यतानिरूपितसादृश्यप्रकारताकत्वसा-दृश्यवन्निष्ठविशेष्यतानिरूपितैकत्वप्रकारताकत्वान्यतरवत्वं प्रत्यभिज्ञाभा-सस्य लक्षणम्। उभयविधप्रत्यभिज्ञासंग्रहायान्यतरनिवेशः। ननु गोविल-क्षणो महिषः, इदमस्माद्दूरं, वृक्षोऽयमित्यादेरपि प्रत्यभिज्ञानस्योक्तत्वा-त्सदृशे विलक्षणत्वज्ञानमासन्ने दूरत्वज्ञानादिकमपि प्रत्यभिज्ञाभासं सम्भव-तीति द्वैविध्योक्तिरयुक्तेति चेन्न-द्वैविध्योक्तेरुपलक्षणपरत्वात्। प्रत्यभिज्ञा-भेदसमसङ्ख्याकानां तदाभासभेदानां सम्भवात्। तर्काभासमाह—

असम्बद्धे तद्ज्ञानं तर्काभासम्

---

[1] प्रमाणे (ख).

व्याप्तिशून्यहेतुविशेष्यकव्याप्तिप्रकारकज्ञानत्वं तर्काभासस्य लक्षणम्। सत्तर्कवारणाय विशेष्यैकान्तमुदाहरति—

यावांस्तत्पुत्रस्स श्यामो यथा ॥ १० ॥

श्यामत्वनिरूपितव्याप्तिशून्ये तत्पुत्रत्वे तन्निरूपितव्याप्तिज्ञानं तर्काभासमित्यर्थः। अनुमानाभासमाह—

इदमनुमानाभासम् ॥ ११ ॥

इदं वक्ष्यमाणमित्यर्थः। पक्षाभास हेत्वाभास दृष्टान्ताभास प्रयोगाभासान्यतमत्वमनुमानाभाससामान्यलक्षणम्। तत्र प्रथमं पक्षाभासमाह—

तत्रानिष्टादिः पक्षाभासः ॥ १२ ॥

अनिष्टसिद्धबाधितपक्षान्यतमत्वं पक्षाभासलक्षणमित्यर्थः। इष्टमबाधितमित्यादिना पक्षलक्षणस्य पूर्वमुक्ततया तद्विपरीतस्य तदाभासतया युक्तत्वात्। तत्र वादिगतेच्छाविषयत्वाभाववत्साध्यविशिष्टः पक्षः। अनिष्टः पक्षाभासः। तमुदाहरति—

अनिष्टो मीमांसकस्यानित्यः शब्दः ॥ १३ ॥

मीमांसकैः शब्दस्य नित्यत्वाङ्गीकारेणानित्यत्वविशिष्टशब्दस्य मीमांसकगतेच्छाविषयत्वाभावात्। प्रतिवादिगतनिश्चयविषयीभूतसाध्यविशिष्टः पक्षः सिद्धः पक्षाभासः। तमुदाहरति—

सिद्धः श्रावणः शब्दः ॥ १४ ॥

शब्दे श्रावणत्वस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वरूपस्य सर्वज्ञसिद्धत्वात्तथाविधसाध्यविशिष्टपक्षस्य प्रतिवादिगतनिश्चयविषयता। साध्याभावप्रकारकप्रमाविषयः पक्षबाधितः पक्षाभासः। तं विभजते—

बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः ॥ १५ ॥

साध्याभावप्रकारकप्रत्यक्षविषयः; साध्याभावप्रकारकानुमानविषयस्तथाविधागमविषयस्तथाविधलौकिकवाक्यजन्यज्ञानविषयस्तथाविध—स्ववचनजन्यज्ञानविषयश्चेति बाधितपक्षाभासः। पञ्चविध इत्यर्थः। तत्राद्यमुदाहरति—

अनुष्णोऽग्निर्द्रव्यत्वाज्जलवत् ॥ १६ ॥

अत्रानुष्णत्वरूपसाध्याभाव उष्णत्वम् । तत्प्रकारकप्रत्यक्षविषयोऽग्निरिति प्रत्यक्षबाधितः । अनुमानबाधितमुदाहरति—

अपरिणामी शब्दः कृतकत्वाद्घटवत् ॥ १७ ॥

अत्रापरिणामित्वरूपसाध्याभावः परिणामित्वं तत्प्रकारकम् । शब्दः परिणामी कृतकत्वादित्यनुमानम् । तद्विषयश्च शब्द इत्यनुमानबाधितः । आगमबाधितमाह—

प्रेत्याऽसुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत् ॥ १८ ॥

पुरुषाश्रितत्वाविशेषेऽप्यागमे धर्मस्य सुखप्रदत्वोक्तेर्मरणोत्तरकालीन दुःखजनकत्वरूपं यत्साध्यं तदभावप्रकारकमागमजन्यज्ञानमिति धर्मस्य तद्विषयत्वादागमबाधितत्वम् । लोकबाधितत्वमाह—

शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छंखशुक्तिवत् ॥ १९ ॥

अत्र शुचित्वं साध्यं, तदभावोऽशुचित्वम् । तत्प्रकारकमेव लौकिकवाक्यजन्यज्ञानं प्राण्यङ्गत्वाविशेषेऽपि कस्यचित्शुचित्वस्य कस्यचिदशुचित्वस्य लोकसिद्धत्वात् । तथाविधज्ञानविषयत्वस्य नरशिरःकपाले सत्त्वाल्लोकबाधितत्वम् । स्ववचनबाधितमाह—

माता मे वन्ध्या पुरुषसंयोगेऽप्यगर्भत्वात्प्रसिद्धवन्ध्यावत् ॥ २० ॥

अत्रापत्यजनकत्वसामान्याभावरूपवन्ध्यात्वं साध्यम् । तदभावोऽपत्यजनकत्वरूपमातृत्वम् । तत्प्रकारकस्ववचनजन्यज्ञानविषयत्वस्य मातरि सत्त्वात्स्ववचनबाधितत्वम् । अत्र यद्यपि स्मृतिबाधितप्रत्यभिज्ञाबाधिततर्कबाधितानामपि सम्भवादबाधितस्याष्टविधत्वमेव युक्तम् । न तु पञ्चविधत्वम् । तथाहि-तद्भूतलं घटाभाववत्, द्रव्यत्वाद्घटशून्यभूतलान्तरवदित्यत्र तद्भूतलं घटवदिति स्मृत्या बाधितत्वस्य क्षणिकत्वानुमाने प्रत्यभिज्ञाबाधितत्वस्य धूमो वह्निनिरूपितव्याप्तिशून्यो द्रव्यत्वाद्घटवदित्यत्र धूमे वह्निनिरूपितव्याप्तिग्राहकतर्कबाधितत्वस्य च सत्त्वात् । तथापि पञ्चविधत्वोक्तिरुपलक्षणपरत्वादष्टविधत्वमपि सूत्रकारानुमतमेवेति बोध्यम् ।

नैयायिकास्तु–प्रत्यक्षादिबाधितस्थले [1] बाधरूपो हेत्वाभासः। अनुमानबाधितस्थले सत्प्रतिपक्षो हेत्वाभासः। तत्र साध्याभाववान् पक्षः पक्षनिष्ठसाध्याभावः, साध्यवद्भेदवान् पक्षः पक्षनिष्ठसाध्यवद्भेदश्च [2] बाधः। यथा ह्रदो वह्निमानित्यादौ वह्न्यभाववद्ध्रदो ह्रदनिष्ठवह्न्यभावादिः। तल्लक्षणं तु पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकज्ञानविषयत्वं; ह्रदो वह्निमानित्यनुमितिं प्रति ह्रदो वह्न्यभाववानिति ज्ञानस्य प्रतिबन्धकत्वात्तद्विषयत्वस्य वह्न्यभाववद्ध्रदादौ सत्त्वाल्लक्षणसङ्गतिः। न च ह्रदो वह्निमानित्यनुमितौ वह्न्यभाववत्ता[3]ज्ञानस्येव वह्न्यभावव्याप्यवत्ताज्ञानस्यापि प्रतिबन्धकत्वात्तद्विषयत्वस्य वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षे सत्त्वादतिव्याप्तिरिति वाच्यं—अनुमितिप्रतिबन्धकज्ञाने साध्याभावानुमितिजनकत्वस्य विशेषणत्वात्। सत्प्रतिपक्षज्ञानस्य साध्याभावानुमितिजनकत्वेन तदजनकत्वाभावात्। साध्याभावव्याप्यवान् साध्यवद्भेदव्याप्यवान्वा पक्षः। पक्षनिष्ठसाध्याभावव्याप्यसाध्यवद्भेदव्याप्यादिकं च सत्प्रतिपक्षः। तल्लक्षणं तु साध्यानुमितिविरोध्यनुमितिजनकज्ञानविषयत्वं साध्यानुमितिविरोधिनी याऽनुमितिः साध्याभावानुमितिस्साध्यवद्भेदानुमितिश्च। तज्जनकज्ञानविषयत्वस्योक्तसत्प्रतिपक्षेषु सत्त्वाल्लक्षणसङ्गतिः। न च साध्यानुमितिविरोधिन्यनुमितिः साध्याभावाद्यनुमितिरिव साध्याभावव्याप्यानुमितिरपि तज्जनकज्ञानविषयत्वस्य साध्याभावव्याप्यव्याप्यवत्पक्षे सत्त्वादतिव्याप्तिरिति वाच्यं–साध्यविरोध्यनुमितिजनकज्ञाने साध्यानुमितिप्रतिबन्धकत्वस्यापि विशेषणत्वात्। साध्याभावव्याप्यव्याप्यवत्ताज्ञानस्य च साध्यानुमितिप्रतिबन्धकत्वाभावान्नातिव्याप्तिरिति वदन्ति। तन्न—अबाधितत्वस्य पक्षलक्षणप्रविष्टतया तद्वैकल्ये पक्षाभासत्वस्य युक्तत्वेऽपि हेत्वाभासत्वायोगात्, हेतुलक्षणवैकल्यस्थल एव हेत्वाभासस्योचितत्वात्। अन्यथा हेत्वाभासस्थलेऽपि पक्षाभासाङ्गीकारप्रसङ्गेन हेत्वाभासस्यैव विलोपापत्तिः। किंच साध्याभाववत्पक्षस्य बाध्यत्वं, तद्व्याप्यवत्पक्षस्य सत्प्रतिपक्षत्वमिति स्वीकारे हेत्वभाववत्पक्षस्य स्वरूपासिद्धित्वम्। तद्व्याप्यवत्पक्षस्य हेत्वाभासान्तरत्वं स्यादिति सव्यभिचारविरुद्धाऽसिद्धसत्प्रतिपक्षितबाधितभेदेन पञ्चहेत्वाभासा इति भवतां

---

1 बोधरूपः (क). 2 बोधः (क). 3 ज्ञानस्यैव (ख).

प्रतिज्ञाया विलोपापत्तेः। यत्तु यो यत्र हेत्वाभासस्तद्व्याप्योऽपि तन्मध्य एवान्तर्भवति, विना बाधसत्प्रतिपक्षाविति [1] स्वतन्त्रेच्छेन मुनिना बाधात् पृथक् सत्प्रतिपक्षस्य परिगणनादिति नैयायिकैरुक्तम्। तदपि न—मुनेरयुक्तवादित्वे तद्वचनस्यापि ग्राह्यत्वायोगादिति। इदानीं क्रमप्राप्तान् हेत्वाभासानाह—

हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः॥ २१॥

असिद्धाद्यन्यतमत्वं हेत्वाभाससामान्यलक्षणम्। हेत्वाभासाश्चतुर्विधाः। असिद्धादिभेदादित्यर्थः। तत्रासिद्धहेत्वाभासलक्षणमाह—

असत्सत्तानिश्चयोऽसिद्धः॥ २२॥

सत्ता च निश्चयश्च सत्तानिश्चयौ। असन्तौ सत्तानिश्चयौ यस्य सः। तथाऽसत्सत्ताकोऽसन्निश्चयश्चेत्यसिद्धो द्विविध इत्यर्थः। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिज्ञान - प्रतिबन्धकज्ञानविषयत्वहेतुतावच्छेदकप्रकारकनिश्चयाविषयत्वान्यतरव - त्वमसिद्धस्य लक्षणम्। शब्दः परिणामी चाक्षुषत्वादित्यत्र शब्दावृत्ति चाक्षुषत्वरूपाऽसिद्धज्ञानस्य, शब्दश्चाक्षुषत्ववानिति पक्षविशेष्यकहेतुप्रकारकज्ञानप्रतिबन्धकत्वात्तथाविधज्ञानविषयत्वस्य शब्दावृत्तिचाक्षुषत्वे-अविद्यमानसत्ताकासिद्धेः सत्त्वाल्लक्षणसङ्गतिः। वह्निमान् धूमादित्यत्र मन्दमतिना बाष्पादिभावेन सन्दिग्धे धूमे विद्यमाननिश्चयरूपाऽसिद्धहेतुतावच्छेदकप्रकारकनिश्चयाविषयत्वसत्त्वाल्लक्षणसङ्गतिः। उभयविधासिद्धसङ्ग्रहायान्यतरनिवेशः। तत्रासत्सत्ताकमसिद्धमुदाहरति—

अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात्॥ २३॥

कथमस्यासिद्धत्वमित्यत्राह—

स्वरूपेणासत्त्वात्॥ २४॥

चाक्षुषत्वं हि चक्षुर्जन्यज्ञानविषयत्वम्। तच्च शब्दे स्वरूपेणासत्त्वादसिद्धमित्यर्थः। अयं चासिद्धो द्विविधः-विशेषणासिद्धो विशेष्यासिद्ध-

[1] स्वतन्त्रे जैनमुनिना (क).

श्चेति। तत्र पक्षवृत्तिविशेषणघटितो हेतुर्विशेषणासिद्धः। यथाऽनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वादिति। अत्र नैयायिकरीत्या प्रयुक्तेऽनुमाने परमाण्वादौ व्यभिचारवारणाय सत्यन्तम्। घटादौ व्यभिचारवारणाय विशेष्यम्। चाक्षुषत्वरूपविशेषणस्य पक्षावृत्तित्वाद्विशेषणासिद्धत्वम्। विशेष्यासिद्धो यथा शब्दो नित्यः, सामान्यवत्वे सति चाक्षुषत्वादित्यत्र बोध्यः। अविद्यमाननिश्चयमसिद्धमुदाहरति—

अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमात् ॥ २५॥

अस्यासिद्धत्वं कथमित्यत्राह—

तस्य बाष्पादिभावेन भूतसंघाते सन्देहात् ॥ २६ ॥

अविद्यमाननिश्चयो द्विविधः-अज्ञानेनाविद्यमाननिश्चयो मताभिनिवेशेनाविद्यमाननिश्चयश्चेति। तत्राद्य उदाहृतः। द्वितीयमुदाहरति—

साङ्ख्यं प्रति परिणामी शब्दः कृतकत्वात् ॥ २७ ॥

अस्यासिद्धतायां निमित्तमाह—

तेनाज्ञातत्वात् ॥ २८ ॥

तेन साङ्ख्येनाज्ञातत्वात्। तन्मते ह्याविर्भावतिरोभावावेव प्रसिद्धौ नित्यैकान्ताङ्गीकारात्, उत्पत्तेस्तन्मते शशशृङ्गप्रायत्वात् ॥

नैयायिकास्तु—पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालित्वे सति साध्यतावच्छेदकप्रकारकं यद्ज्ञानं तत्प्रतिबन्धकज्ञानविषयत्वमसिद्धसामान्यस्य लक्षणम्। ह्रदो द्रव्यं धूमादित्यत्र धूमाभाववद्ध्रदरूपस्वरूपासिद्धौ लक्षणसमन्वयः। ह्रदो धूमवान्वह्नेश्चेति ज्ञानं प्रति धूमाभाववद्ध्रदज्ञानस्य प्रतिबन्धकत्वात्। अत्र साध्यतावच्छेदकप्रकारत्वनिवेशात् पर्वतः काञ्चनमयवह्निमानित्यत्र काञ्चनमयत्वाभाववद्वह्निरूप[1]साध्यप्रसिद्धौ लक्षणसमन्वयः। साध्यतावच्छेदकप्रकारकज्ञाने साध्यतावच्छेदकाभावज्ञानस्य प्रतिबन्धकत्वात्। एवं काञ्चनमयपर्वतो वह्निमानित्यत्र काञ्चनमयत्वाभाववत्पर्वतरूपाश्रया-

---

[1] साध्याप्रसिद्धौ (क).

सिद्धौ पर्वतो वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वाभाववद्धूम-रूपसाधनाप्रसिद्धौ च लक्षणसमन्वयो बोध्यः। असिद्धस्त्रिविधः—आश्रयासिद्ध स्वरूपासिद्ध व्याप्यत्वासिद्धभेदात्। काञ्चनमयपर्वतो वह्निमानित्यत्र काञ्चनमयत्वाभाववत्पर्वत आश्रयासिद्धः। ह्रदो द्रव्यं धूमादित्यत्र धूमाभाववद्ध्रदः स्वरूपासिद्धः। काञ्चनमयवह्न्यादिसाधके काञ्चनमयत्वाभाववद्वह्न्यादिरूपसाध्याप्रसिद्ध्यादिर्व्याप्यत्वासिद्ध इति वदन्ति। तन्न—काञ्चनमयत्वाभाववत्पर्वतस्य पक्षाभासतायाः काञ्चन-मयत्वाभाववद्वह्ने[1]स्साध्याभासतायाश्च युक्तत्वेऽपि हेत्वाभासत्वायोगात्। अन्यथा काञ्चनमयत्वाभाववन्महानसरूपदृष्टान्तासिद्धेरपि हेत्वाभासता प्रसङ्गात्। किंच हेत्वभाववत्पक्षस्य स्वरूपासिद्धत्वे उदेष्यति शकटं कृत्तिकोदयादित्यत्रापि स्वरूपासिद्धत्वापत्तिः। तत्र पक्षे हेत्वभावेऽप्यनु-मित्युत्पादस्य सर्वानुभवसिद्धत्वात्। न चैवं सूत्रेऽविद्यमानसत्ताक-स्यासिद्धत्वकथनं विरुध्यत इति वाच्यं—यत्र साध्याभाववद्वृत्तित्वघटित व्याप्तिज्ञानमनुमितिकारणं, यथा परिणामी शब्दश्चाक्षुषत्वादित्यादौ तत्रैव हेत्वभाववत्पक्षस्यासिद्धत्वम्। यत्र साध्याश्रयपूर्वत्वाभावघटितव्याप्ति-ज्ञानं कारणं तत्र तस्यासिद्धत्वं नास्तीत्यस्य सूत्रकाराभिप्रेतत्वादिति। विरुद्धहेत्वाभासं लक्षयति—

### विपरीतनिश्चिताविनाभावो विरुद्धः

साध्यविपरीतेन साध्याभावेन निश्चितोऽविनाभावस्तदभाववद-वृत्तित्वं यस्यासौ विरुद्धः। निश्चितसाध्याभावाभाववदवृत्तित्ववान् निश्चि-तसाध्यवदवृत्तित्ववान् विरुद्ध इति यावत्। उदाहरति—

### अपरिणामी शब्दः कृतकत्वात् घटवत् ॥ २९ ॥

कृतकत्वं हि पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेन व्याप्तमिति परिणामाभावरूपसाध्यवदवृत्त्येव। यद्यपि साध्यवदवृत्तित्वेन निश्चितत्वरूपविरुद्धलक्षणस्योदेष्यति शकटं कृत्तिकोदयादित्यत्र कृत्तिको-दये सत्त्वात्तस्यापि विरुद्धत्वापत्तिस्तथापि विरुद्धस्य साध्यसामानाधि-करण्यग्रहप्रतिबन्धकतया हेत्वाभासत्वेन साध्याभाववदवृत्तित्वरूपव्या-

---

[1] साध्याभावतायाश्च (क).

त्रावेव साध्यसामानाधिकरण्यस्य प्रविष्टत्वेन तथाविधव्याप्तिग्रहस्य कारणतास्थल एवोक्तविरोधस्य दोषत्वं । कृत्तिकोदयहेतुकस्थले च साध्याश्रयपूर्वत्वाभावघटितव्याप्तिज्ञानस्य हेतुत्वेन तत्र विरोधस्य दोषत्वासम्भवादिति । अनैकान्तिकं लक्षयति—

विपक्षेप्यविरुद्धवृत्तिरनैकान्तिकः ॥ ३० ॥

अत्रापि शब्दः साध्याभाववतः साध्यवद्भेदवतः साध्याश्रयपूर्वत्वाभाववदादीनां विपक्षाणां च सङ्ग्रहार्थम् । तेन साध्याभावसाध्यवद्भेदसाध्याश्रयपूर्वत्वाभावघटितसकलविधव्याप्तिग्रहप्रतिबन्धकव्यभिचाराणां संग्रहः । एवं च साध्याभाववदवृत्तित्वसाध्यवदन्यावृत्तित्वसाध्याश्रयपूर्वत्वाभाववदवृत्तित्वादिप्रकारकहेतुविशेष्यकज्ञानप्रतिबन्धकज्ञानविषय - त्वमनैकान्तिकस्य लक्षणं । धूमवान्वह्नेरित्यादौ धूमाभाववदवृत्तित्वविशिष्टवह्नौ धूमवदन्यवृत्तित्वविशिष्टवह्नौ । उदेष्यति शकटं कृत्तिकोदयमृगशिरोदयान्यतरस्मादित्यादौ साध्याश्रयपूर्वत्वाभाववदवृत्तित्वविशिष्टकृत्तिकोदयमृगशिरोदयान्यतरस्मिंश्च तत्तद्व्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वसत्त्वाल्लक्षणसमन्वयः । स चानैकान्तिकः साध्याभाववदादिरूपविपक्षे निश्चितवृत्तिः शङ्कितवृत्तिश्चेति द्विविधः । तत्राद्यं दर्शयति—

निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वाद्घटवत् ॥ ३१ ॥

साध्याभाववति कस्मिन् प्रमेयत्वस्य वृत्तिर्निश्चितेत्यत्राह—

आकाशे नित्येप्यस्य निश्चयात् ॥ ३२ ॥

अनित्यत्वरूपसाध्याभाववत्याकाशे विपक्षे प्रमेयत्वस्य निश्चयादनित्यत्वाभाववदाकाशवृत्तित्वविशिष्टप्रमेयत्वं निश्चितवृत्तिरनैकान्तिक इत्यर्थः । द्वितीयं दर्शयति—

नास्ति सर्वज्ञो वक्तृत्वात् ॥ ३३ ॥

अत्र सर्वज्ञत्वाभावः साध्यम् । तदभावः सर्वज्ञत्वम् । तद्वत्यपि वक्तृत्वं सन्दिग्धमिति शङ्कितवृत्तिरयं, ज्ञानोत्कर्षस्य वचनोत्कर्षं प्रति कारणत्वेन सर्वविषयकज्ञानस्य सर्वपदार्थनिरूपणपरवचनहेतुत्वेपि वक्तृत्वेन सह ज्ञानस्य विरोधाभावादिति भावः । एतदेवाह—

सर्वज्ञत्वेन वक्तृत्वाविरोधात् ॥ ३४ ॥

सर्वज्ञत्वेन वक्तृत्वस्य विरोधाभावश्च प्रागेव सर्वज्ञसिद्धिप्रस्तावे दर्शितः। अथ व्यभिचारनिश्चयस्य व्याप्तिग्रहप्रतिबन्धकत्वेपि तत्संशयस्याप्रतिबन्धकत्वात् कथं शङ्कितवृत्तेर्हेत्वाभासत्वं। व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकत्वाङ्गीकारे चानुमानमात्रोच्छेदप्रसङ्गः। पर्वतो वह्निमानित्यादावपि पर्वतादौ वह्न्यादिसन्देहसत्त्वेन तत्र धूमस्य निश्चितत्वेन व्यभिचारसंशयस्य दुर्वारत्वादिति चेन्न—व्यभिचारसंशयो हि द्विविधः—साध्याभावांशे संशयात्मको वृत्तित्वांशे संशयात्मकश्चेति। तत्राद्यस्य व्याप्तिग्रहप्रतिबन्धकत्वानङ्गीकारान्नानुमानमात्रोच्छेदः। द्वितीयस्य प्रतिबन्धकत्वाङ्गीकाराच्छङ्कितवृत्तेर्हेत्वाभासत्वोपपत्तिश्चेति। अकिञ्चित्करं निरूपयति—

सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिंचित्करः ॥ ३५ ॥

पक्षविशेष्यकसाध्यप्रकारकसंशयप्रतिबन्धकज्ञानविषयपक्षवृत्तित-याभासमानत्वमकिञ्चित्करहेतोर्लक्षणम्। पक्षविशेष्यकसाध्यप्रकारकसंशयः शब्दः श्रावणो नवेत्यादिसंशयस्तत्प्रतिबन्धकः शब्दः। श्रावण इत्यादिसिद्ध्यात्मकं ज्ञानं तद्विषयपक्षवृत्तित्वस्य शब्दत्वे सत्त्वाल्लक्षणसमन्वयः। एवमनुष्णोऽग्निर्द्रव्यत्वादित्यादौ वह्निरुष्णो न वेति संशयप्रतिबन्धकीभूतं यद्वह्निरुष्ण इति बाधज्ञानं तद्विषयीभूतपक्षवृत्तित्वस्य द्रव्यत्वे सत्त्वाल्लक्षणसङ्गतिः। अत्र ह्रदो वह्निमान् धूमादित्याद्यकिंचित्करसङ्ग्रहाय पक्षवृत्तित्वं परित्यज्य पक्षवृत्तितया भासमानत्वपर्यन्तानुधावनम्। अथवाऽनुमितिप्रतिबन्धकज्ञानविषयपक्षवृत्तितयाभासमानत्वं लक्षणम्। अनुमितौ बाधकज्ञानस्यैव सिद्धेरपि प्रतिबन्धकत्वात्तद्विषयपक्षवृत्तित्वं सिद्धसाध्यके बाधितसाध्यके च वर्तत इति लक्षणसमन्वयः। अकिञ्चित्करो द्विविधः—सिद्धसाध्यको बाधितसाध्यकश्चेति। तत्राद्यमाह—

सिद्धः श्रावणः शब्दः शब्दत्वात् ॥ ३६ ॥

ननु सिद्धसाधनस्थले नैयायिकैर्हेत्वाभासानङ्गीकारादुक्तस्थले शब्दत्वस्याकिंचित्करहेत्वाभासत्वकथनमयुक्तमित्यत्राह—

किंचिदकरणात् ॥ ३७॥

अनुमितेरनुत्पादादनुमितिप्रतिबन्धादित्यर्थः । यथा ह्रदो वह्निमान् द्रव्यत्वादित्यत्र ह्रदो वह्न्यभाववानिति ज्ञानस्याऽनुमितिप्रतिबन्धकत्वात्तद्विषयस्य वह्न्यभाववद्ध्रदादेर्दोषत्वं तादृशदोषविशिष्टत्वाद्द्रव्यत्वस्य दुष्टत्वरूपं हेत्वाभासत्वमपि स्वीक्रियते ; तथा सिद्धसाधनस्थले सिद्धेरनुमितिप्रतिबन्धकतया तद्विषयस्य साध्यवत्पक्षस्य दोषत्वं हेतोर्दुष्टत्वरूपं हेत्वाभासत्वं चावश्यकं, साध्यवत्पक्षसाध्याभाववत्पक्षयोर्द्वयोरनुमितिप्रतिबन्धकज्ञानविषयत्वाविशेषेपि कस्यचिद्दोषत्वं कस्यचिन्नेत्यर्धजरतीयस्य नैयायिकानामयुक्तत्वादिति भावः । इममेवाभिप्रायं द्वितीयभेदस्य दृष्टान्ततयोदाहरणेन स्फुटयति—

यथानुष्णोऽग्निर्द्रव्यत्वादित्यादौ किंचित्कर्तुमशक्यत्वात् ॥ ३८ ॥

अकिंचित्करमिति शेषः । किंचित्कर्तुमशक्यत्वात्, अनुमिति प्रतिबन्धात् । ननु प्रत्यक्षानुमानागमलोकस्ववचनैश्च बाधितः पक्षाभासः प्रतिपादितः । तद्दोषेणैव हेतोर्दुष्टत्वात् । पृथगकिंचित्कराभिधानमनर्थकमित्यत्राह—

लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ॥ ३९ ॥

लक्षणे—लक्षणव्युत्पादनशास्त्र एव असावकिंचित्करलक्षणो दोषो विनेयव्युत्पत्त्यर्थं व्युत्पाद्यते, न तु व्युत्पन्नानां प्रयोगकाले । व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वादित्यर्थः । दृष्टान्तोऽन्वयव्यतिरेकभेदाद्द्विधेत्युक्तं । तद्विपरीतस्तदाभासोऽपि तद्भेदाद्द्विधा भवतीत्यभिप्रेत्य प्रथममन्वयदृष्टान्ताभासमाह—

दृष्टान्ताभासा अन्वयेऽसिद्धसाध्यसाधनोभयाः ॥ ४० ॥

साधननिष्ठसाध्यनिरूपितव्याप्तिनिश्चयस्थानत्वाभाववत्त्वे सति दृष्टान्ततयाऽभिधीयमानत्वं दृष्टान्ताभासस्य लक्षणं । असिद्धसाध्यकादौ दृष्टान्ते व्याप्तिनिश्चयाभावाल्लक्षणसङ्गतिः । अत्र सद्दृष्टान्तवारणाय सत्यन्तं । घटाद्युदासीनवारणाय विशेष्यं । व्यतिरेकदृष्टान्ताभासवारणाय

साधनानिष्ठसाध्यनिरूपितेति व्याप्तिविशेषणम्। अयं चान्वयदृष्टान्ताभास-श्चतुर्विधः । असिद्धसाध्यकः, असिद्धसाधनकः, असिद्धोभयकः, विपरीतान्वयश्चेति। तानुदाहृत्य दर्शयति—

अपौरुषेयश्शब्दोऽमूर्तत्वादिन्द्रियसुखपरमाणुघटवत् ॥ ४१ ॥

अस्मिन्ननुमाने दृष्टान्ताभासत्रयं दर्शितम् । तत्रेन्द्रियसुखमसिद्ध-साध्यकं, तस्य पौरुषेयत्वात्। परमाणुरसिद्धसाधनकः, तस्य मूर्तत्वात्। घटश्चासिद्धोभयः, तस्य पौरुषेयत्वान्मूर्तत्वाच्च। अस्मिन्नेवानुमाने चतुर्थ-मप्यन्वयदृष्टान्ताभासं दर्शयति—

विपरीतान्वयश्च यदपौरुषेयं तदमूर्तम्॥ ४२ ॥

अत्र व्याप्तेः प्रदर्शनेऽपि साधननिष्ठसाध्यनिरूपितव्याप्तेरप्रदर्शनादा-भासत्वम् । ननु समव्याप्तिसत्त्वादपौरुषेयत्वेऽप्यमूर्तत्वव्याप्तिरस्तीति तत्प्रदर्शनपरस्य दृष्टान्तस्य कथमाभासत्वमित्यत्राह—

विद्युदादिनाऽतिप्रसङ्गात् ॥ ४३ ॥

अतिप्रसङ्गादमूर्तताप्राप्तेर्विद्युदादावपौरुषेयत्वसत्त्वेऽप्यमूर्तत्वाभावात् समव्याप्तिर्नास्तीत्यपौरुषेयत्वेऽमूर्तत्वनिरूपितव्याप्तिप्रदर्शनपरस्य दृष्टा-न्ताभासत्वमुपपद्यत इति भावः। व्यतिरेकोदाहरणाभासानाह—

व्यतिरेकेऽसिद्धतद्व्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत्॥ ४४ ॥

व्यतिरेकव्याप्तिनिश्चयस्थानत्त्वाभाववत्वे सति व्यतिरेकदृष्टान्ततया अभिधीयमानत्वं व्यतिरेकदृष्टान्ताभासलक्षणम् । असिद्धसाध्यव्यति-रेकादौ दृष्टान्ते व्यतिरेकव्याप्तिनिश्चयाभावाल्लक्षणसमन्वयः। सद्व्यति-रेकदृष्टान्तवारणाय सत्यन्तम्। उदासीनवारणाय विशेष्यम्। अयमपि चतुर्विधः—असिद्धसाध्यव्यतिरेकः, असिद्धसाधनव्यतिरेकः, असिद्धो-भयव्यतिरेकः, विपरीतव्यतिरेकश्चेति । अपौरुषेयश्शब्दोऽमूर्तत्वाद्व्यति-रेकेण परमाणुवदित्युक्ते परमाणुरसिद्धसाध्यव्यतिरेकस्तस्यापौरुषेय-त्वात्। इन्द्रियसुखमसिद्धसाधनव्यतिरेकस्तस्यामूर्तत्वात्। आकाशं तु असिद्धोभयव्यतिरेकं, तस्यापौरुषेयत्वादमूर्तत्वाच्च। चतुर्थं व्यतिरेक-दृष्टान्ताभासमाह—

विपरीतव्यतिरेकश्च—यन्नामूर्तं तन्नापौरुषेयम् ॥ ४५ ॥

यन्नापौरुषेयं तन्नामूर्तमिति साध्यव्यतिरेके साधनव्यतिरेकः प्रदर्शनीयः। तथैवाविनाभावसत्त्वात्तद्विपरीततया व्याप्तिप्रदर्शनमप्याभास इत्यर्थः। बालव्युत्पत्त्यर्थं पञ्चावयवप्रयोग इत्युक्तं। तत्र प्रयोगाभासमाह—

बालप्रयोगाभासः पञ्चावयवेषु कियद्धीनता ॥ ४६ ॥

उचितानुपूर्विकत्वाभाववत्वे सति न्यायत्वेनाभिधीयमानत्वं प्रयोगाभासलक्षणम्। सन्न्यायप्रयोगवारणाय सत्यन्तम्। उदासीनवाक्यवारणाय विशेष्यम्। उचितानुपूर्वी च प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपात्तच्छून्यत्वं त्र्यवयवप्रयोगे चतुरवयवप्रयोगे विपरीतप्रयोगे चास्तीति लक्षणसङ्गतिः। उदाहरति—

अग्निमानयं देशो धूमवत्वात् यदित्थं तदित्थं यथा महानस इति ॥ ४७ ॥

अवयवत्रयप्रयोगे सतीत्यर्थः। चतुरवयवप्रयोगे तदाभासमाह—

धूमवांश्चायमिति वा ॥ ४८ ॥

अवयवविपर्ययेऽपि प्रयोगाभासमाह—

तद्विपर्ययश्च तस्मादग्निमान् धूमवांश्चायमिति ॥ ४९ ॥

उपनयानन्तरं निगमनप्रयोगे कर्तव्ये निगमनानन्तरमुपनयप्रयोगोप्याभास एव—उचितानुपूर्विकत्वाभावादित्यर्थः। ननु कथं व्युत्क्रमप्रयोगे आभासत्वमित्यत्राह—

स्पष्टतया प्रकृतप्रतिपत्तेरयोगात् ॥ ५० ॥

बालो ह्युपनयपूर्वकं निगमनं साध्यप्रतिपत्त्यङ्गं मन्यते, नान्यथा—स्पष्टतया प्रकृतस्य साध्यस्य प्रतिपत्तेरयोगादित्यर्थः। व्युत्पन्नं प्रति कियद्धीनता न प्रयोगाभास इति भावः। पक्षाभासाद्युपजनितमेवानुमानं तदाभासमित्यावेद्यागमाभासमाह—

रागद्वेषमोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् ॥ ५१ ॥

तदभाववति तत्प्रकारकत्वे सति वाक्यजन्यज्ञानत्वमागमाभास-लक्षणम्। नद्यास्तीरे मोदकराशयः सन्तीति वाक्यजन्यज्ञाने मोदक-राश्यभाववति मोदकराशिप्रकारकत्वाल्लक्षणसङ्गतिः। आप्तवाक्यजन्य-ज्ञानवारणाय सत्यन्तम्। इदं रजतमित्यादिभ्रमरूपप्रत्यक्षाभासवारणाय विशेष्यम्। तच्चागमाभासं त्रिविधम्—रागजनितवाक्यजन्यं, द्वेषजनित-वाक्यजन्यं, मोहजनितवाक्यजन्यं चेति। तत्राद्यद्वयमुदाहरति—

यथा नद्यास्तीरे मोदकराशयस्सन्ति धावध्वं माणवकाः ॥ ५२ ॥

यदा रागाक्रान्तः पुरुषः क्रीडावशीकृतचित्तः क्रीडार्थमिदं वाक्य-मुच्चारयति—तदा रागजनितवाक्यजन्यत्वम्। यदा कश्चित्कार्ये प्रवृत्तो माणवकैराकुलीकृतचित्तस्तत्सङ्गपरिजिहीर्षया द्वेषेण तदुच्चाटनायेदं वाक्यं प्रयुङ्क्ते तदैतद्वाक्यजन्यज्ञानस्य द्वेषजनितवाक्यजन्यत्वम्। तृतीयमुदाहरति—

अङ्गुल्यग्रे हस्तियूथशतमास्त इति च ॥ ५३ ॥

सर्वं सर्वत्र वर्तत इति साङ्ख्यमोहजन्यैतद्वाक्यजन्यज्ञानं मोहजनित-वाक्यजन्यम्। ननूक्तानां त्रिविधवाक्यजन्यज्ञानानां कथमाभासत्व-मित्यत्राह—

विसंवादात् ॥ ५४ ॥

तदभाववति तत्प्रकारकत्वादित्यर्थः। प्रमाणसामान्याभासं तद्विशे-षाभासं च निरूप्याधुना सङ्ख्याभासमाह—

प्रत्यक्षमेवैकं प्रमाणमित्यादि सङ्ख्याभासम् ॥ ५५ ॥

प्रत्यक्षत्वपरोक्षत्वप्रयुक्तद्वित्वसङ्ख्यातिरिक्तसङ्ख्यात्वं सङ्ख्याभासस्य लक्षणम्। प्रत्यक्षमेवैकं प्रमाणमित्यादिचार्वाकाद्यभिमतसङ्ख्याया निरुक्त-सङ्ख्यातिरिक्तसङ्ख्यात्वसत्त्वाल्लक्षणसङ्गतिः। सङ्ख्याभासस्त्रिविधः—न्यूनसङ्ख्या, समसङ्ख्याऽधिकसङ्ख्या चेति। तत्र चार्वाकाभिमता न्यून-सङ्ख्या, सौगताभिमता समसङ्ख्या, साङ्ख्याभिमताऽधिकसङ्ख्या चेति बोध्यम्। चार्वाकाभिमतसङ्ख्यायाः कथमाभासत्वमित्यत्राह—

लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य
परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात् ॥ ५६ ॥

अतद्विषयत्वात् प्रत्यक्षाविषयत्वादित्यर्थः । स्वाभिमतार्थासाधक-स्वाभिमतप्रमाणकत्वं हि प्रमाणसङ्ख्यायामाभासत्वम् । तत्र चार्वाकाभिमतेन प्रत्यक्षरूपैकप्रमाणेन चार्वाकाभिमतपरलोकनिषेधस्य परबुद्धेश्चासिद्धेरेकत्वसङ्ख्याया आभासत्वं, परलोकस्य प्रत्यक्षाविषत्वेन तन्निषेधस्यापि तदविषयत्वात् । प्रतियोगिनोऽप्रत्यक्षत्वेऽभावस्य प्रत्यक्षासम्भवात् । अन्यथा पिशाचाद्यभावस्यापि प्रत्यक्षापत्तेः । एवं परबुद्धिरपि प्रत्यक्षेण न गृह्यते । अन्यज्ञानस्यान्यदीयप्रत्यक्षाविषयत्वात् । अन्यथा तदीयवचनादिकमनपेक्ष्यैवायं पण्डित इति ग्रहणापत्तेरिति भावः । न्यूनसङ्ख्याया आभासत्वं दर्शयित्वासमाधिकसङ्ख्ययोरप्याभासत्वं दृष्टान्ततया दर्शयति—

सौगतसांख्ययौगप्राभाकरजैमिनीयानां प्रत्यक्षानुमाना-
गमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत् ॥ ५७ ॥

यथा सौगतसाङ्ख्यप्राभाकरजैमिनीयानां मते प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैः प्रमाणैरेकैकाधिकैर्व्याप्तिर्न सिध्यति, व्याप्तेरनुमानाद्यविषयत्वात् । तथा स्वर्गादिपरलोकधर्माधर्मादिनिषेधोऽन्यबुद्धिश्च चार्वाकस्य प्रत्यक्षेण न सिध्यतीति सौगताद्यभिमतद्वित्वादिसङ्ख्यायाः स्वाभिमतप्रमाणाविषयस्वमतसिद्धपदार्थकत्वरूपाभासत्ववच्चार्वाकानुमतैकत्व – सङ्ख्याया अप्याभासत्वं दुर्वारमित्यर्थः । स्वाभिमतप्रत्यक्षेण परबुद्ध्यादेरसिद्धिरित्यर्थः । ननु प्रत्यक्षेण परबुद्ध्यादेरसिद्ध्यप्यनुमानादितस्तत्सिद्धिरस्त्वित्यत आह—

अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वम् ॥ ५८ ॥

तच्छब्देन परबुद्ध्यादिरभिधीयते । अनुमानादेः परबुद्ध्यादिविषयत्वे प्रत्यक्षैकप्रमाणवादो हीयत इत्यर्थः । चार्वाकस्य स्वाभिमतप्रमाणसङ्ख्याव्याघाते सौगतादीनां स्वाभिमतप्रमाणसङ्ख्याव्याघातं दृष्टान्तत्वेनाह—

तर्कस्यैव व्याप्तिगोचरत्वे प्रमाणान्तरत्वमप्रमाणस्याव्यवस्थापकत्वात् ॥ ५९ ॥

सौगतादीनामिति शेषः। यथा सौगतादीनां तर्केण प्रमाणसङ्ख्याव्याघातस्तथा चार्वाकस्यानुमानादिना प्रमाणसङ्ख्याव्याघातो दुर्वार इत्यर्थः। ननु परबुद्धेरनुमानेन सिद्धावपि न चार्वाकस्य स्वाभिमतसङ्ख्याव्याघातः, अनुमानस्य तन्मते प्रत्यक्षेऽन्तर्भावाङ्गीकारात्। तथा सौगतादीनां तर्केण व्याप्तिसिद्धावपि न तत्तदभिमतसङ्ख्याव्याघातस्तर्कस्यानुमानादिष्वन्तर्भावादित्यत्राह—

प्रतिभासादिभेदस्य च भेदकत्वात् ॥ ६० ॥

यथा चार्वाकेण चाक्षुषरासनादिप्रत्यक्षभेदो घटं पश्यामि रसमास्वादयामीति प्रतिभासभेदादभ्युपगम्यते तथा घटं पश्यामि, वह्निमनुमिनोमीति प्रतिभासभेदात्प्रत्यक्षानुमानयोरपि भेद आवश्यक इति चार्वाकस्य प्रमाणसङ्ख्याविघटनं भवति। एवं सौगतादिभिः प्रत्यक्षानुमानादिभेदो यथा प्रतिभासभेदादभ्युपगम्यते तथा तर्कप्रत्यक्षाद्योरपि तैर्भेदः स्वीकर्तव्यः—तर्कयामि, पश्यामीति प्रतिभासभेदात्। एवं च सौगतादीनामपि प्रमाणसङ्ख्याविघटनं दुष्परिहरमित्यर्थः। अथ विषयाभासमाह—

विषयाभासस्सामान्यं विशेषो द्वयं वा स्वतन्त्रम् ॥ ६१ ॥

परस्परतादात्म्यापन्नसामान्यविशेषातिरिक्तविषयत्वं विषयाभासलक्षणम्। स च विषयाभासस्त्रिविधः—केवलसामान्यं, केवलविशेषः, स्वतन्त्रमुभयं चेत्यर्थः। कथं तेषां तदाभासतेत्यत्राह—

तथाऽप्रतिभासनात्कार्याकरणाच्च ॥ ६२ ॥

येन रूपेण सत्सामान्यादिकं ब्रह्माद्वैतिप्रभृतिभिरभ्युपगतं तेन रूपेणाप्रतिभासनात्, प्रत्यक्षादिप्रमाणाविषयत्वात्, कार्याकरणात्—कार्यरूपेण परिणममानत्वाभावादित्यर्थः। केवलसामान्यादेः प्रत्यक्षाद्यगोचरत्वं च विषयविचारावसर एवाभिहितमिति नेह प्रतन्यते– ननु सत्सामान्यस्य परिणामित्वरूपं कार्यकरणं कुतो न सम्भवति? सत्सामा-

न्यादिकं कार्योत्पादासमर्थं तत्समर्थं वेति विकल्पाद्ये दूषणमाह—

स्वयमसमर्थस्याऽकारकत्वात्पूर्ववत् ॥ ६३ ॥

यदि सामान्यादिकं कार्योत्पादासमर्थं तदा कार्यकारि न स्यात्, असमर्थस्य कार्यजनकत्वायोगात् । अन्यथा प्रागभावावस्थायामपि कार्यजनकतापत्तेरित्यर्थः । द्वितीयपक्षे दूषणमाह—

समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥ ६४ ॥

यदि सामान्यादिकं समर्थमेव कार्यकारि तदा सर्वदा सर्वकार्याणामुत्पत्तिः स्यात्परानपेक्षत्वादित्यर्थः । नन्वनपेक्षत्वादिति हेतुरसिद्धः, सामान्यादेः कार्योत्पादने सहकारिसान्निध्यापेक्षत्वात् । एवं च कार्योत्पादने स्वयं समर्थमपि यदा सहकारिसान्निध्यलाभस्तदा कार्यकारि, नान्यदेति । सर्वदा कार्योत्पत्तिप्रसङ्ग इत्याशङ्क्य परिहरति—

परापेक्षणे परिणामित्वमन्यथा तदभावात् ॥ ६५ ॥

सहकारिवियुक्तावस्थायां ब्रह्मप्रधानादिकस्य कार्यजनकत्वे सहकारिसमवधानवैयर्थ्यापत्त्या तद्दशायां सामान्यं कार्यजनकमभ्युपगन्तव्यम् । एवं सहकारिसमवधानदशायामपि कार्याजनकत्वे [1]कार्योत्पत्त्यनुपपत्त्या तद्दशायां कार्यजनकमङ्गीकार्यम् । एवं च सहकारिसमवधानात्पूर्वं विद्यमानं कार्यजनकत्वं परित्यज्य सहकारिसमवधानदशायां कार्यजनकत्वस्वीकाराद्द्रव्यरूपेणावस्थानाच्च परिणामित्वमवर्जनीयं । परिणामस्य पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणत्वादित्यर्थः । अन्यथा तदभावादिति । यदि परिणामित्वं न स्यात्तदा पूर्वाकारत्यागाभावादुत्तराकारस्वीकाराभावात् [2]पूर्ववदकारकत्वाविशेषात् कार्यकारित्वं न स्यात् । क्षणिकस्य तु सर्वथा कार्यकाले स्वयमसत्त्वादेव कार्यकारित्वाभावप्रसङ्ग इत्यर्थः । अथ फलाभासमाह—

फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥ ६६ ॥

प्रमाणाद्भिन्नाभिन्नफलव्यतिरिक्तत्वे सति फलत्वेन व्यवहारविषयत्वं फलाभासलक्षणम् । वास्तवफलवारणाय सत्यन्तम् । घटादिवारणाय

---

[1] कार्योत्पत्त्यनुत्पत्त्या (ख). [2] पूर्ववदजनककारकत्वाविशेषात् (ख).

विशेष्यम् । तच्च फलाभासं द्विविधं-केवलाभिन्नं केवलाभिन्नं चेति । तत्राऽभिन्नस्य फलस्याभासतां विवृणोति—

अभेदे तद्व्यवहारानुपपत्तेः ॥ ६७ ॥

प्रमाणफलयोस्सर्वथाऽभेदे इदं प्रमाणमिदं फलमिति विलक्षणव्यवहारानुपपत्तेरित्यर्थः । ननु विलक्षणव्यवहारो हि क्वचिद्धर्मिभेदाद्भवति यथा घटः पट इति, क्वचिद्धर्म्यैक्येऽपि धर्मभेदात् भवति—घटो द्रव्यमिति । एवं च प्रमाणफलयोरैक्येऽप्यप्रमाणाद्व्यावृत्तिविशिष्टत्वेन प्रमाणमिति व्यवहारस्याफलाद्व्यावृत्तिविशिष्टत्वेन फलमिति व्यवहारस्य चोपपत्तिरिति सौगतशङ्कां निराकरोति—

व्यावृत्त्यापि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसङ्गात् ॥ ६८ ॥

अत्र दृष्टान्ततया दूषणान्तरमाह—

प्रमाणाद्व्यावृत्त्येवाऽप्रमाणत्वस्य ॥ ६९ ॥

धर्म्यैक्येपि व्यावृत्तिभेदाद्विलक्षणव्यवहारोपपादने प्रत्यक्षेऽनुमानरूपप्रमाणव्यावृत्तेस्सत्त्वात्प्रत्यक्षमप्रमाणमिति व्यवहारप्रसङ्गः । एवं प्रत्यक्षफलेऽनुमानफलव्यावृत्तिसत्त्वात्प्रत्यक्षफलमफलमिति व्यवहारप्रसङ्गश्चेत्यर्थः ॥

तस्माद्वास्तवोऽभेदः ॥ ७० ॥

ननु प्रमाणत्वरूपसामान्यधर्मावच्छिन्नव्यावृत्तिसत्त्वेऽप्रमाणमिति व्यवहार आपादयितुं शक्यते; न तु प्रत्यक्षेऽनुमानव्यावृत्तिसत्त्वे, तादृशव्यावृत्तेः प्रत्यक्षमनुमानं न भवतीत्येव व्यवहारापादकत्वात् । एवं फलत्वरूपसामान्यधर्मावच्छिन्नभेदसत्त्व एवाफलमिति व्यवहारापादनसम्भव इति चेन्न—प्रमाणफलत्वरूपसामान्यधर्मस्य सौगतैरस्वीकारेण तैरेवं रीत्या परिहारस्य वक्तुमशक्यत्वात्सामान्यधर्मस्वीकारे च विशेषैकान्तवादभङ्गप्रसङ्गादिति भावः । एतावता प्रमाणफलयोस्सर्वथाऽभेद इति पक्षं दूषयित्वा सर्वथा भेद इति पक्षं दूषयति—

भेदे त्वात्मान्तरवत्तदनुपपत्तेः ॥ ७१ ॥

यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्युपेक्षते चेति प्रतीतेः प्रमातृरूपेणाभेदस्य सिद्धत्वेऽपि तादृशमभेदमपलप्य सर्वथा भेदो यदि स्वीक्रियते तदा चैत्रात्मसमवेतज्ञानं प्रति तद्गतप्रमितिरेव फलं, न तु मैत्रादिसमवेतप्रमितिरिति व्यवस्थानुपपत्तिः, द्वयोरपि प्रमित्योः प्रमाणाद्भिन्नत्वाविशेषान्नियामकान्तरस्य चाभावादित्यर्थः ॥

ननु तद्गतप्रमितितदन्यगतप्रमित्योर्द्वयोरपि तद्गतप्रमाणाद्भिन्नत्वाविशेषेऽपि तद्गतप्रमाणं प्रति तद्गतप्रमितिरेव फलमित्यत्र सामानाधिकरण्यमेव नियामकम् । अन्यगतप्रमितेरन्यगतप्रमाणसामानाधिकरण्याभावादिति नैयायिकाशङ्कां निराकरोति—

समवायेऽतिप्रसङ्गः ॥ ७२ ॥

प्रमाणफलभावनियामकीभूतं सामानाधिकरण्यं न येन केनचित् सम्बन्धेनाऽन्यात्मगतप्रमितेरपि स्वविषयकेश्वरज्ञानविषयत्वसम्बन्धेन चैत्रात्मनि सत्त्वेन तद्गतप्रमाणं प्रति फलत्वापत्तेः । अतः समवायेन प्रमाणाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वरूपं समवायघटितसामानाधिकरण्यमेव नियामकं वाच्यं—एवमप्यतिप्रसङ्गो दुर्वारः । अन्यात्मसमवेतप्रमितेरपि चैत्रात्मनि समवायेन सत्त्वात् । तन्मते समवायस्यैकत्वादिति भावः ॥

नव्यास्तु-समवायस्य नानात्वान्नायमतिप्रसङ्गो दोष इति वदन्ति । अत्रोच्यते-धूमो वह्निव्याप्य इति व्याप्तिज्ञानं प्रमाणं, पर्वतो वह्निमानित्यनुमितिः फलमिति हि भवतां मर्यादा, सा न युक्ता-चैत्रस्य व्याप्तिज्ञानानन्तरं यद्घटादिज्ञानं जायते तस्यापि तत्फलत्वापत्तेः सामानाधिकरण्यस्य सत्त्वात् । न च प्रमाणभूतव्याप्तिज्ञानजन्यत्वमेव तत्फलत्वे नियामकं, घटादिज्ञानस्य च व्याप्तिज्ञानजन्यत्वाभावान्न फलत्वापत्तिरिति वाच्यं-एवमपि परामर्शस्य व्याप्तिज्ञानजन्यतया फलत्वापत्तेः । न च परामर्शद्वारा व्याप्तिज्ञानजन्यत्वं नियामकमिति नातिप्रसङ्ग इति वाच्यं—एवमपि परामर्शप्रत्यक्षस्य फलत्वापत्तेः । प्रत्यक्षे विषयस्य कारणत्वेन तस्य परामर्शजन्यत्वात् । न च परामर्शप्रत्यक्षस्य परामर्शजन्यत्वमेव, न तु

तद्द्वारा व्याप्तिज्ञानजन्यत्वमपीति वाच्यं-अनुमितेरपि परामर्शजन्यत्वमेव व्याप्तिज्ञानजन्यत्वं नास्तीत्यस्यापत्तेः। न च व्याप्तिज्ञानजन्यत्वे सत्यनुमितित्वमेव फलत्वे नियामकमिति वाच्यं-अनुमितित्वस्य व्याप्तिज्ञानजन्यज्ञानत्वरूपतया परामर्शप्रत्यक्षेऽपि तत्सत्त्वात्। न चानुमितित्वं जातिविशेष इति वाच्यं-भवदभिमतजातेः प्रागेव निरस्तत्वादिति। इदानीं निरूपितयोः प्रमाणतदाभासयोर्ज्ञानस्य जयपराजयव्यवस्थारूपं फलं दर्शयति—

**प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतापरिहृतदोषौ वादिनस्साधनतदाभासौ प्रतिवादिनो दूषणभूषणे च ॥ ७३ ॥**

वादिप्रतिवादिसभ्यसभापतिलक्षणचतुरङ्गवादमुररीकृत्य प्रमाणतदाभासस्वरूपपरिज्ञानवता वादिना सम्यक्प्रमाणे स्वपक्षसाधनायोपन्यस्ते तत्र च प्रतिवादिना दोषे उद्भाविते वादिना च परिहृते वादिनः स्वपक्षसाधकत्वाद्विजयः, प्रतिवादिनः पराजयश्च प्रमाणेन जायते। प्रतिवाद्युद्भावितदोषपरिहारविशिष्टप्रमाणस्य वादिविजयं प्रति प्रतिवादिपराजयं प्रति च कारणत्वात्। प्रमाणतदाभासस्वरूपपरिज्ञानशून्येन वादिना प्रमाणाभासे स्वपक्षसाधनायोपन्यस्ते प्रतिवादिना तत्रोद्भाविते दोषे वादिनाऽपरिहृते वादिनः पराजयः, प्रतिवादिनो जयश्च भवति। अपरिहृतदोषस्य प्रमाणाभासोपन्यासस्य वादिपराजयं प्रति प्रतिवादिजयं प्रति च कारणत्वात्। •वस्तुतस्तु तत्पक्षसाधकप्रमाणप्रतिपादकपुरुषगतजयं प्रति तत्पक्षदूषकपुरुषगतपराजयं प्रति च तत्पक्षसिद्धेः कारणत्वम्। एवं तत्पक्षसाधकप्रमाणाभासप्रतिपादकपुरुषगतपराजयं प्रति [1]तत्पक्षदूषकपुरुषगतजयं प्रति च तत्पक्षासिद्धेः कारणत्वम्। वादिना सत्प्रमाणप्रतिपादनस्थले वादिजयप्रतिवादिपराजययोर्वादिना प्रमाणाभासप्रतिपादनस्थले वादिपराजयप्रतिवादिजययोरुपपत्तेः॥

अत्र प्राचीननैयायिकाः—छलजातिनिग्रहस्थानैरेव जयपराजयव्यवस्था। तत्रार्थविकल्पप्रयुक्तवचनखण्डनं छलम्। यथा-नवकम्बलोऽयं देवदत्त इति नूतनकम्बलाभिप्रायेण वादिनोक्ते एककम्बलमात्रवतोऽस्य नवकम्बलाः कुत इति नवत्वसङ्ख्याभिप्रायेण खण्डनम्। तथा चाश्रय-

---

[1] तत्पक्षदूषकदूषकपुरुषगत (ख).

तासम्बन्धेन पराजयं प्रति च्छलस्य प्रतिपादकतासम्बन्धेन कारणत्वादुक्तच्छलवक्तुः पराजयो भवति। एवं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः। यथा-आत्मा क्रियावान् क्रियाहेतुभूतसंयोगाश्रयत्वाद्घटवदिति साधर्म्येण प्रतिपादिते आत्मा निष्क्रियो विभुद्रव्यत्वादाकाशवदिति साधर्म्येण प्रत्यवस्थानं जातिः। अत्र विभुत्वान्निष्क्रियत्वसिद्धावपि क्रियाहेतुगुणाश्रयत्वे क्रियावत्वनिरूपितव्याप्तेर्विच्छेदाभावेनेयं जातिर्दूषणाभास इत्याश्रयतासम्बन्धेन पराजयं प्रति प्रतिपादकतासम्बन्धेन हेतुर्भवति। एवं प्रतिज्ञाहान्याद्यन्यतमं निग्रहस्थानम्। यथा-अनित्यः शब्दः, ऐन्द्रियकत्वाद्घटवदित्युक्ते, तत्र परेण घटत्वादावनित्यत्वरूपसाध्याभाववत्यैन्द्रियकत्वसत्त्वाद्व्यभिचार इति व्यभिचारे उद्भाविते तर्हि घटत्वादिव देवदत्तशब्दोऽपि नित्योऽस्त्विति स्वप्रतिज्ञातार्थस्य शब्दानित्यत्वस्य त्यागः प्रतिज्ञाहानिः। अस्याप्याश्रयतासम्बन्धेन निग्रहं प्रति प्रतिपादकतासम्बन्धेन हेतुत्वमिति वदन्ति। तन्न-नवकम्बलोऽयं देवदत्त इति वाक्ये नूतनकम्बलाभिप्रायेण प्रयुक्ते नवत्वस्य सङ्ख्याभिप्रायेण खण्डनस्य पराजयहेतुत्वे वादिवाक्यं विकल्प्य दूषयतोऽपि पराजयप्रसङ्गः। अनेकार्थं पत्रवाक्यं व्याचक्षाणस्य पराजयापत्तिश्च। अतो वादिप्रतिवादिनोर्विवादविषयीभूतपक्षसिद्ध्यसिद्ध्योरेव जयपराजयव्यवस्थाहेतुत्वं, न तु च्छलजातिनिग्रहस्थानानामिति बोध्यम्। अत एव नव्यनैयायिकैः स्याद्वादिमतरीत्यैव [1] पक्षसिद्ध्यसिद्ध्योरेव जयपराजयहेतुत्वमङ्गीकृतं न तु च्छलादीनामिति।

ननु प्रमाणतदाभासवन्नयतदाभासयोरपि वक्तव्यतया तदकथनान्न्यूनता। न च नयतदाभासयोरवश्यवक्तव्यत्वाभावान्न न्यूनता। अवश्यवक्तव्यार्थाकथनस्यैव न्यूनताशब्दार्थत्वादिति वाच्यं—प्रमाणतदाभासयोरिव नयतदाभासयोरपि विनेयानां व्युत्पत्तिप्रयोजकत्वेनावश्यवक्तव्यत्वानपायादित्यत्राह—

सम्भवदन्यद्विचारणीयम् ॥७४॥

सम्भवद्विद्यमानं प्रमाणतदाभासस्वरूपादन्यं नयतदाभासस्वरूपं शास्त्रान्तरप्रसिद्धमस्मिन्नपि शास्त्रे नयतदाभासविचारदक्षैर्विचारणीयम्।

---

1 इष्टपक्षसिद्ध्यसिद्ध्योरेव (ख).

अस्य सूत्रस्य दिङ्मात्रप्रदर्शनपरत्वादित्यर्थः। तत्र द्रव्यपर्यायोभयाविषयकत्वे सति तदन्यतरविषयकज्ञानत्वं नयसामान्यलक्षणम्। द्रव्यमात्रविषयके द्रव्यार्थिकनये पर्यायमात्रविषयके पर्यायार्थिकनये चोभयाविषयकत्वस्यान्यतरविषयकत्वस्य च सत्त्वाल्लक्षणसङ्गतिः। प्रमाणवारणाय सत्यन्तम्। घटादिवारणाय विशेष्यम्। न च निर्विशेषब्रह्मज्ञानादिरूपनयाभासेऽतिव्याप्तिरिति वाच्यं--भ्रमान्यत्वे सतीति विशेषणात्। निर्विशेषब्रह्मज्ञानादेर्भ्रमत्वेन वारणात्। न च जीवगुणस्सुखमिति ज्ञानरूपे नैगमेऽव्याप्तिः, तस्य द्रव्यपर्यायोभयविषयकत्वेन तदुभयाविषयकत्वविरहादिति वाच्यं—उभयाविषयकत्वमित्यस्योभयनिष्ठमुख्यविशेष्यताशून्यत्वमित्यर्थात्। जीवगुणस्सुखमित्यत्र जीवस्य मुख्यविशेष्यत्वाभावात्सुखी जीव इत्यत्र सुखस्य तथात्वाभावेनोभयविधेऽपि नैगमेऽव्याप्तिविरहात्। अयं च नयो द्विविधः—द्रव्यार्थिकनयः, पर्यायार्थिकनयश्चेति। तत्र द्रव्यविषयकनयत्वं द्रव्यार्थिकनयस्य लक्षणम्। पर्यायविषयकनयत्वं च पर्यायार्थिकनयस्य लक्षणम्। न च नैगमे सुखादिपर्यायविषयकत्वसत्त्वादतिव्याप्तिरिति वाच्यं—द्रव्याविषयकत्वे सति पर्यायविषयकनयत्वस्य तल्लक्षणत्वेन, नैगमे द्रव्याविषयकत्वविरहेणातिव्याप्त्यभावात्। द्रव्यार्थिकनयस्त्रिविधः—नैगमसंग्रहव्यवहारभेदात्। तत्र परस्परविशेष्यविशेषणभावापन्नधर्मधर्म्युभयविषयकनयत्वं नैगमस्य लक्षणम्। जीवगुणस्सुखम्। सुखी जीव इत्युभयविधेऽपि नैगमे उक्तलक्षणं स्पष्टम्। नैकमनेकं गमो विषयो यस्य स नैगमः। अनेकविषयक इत्यर्थः। विशेषणविशेष्यभावेन धर्मधर्म्युभयविषयक इति यावत्। न च नैगमस्य द्रव्यपर्यायोभयविषयकतया प्रमाणत्वापत्तिरिति वाच्यं — प्राधान्येनोभयविषयकज्ञानस्य प्रमाणत्वात्, गुणप्रधानभावेनोभयविषयकज्ञानस्य नयत्वादिति। धर्मधर्मिणोः सर्वथा भेदज्ञानं नैगमाभासः। तयोस्सर्वथाभेदे धर्मधर्मिभावस्यैवासंभवात्; समवायस्य च निराकृतत्वात्।

अनेकभेदाश्रयवस्तुगतसामान्यनिष्ठैकत्वविषयकज्ञानं सङ्ग्रहः। समित्यस्यैकत्वार्थकत्वेन ग्रहधातोश्च ज्ञानार्थकत्वेन सङ्ग्रहशब्देनैकत्वप्रकारकज्ञानलाभात्। स द्विविधः--परोऽपरश्च। तत्र सकलभावानां सदात्मकत्वेनैकत्वविषयकज्ञानं परसङ्ग्रहः। सत्ताद्वैतज्ञानं तदाभासः। द्रव्यत्वादिनाऽशेषद्रव्याणामेकत्वज्ञानं, तथा घटत्वादिना सकलघटव्यक्तीनामेकत्वज्ञानं चापरसङ्ग्रहः। सामान्यविशेषयोः सर्वथा भेदज्ञानमभेदज्ञानं वाऽपरसङ्ग्रहाभासः।

सामान्यधर्मावच्छिन्नविशेष्यकतद्व्याप्तिविरुद्धनानाधर्मप्रकारकज्ञानं व्यवहारः, सङ्ग्रहगृहीतार्थानां विधिपूर्वकमवहरणं विभजनं व्यवहार इति निरुक्तेः। स द्विविधो द्रव्यं पर्यायश्चेत्याकारकज्ञानरूपे व्यवहारे परसङ्ग्रहसङ्गृहीतसत्त्वरूपसामान्यधर्मावच्छिन्नविशेष्यकत्वस्य सत्त्वव्याप्यपरस्परविरुद्धद्रव्यत्वपर्यायत्वरूपनानाधर्मप्रकारकज्ञानत्वस्य च सत्त्वाल्लक्षणसङ्गतिः। द्रव्यं द्विविधं—जीवोऽजीवश्च। पर्यायो द्विविधः—सहभावी क्रमभावी चेत्याद्यपरसङ्ग्रहेष्वप्युक्तलक्षणं सङ्गमनीयम्। अयं चापरसंग्रहव्यवहारप्रपञ्चः परसंग्रहादुत्तरः प्रागृजुसूत्रात्प्रतिपत्तव्यः; सर्वस्य वस्तुनः कथंचित्सामान्यविशेषात्मकत्वसम्भवात्। यद्यपि जीवस्सुखीत्यादिनैगमे जीवत्वरूपसामान्यधर्मावच्छिन्नविशेष्यकत्वे सति जीवत्वव्याप्यसुखादिप्रकारकत्वमस्ति। तथापि परस्परविरुद्धनानाधर्मप्रकारकत्वाभावान्न तत्रातिव्याप्तिरिति बोध्यम्। काल्पनिकद्रव्यपर्यायभेदविषयकज्ञानं व्यवहाराभासः। काल्पनिकार्थानां प्रमाणबाधितत्वेन बाधितार्थविषयकज्ञानस्य भ्रमत्वात्। द्रव्यपर्यायविभागस्य काल्पनिकत्वे खपुष्पवदर्थक्रियाकारित्वाभावप्रसङ्गात्। न च व्यवहारस्सर्वोऽपि बाधितार्थविषयक एव, व्यवहारस्यासत्यत्वादिति वाच्यं—द्रव्यपर्यायभेदविषयकानां प्रमाणानां स्वप्नार्थभेदविषयकज्ञानानामिव प्रामाण्याभावप्रसङ्गात्। उक्तं च—

व्यवहारानुकूल्यात्तु प्रमाणानां प्रमाणता।
नान्यथा बाध्यमानानां ज्ञानानां तत्प्रसङ्गतः॥ इति॥

द्रव्यतदभावोभयाविषयकत्वे सति वर्तमानपर्यायविषयकज्ञानं ऋजुसूत्रः। ऋजु प्राञ्जलं वर्तमानक्षणमात्रं सूत्रयतीति व्युत्पत्तेः। सुखक्षणः सम्प्रत्यस्तीत्यादि ऋजुसूत्रे उक्तलक्षणं सङ्गमनीयम्। प्रमाणवारणाय द्रव्याविषयकत्वस्य ऋजुसूत्राभासवारणाय द्रव्याभावविषयकत्वस्य च निवेशः। घटादिवारणाय विशेष्यदलम्। क्षणिकवाद ऋजुसूत्राभासः।

कालकारकलिङ्गसङ्ख्यासाधनोपग्रहभेदप्रयुक्तार्थभेदविषयकज्ञानं—शब्दनयः। कालादिभेदेन भिन्नमर्थं शपतीति शब्द इति व्युत्पत्तेः। अभूद्भवति भविष्यतीति कालभेदेनैकोप्यर्थो भिद्यते। अन्यथाऽतीतत्वाद्यनुपपत्तेः। तथा करोति क्रियत इति कर्तृकर्मादिकारकभेदेन। अन्यथा कर्त्रादिशब्दवाच्यत्वानुपपत्तेः। एवं कलत्रं भार्येति लिङ्गभेदेनापि। अन्यथा लिङ्गभेदानुपपत्तेः। न च कालभेदेनार्थस्य भेदे क्षणरूपकालभेदेनाप्यर्थभेदापत्त्या क्षणिकवादापत्तिरिति वाच्यं—कालभेदेन तत्तत्पर्यायविशिष्टार्थभेदेऽपि द्रव्यरूपेणाभेदसत्त्वात् क्षणिकवादप्रसक्त्यभावात्।

ननु कालकारकयोरर्थपर्यायतद्भेदेनार्थभेदोपपत्तावपि लिङ्गस्य शब्दधर्मत्वेनार्थधर्मत्वाभावात् कथं लिङ्गभेदेनार्थभेदः। यत्तु स्त्रीत्वपुंस्त्वादिकत्वं योनिमत्वशिश्नवत्वादिरूपमर्थधर्म एव। अत एवाजवत्यप्यजा नास्तीत्युक्ते योनिविशिष्टा जाया एव निषेधः प्रतीयते। अत्र स्त्रीप्रत्ययेन योनिमत्वबोधनात्। अन्यथाऽजत्वरूपजात्यवच्छिन्नस्य तत्रासत्त्वेनाजा नास्तीति निषेधानुपपत्तिरिति। तन्न—कुटी कुम्भः कुड्यमित्यादौ लिङ्गप्रतीत्यनुपपत्तेः कुट्यादौ योन्यादिविरहात्। न च तत्र लिङ्गप्रतीतिरेव नास्तीति वक्तुं युक्तमनुभवापलापापत्तेरिति। अत्रोच्यते—इयमिति व्यवहारहेतुभूतो धर्मविशेषः स्त्रीत्वम्। अयमिति व्यवहारहेतुभूतधर्मः पुंस्त्वम्। इदमिति व्यवहारहेतुधर्मो नपुंसकत्वम्। अनन्तधर्मात्मके वस्तुन्युक्तधर्माणां सम्भवात्। न चैतादृशधर्माणां स्वीकारे प्रमाणाभास इति वाच्यं—इयमित्युक्ते कुम्भकुड्यादिभ्यो व्यावृत्तस्य कुटीलताललनादिष्वनुवृत्तस्य धर्मविशेषस्य खण्डमुण्डादिष्वनुगतस्य गोत्वस्येव प्रतीतिसिद्धत्वात्। अयमित्युक्ते कुटीकुड्यादिभ्यो व्यावृत्तस्य कुम्भस्तम्भादिष्वनुगतस्य धर्मविशेषस्येदमित्युक्ते कुटीकुम्भादिभ्यो व्यावृत्तस्य कुण्डकुड्यादिष्वनुवृत्तस्य धर्मविशेषस्याऽनुभवसिद्धत्वाच्च। अतो लिङ्गस्यार्थधर्मत्वात्तद्भेदेनार्थभेदोपपत्तिः। एवं दाराः कलत्रमिति सङ्ख्याभेदेनाप्यर्थभेदः सङ्ख्येयभेदाभावे सङ्ख्याभेदानुपपत्तेः। अथाप्यभेदे पटास्तन्तव इत्यत्राप्येकत्वापत्तेः। एवं भवति, भवसि, भवामीति साधनभेदेनाप्यर्थभेदः। अन्यथा एकस्यान्ययुष्मदस्मदर्थनिष्पाद्यमानशब्दवाच्यतानुपपत्तेरहं पचामि, त्वं पचसीत्यादिवत्। तथा संतिष्ठते प्रतिष्ठत इत्युपसर्गभेदेनाप्यर्थभेदः। अन्यथा प्रहरति विहरतीति प्रहारविहरणक्रिययोरप्यभेदप्रसङ्गात्।

अत्र वैयाकरणाः—कालभेदेनार्थभेदो न युक्तः—विश्वदृश्वास्य पुत्रो भवितेत्यत्र विश्वं दृष्टवान् विश्वदृश्वेत्यतीतकालविशिष्टार्थस्य भवितेति भविष्यत्कालविशिष्टार्थेनाभेदप्रतीतेः। तथा करोति क्रियत इति कारकभेदेऽपि नार्थभेदः। चैत्रेण घटः क्रियते। घटो जलाहरणं करोतीत्येकस्यैव घटस्य कर्मत्वकर्तृत्वयोः प्रतीतेः। एवं लिङ्गसङ्ख्याभेदेपि नार्थभेदः। पुष्यस्तारकेत्यत्र लिंगभेदेप्यभेदस्यापोम्भ इत्यत्र संख्याभेदेप्यभेदस्य च प्रतीतेः। तथा साधनभेदेऽपि नार्थभेदः। एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पितेत्यत्र साधनभेदेप्यर्थाऽभेदात्। प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्चेत्यभिधानात्। तथोपसर्गभेदेऽपि नार्थभेदः—सन्तिष्ठते प्रतिष्ठत इत्यत्रोपसर्गभेदेप्यर्थाभेदादिति वदन्ति। तन्न—विश्व-

इश्वास्य पुत्रो भवितेत्यत्रातीतकालस्याविवक्षितत्वात्। भाविनः पुत्रस्यातीतकालसम्बन्धासम्भवेन तत्कालविवक्षायाः कर्तुमशक्यत्वात्। चैत्रेण घटः क्रियत इत्यादौ घटस्य द्रव्यरूपेणाभेदेऽपि कर्मत्वरूपपर्यायभेदेन भेदस्यापि सत्त्वात्। द्रव्यपर्याययोर्भेदाभेदस्य व्यवस्थापितत्वात्। एतेन लिंगसङ्ख्याभेदेनार्थभेद उपपादितो भवति। लिंगयोः संख्ययोश्च भेदस्य सर्वसम्मततया तद्भेदस्यैवार्थभेदस्वरूपत्वात्। एवं साधनोपग्रहभेदेनाप्यर्थभेद ऊह्य इति। सर्वथाऽर्थभेदं विना शब्दभेदकथनं शब्दनयाभासः।

पर्यायभेदप्रयोज्यार्थभेदविषयकज्ञानं समभिरूढनयः। इन्दनादिन्द्रः। शकनाच्छक्रः। पूर्दारणात्पुरन्दरः। इत्यादिज्ञाने उक्तलक्षणं सङ्गमनीयम्। लिङ्गसङ्ख्यादिरूपपर्यायभेदेनार्थभेदविषयकत्वं शब्दनयस्याप्यस्तीत्यतिव्याप्तिः। तथापि लिङ्गसङ्ख्यादिभिन्नपर्यायभेदेनार्थभेदविषयकज्ञानत्वस्य समभिरूढनयलक्षणत्वाच्छब्दनये नातिव्याप्तिरिति ध्येयं। पर्यायभेदमन्तरेणैवेन्द्रादिभेदकथनं तदाभासः।

तत्तत्क्रियापरिणतिक्षण एव शब्दवाच्यत्वविषयकं ज्ञानमित्थंभूतनयः। इत्थमेवं विवक्षितक्रियापरिणामप्रकारेण भूतं परिणतमर्थमभिप्रैतीतीत्थंभूतनय इति व्युत्पत्तेः। समभिरूढो हि शकनक्रियायां सत्यामसत्यां च [1]देवराजार्थस्य शक्रव्यपदेशमभिप्रैति। पशुविशेषस्य गमनक्रियायां सत्यामसत्यां च गोव्यपदेशवत्तथारूढेः सद्भावात्। अयं तु शकनक्रियापरिणतिक्षण एव शक्रमभिप्रैति, न पूजनाभिषेचनक्षणे। तथा सति पाकक्रियां कुर्वाणस्यापि गन्तेति व्यपदेशप्रसङ्गात्। एतेन शब्दाः पञ्चविधाः—जातिगुणक्रियायदृच्छाद्रव्यशब्दभेदात्। तत्र गवाश्वादिशब्दो जातिशब्दः। शुक्लनीलादिशब्दो गुणशब्दः। पाचकादिशब्दः क्रियाशब्दः। देवदत्तादिशब्दो यदृच्छाशब्दः। दण्ड्यादिशब्दो द्रव्यशब्द इति निरस्तम्। इत्थंभूतनयाभिप्रायेण सर्वेषामपि शब्दानां क्रियाशब्दत्वात्। गच्छतीति गौराशुगाम्यश्व इति जातिशब्दस्य, शुचीभवनाच्छुक्लो नीलनान्नील इति गुणशब्दस्य, देवा एनं देयासुरिति देवदत्त इति यदृच्छाशब्दस्य, दण्डोऽस्यास्तीति दण्डीति द्रव्यशब्दस्य च क्रियाशब्दतायास्सूपपादत्वात्। क्रियानिरपेक्षत्वेन क्रियावाचिशब्देषु काल्पनिको व्यवहार इत्थंभूतनयाभास इति। इदमत्र बोध्यं—एतेषु नयेषु ऋजुसूत्रान्ताश्चत्वारोऽर्थप्रधानाः। शेषास्त्रयश्शब्दप्रधानाः। तत्रापि पूर्वः पूर्वो नयो बहुविषयः, कारणभूतश्च। उत्तरोत्तरस्त्वल्पविषयः, कार्यभूतश्च। तथा

---

[1] देवराजार्थः (क).

हि — धर्मधर्म्युभयविषयकान्नैगमात्सन्मात्रविषयकस्सङ्ग्रहोऽल्पविषयः । धर्मधर्म्युभयस्वरूपज्ञानानन्तरं सङ्ग्रहेण विवक्षादशायामेव सङ्ग्रहनयप्रवृत्तया नैगमकार्यः सङ्ग्रहः । सङ्ग्रहेण सदादिसामान्याकारेण सङ्गृहीतार्थानां जीवाजीवादिविभागविषयको व्यवहारस्ततोऽल्पविषयस्तत्कार्यश्च । कालत्रयवृत्तिपदार्थगोचराद्व्यवहाराद्वर्तमानपर्यायमात्रविषयक ऋजुसूत्रस्ततोऽल्पविषयस्तत्कार्यश्च । कालत्रयवृत्तिवस्तुज्ञानानन्तरमेव तत्रायं वर्तमानपर्याय इति ज्ञानसम्भवात् । कालादिभेदेनाभिन्नार्थविषयकादृजुसूत्रात् कालकारकादिभेदेन भिन्नार्थविषयकश्शब्दनयस्ततोल्पविषयस्तत्कार्यभूतश्च । अयमनश्व इति ज्ञानेऽश्वज्ञानस्य कारणतावत् कालादिभेदेनार्थभेदज्ञानेऽर्थाभेदज्ञानस्य हेतुत्वात् । तद्विपरीतबुद्धौ तज्ज्ञानस्य कारणत्वात् । पर्यायभेदेनार्थभेदविषयकाच्छब्दनयात्तद्भेदविषयकसमभिरूढनयस्ततोऽल्पविषयः । तद्विपरीतार्थविषयकतया तत्कार्यश्च । क्रियाभेदेनार्थभेदविषयकात्समभिरूढनयात्तद्भेदविषयक इत्थंभूतनयस्ततोऽल्पविषयकस्तत्कार्यश्च, तद्विपरीतार्थविषयकत्वात् । एवं यत्रोत्तरोत्तरो नयो वस्त्वंशे प्रवर्तते तत्र पूर्वपूर्वोऽपि नयो वर्तत एव । यथा सहस्रेऽष्टशती, तस्यां वा पञ्चशत्यादयः । पूर्वसंख्या उत्तरसंख्यायामविरोधतो वर्तते । यत्र पूर्वो नयः प्रवर्तते न तत्रोत्तरः, पञ्चशत्यादावष्टशत्यादिवत् । एवं नयविषयीभूतार्थे प्रमाणं प्रवर्तते, सांशवस्तुग्राहित्वात् । प्रमाणविषयीभूतार्थे तु नया न प्रवर्तन्ते, वस्त्वंशमात्रग्राहित्वादिति । इदानीमात्मनः प्रारब्धनिर्वहणमौद्धत्यपरिहारं च दर्शयन्नाह—

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ।
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ॥

परीक्षामुखमहं व्यधामिति क्रियाकारकयोजना । परीक्षा तर्कः । परि समन्तादशेषविशेषत ईक्षणं विचारणं यत्रार्थानामिति व्युत्पत्तेः । तस्या मुखं तद्व्युत्पत्तौ प्रवेशार्थिनां प्रवेशद्वारम् । तथा च परीक्षामुखशब्देन तर्कशास्त्रसारार्थप्रतिपादकत्वं विवक्षितमित्यस्य शास्त्रस्य परीक्षामुखमित्यन्वर्थसंज्ञा । एवं च परीक्षामुखनामकशास्त्रविषयकातीतकृतिमानहमिति बोधः । अत्र शास्त्रविषयककृतेरतीतत्वोक्त्या शास्त्रसमाप्तत्वमवगम्यते । हेयोपादेयतत्त्वयोरादर्शमिति परीक्षामुखस्य विशेषणम् । आदर्शशब्देनादर्शवत् स्पष्टप्रतिपत्तिजनकत्वं विवक्षितम् । हेयोपादेयतत्त्वविषयकस्पष्टप्रतिपत्तिजनकं परीक्षामुखमित्यर्थः । तत्त्वयोरिति षष्ठ्या विषयत्वार्थकत्वात् । न चादर्शस्य प्रत्यक्षजनकतया स्पष्टप्रतिपत्तिजनकतासम्भवेऽपि परोक्षज्ञानजनकस्य ग्रन्थस्य कथं स्पष्टप्रतिपत्तिजनकत्व-

मिति वाच्यं—संशयविपर्ययादिव्यावृत्तप्रतीतेरेव स्पष्टप्रतिपत्तिशब्देन विवक्षितत्वात्, तज्जनकत्वस्य ग्रन्थे सम्भवात्। एवं च लोकोत्तरस्यास्य शास्त्रस्यारब्धस्य समापनमाश्चर्यावहमिति भावः। नन्वन्यैराचार्यैरारब्धस्य शास्त्रस्य समापनकरणदर्शनात्तद्वदस्यापि समापनं स्यादत आह—बाल इति—अल्पप्रज्ञ इत्यर्थः। सर्वज्ञैः पूर्वाचार्यैरारब्धस्य शास्त्रस्य समापनं युज्यते। अल्पप्रज्ञेन मयाऽऽरब्धस्य महाशास्त्रस्य समापनमाश्चर्यावहमेवेति भावः। नन्वाचार्यैरनायासेन शास्त्राण्यारभ्य समापितानि। भवतात्वतीवायासेनेदं शास्त्रं समापितमिति नाश्चर्यायेत्यत्राह—परीक्षादक्षवत्। परीक्षादक्षो महाप्रज्ञो यथाऽनायासेन शास्त्रं समापितवानहमपि तथेत्यर्थः। कस्मै प्रयोजनाय शास्त्रकरणमित्यत्राह—मादृशस्संविद इति। अत्रापि हेयोपादेयतत्त्वयोरित्यनुषज्यते। मादृशो मन्दप्रज्ञस्य हेयोपादेयतत्त्वज्ञानार्थं शास्त्रकरणमित्यर्थः। नन्वल्पप्रज्ञस्य कथं महाशास्त्रकरणं? तत्करणे वा कथमल्पप्रज्ञत्वम्? परस्परं विरोधादिति चेन्न—पूर्वाचार्यापेक्षयाऽल्पप्रज्ञत्वस्य विवक्षितत्वात्। आत्मन औद्धत्यपरिहाराय ग्रन्थकृता तथोक्तिसम्भवाच्च। यद्वा मादृशो बाल इत्यत्राऽबाल इति पदच्छेदः। एवं च शास्त्रकरणेऽनल्पप्रज्ञोऽहं शास्त्रार्थग्रहणेऽनल्पप्रज्ञस्य शिष्यस्य हेयोपादेयतत्त्वज्ञानार्थं शास्त्रमिदं कृतवानस्मीत्यर्थः।

इति श्रीमत्स्याद्वादसिद्धान्तपारावारपारीणमानस्य देशिगणाग्रगण्यस्य श्रीमद्बेल्गुळपुरनिवास रसिकस्वामिनवचारुकीर्तिपण्डिताचार्यस्य कृतौ परीक्षामुखसूत्रव्याख्यायां प्रमेयरत्नालङ्कारसमाख्यायां प्रमाणफलपरिच्छेदः षष्ठः.

मिथ्यावादतमश्छटादिनमणेर्माणिक्यनन्दिप्रभो-
यच्छास्त्रं विमलं विराजितमहायुक्तिव्रजैर्भासुरम्।
तद्व्याख्यातमभूत्प्रभेन्दुवचनोदारार्थसंशीलनात्
किञ्च श्रीगुमटेश्वरस्य कृपया विन्ध्याद्रिचूडामणेः॥

श्रीमद्बेळ्गुळमध्यभासुरमहाविन्ध्याद्रिचिन्तामणिः
श्रीमान्बाहुबलिः करोतु कुशलं भव्यात्मनां सन्ततम्।
यत्पादाम्बुरुहं सुरेन्द्रमुकुटीमाणिक्यनीराजितं
कल्पद्रुप्रकरायते शुभदृशां पूजां सदा तन्वताम्॥

॥ समाप्तोऽयं ग्रन्थः ॥

———

॥ श्रीः ॥

माणिक्यनन्द्याचार्यविरचित

# परीक्षामुखसूत्राणि

## अथ प्रथमसमुद्देशः

प्रमाणादर्थसंसिद्धिस्तदाभासाद्विपर्ययः।
इति वक्ष्ये तयोर्लक्ष्म सिद्धमल्पं लघीयसः॥

स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम् ॥ १ ॥ हिताहितप्राप्तिपरिहारसमर्थं हि प्रमाणं ततो ज्ञानमेव तत् ॥ २ ॥ तन्निश्चयात्मकं समारोपविरुद्धत्वादनुमानवत् ॥ ३ ॥ अनिश्चितोऽपूर्वार्थः ॥ ४ ॥ दृष्टोऽपि समारोपात्तादृक् ॥ ५ ॥ स्वोन्मुखतया प्रतिभासनं स्वव्यवसायः ॥ ६ ॥ अर्थस्येव तदुन्मुखतया ॥ ७ ॥ घटमहमात्मना वेद्मीति ॥ ८ ॥ कर्मवत्कर्तृकरण क्रियाप्रतीतेः ॥ ९ ॥ शब्दानुच्चारणेऽपि स्वस्यानुभवनमर्थवत् ॥ १० ॥ को वा तत्प्रतिभासिनमर्थमध्यक्षमिच्छंस्तदेव तथा नेच्छेत् ॥ ११ ॥ प्रदीपवत् ॥ १२ ॥ तत्प्रामाण्यं स्वतः परतश्च ॥ १३ ॥ इति प्रथमसमुद्देशः ॥

## अथ द्वितीयसमुद्देशः

तद्द्वेधा ॥ १ ॥ प्रत्यक्षपरोक्षभेदात् ॥ २ ॥ विशदं प्रत्यक्षम् ॥ ३ ॥ प्रतीत्यन्तराव्यवधानेन विशेषवत्तया वा प्रतिभासनं वैशद्यम् ॥ ४ ॥ इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम् ॥ ५ ॥ नार्थालोकौ कारणं परिच्छेद्यत्वात्तमोवत् ॥ ६ ॥ तदन्वयव्यतिरेकानुविधानाभावाच्च केशोण्डुकज्ञानवन्नक्तञ्चरज्ञानवच्च ॥ ७ ॥ अतज्जन्यमपि तत्प्रकाशकं प्रदीपवत् ॥ ८ ॥ स्वावरणक्षयोपशमलक्षणयोग्यतया हि प्रतिनियतमर्थं व्यवस्थापयति ॥ ९ ॥ कारणस्य च परिच्छेद्यत्वे करणादिना व्यभिचारः ॥ १० ॥ सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम् ॥ ११ ॥ सावरणत्वे करणजन्यत्वे च प्रतिबन्धसम्भवात् ॥ १२ ॥ इति द्वितीयसमुद्देशः ॥

## अथ तृतीयसमुद्देशः

परोक्षमितरत् ॥ १ ॥ प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमभेदम् ॥ २ ॥ संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः ॥ ३ ॥ स देवदत्तो यथा ॥ ४ ॥ दर्शनस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि ॥ ५ ॥ यथा स एवायं देवदत्तः ॥ ६ ॥ गोसदृशो गवयः ॥ ७ ॥ गोविलक्षणो महिषः ॥ ८ ॥ इदमस्माद्दूरम् ॥ ९ ॥ वृक्षोऽयमित्यादि ॥ १० ॥ उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः ॥ ११ ॥ इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च ॥ १२ ॥ यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥ १३ ॥ साधनात्साध्यविज्ञानमनुमानम् ॥ १४ ॥ साध्याविनाभावित्वेन निश्चितो हेतुः ॥ १५ ॥ सहक्रमभावनियमोऽविनाभावः ॥ १६ ॥ सहचारिणोर्व्याप्यव्यापकयोश्च सहभावः ॥ १७ ॥ पूर्वोत्तरचारिणोः कार्यकारणयोश्च क्रमभावः ॥ १८ ॥ तर्कात्तन्निर्णयः ॥ १९ ॥ इष्टमबाधितमसिद्धं साध्यम् ॥ २० ॥ सन्दिग्धविपर्यस्ताव्युत्पन्नानां साध्यत्वं यथा स्यादित्यसिद्धपदम् ॥ २१ ॥ अनिष्टाध्यक्षादिबाधितयोः साध्यत्वं माभूदितीष्टाबाधितवचनम् ॥ २२ ॥ न चासिद्धवदिष्टं प्रतिवादिनः ॥ २३ ॥ प्रत्यायनाय हीच्छा वक्तुरेव ॥ २४ ॥ साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी ॥ २५ ॥ पक्ष इति यावत् ॥ २६ ॥ प्रसिद्धो धर्मी ॥ २७ ॥ विकल्पसिद्धे तस्मिन्सत्तेतरे साध्ये ॥ २८ ॥ अस्ति सर्वज्ञो नास्ति खरविषाणम् ॥ २९ ॥ प्रमाणोभयसिद्धे तु साध्यधर्मविशिष्टता ॥ ३० ॥ अग्निमानयं देशः परिणामी शब्द इति यथा ॥ ३१ ॥ व्याप्तौ तु साध्यं धर्म एव ॥ ३२ ॥ अन्यथा तदघटनात् ॥ ३३ ॥ साध्यधर्माधारसन्देहापनोदाय गम्यमानस्यापि पक्षस्य वचनम् ॥ ३४ ॥ साध्यधर्मिणि साधनधर्मावबोधनाय पक्षधर्मोपसंहारवत् ॥ ३५ ॥ को वा त्रिधा हेतुमुक्त्वा समर्थयमानो न पक्षयति ॥ ३६ ॥ एतद्द्वयमेवानुमानाङ्गं नोदाहरणम् ॥ ३७ ॥ न हि तत्साध्यप्रतिपत्त्यङ्गं तत्र यथोक्तहेतोरेव व्यापारात् ॥ ३८ ॥ तदविनाभावनिश्चयार्थं वा विपक्षे बाधकादेव तत्सिद्धेः ॥ ३९ ॥ व्यक्तिरूपं च निदर्शनं सामान्येन तु व्याप्तिस्तत्रापि तद्विप्रतिपत्तावनवस्थानं स्यात् दृष्टान्तान्तरापेक्षणात् ॥ ४० ॥ नापि व्याप्तिस्मरणार्थं तथाविधहेतुप्रयोगादेव तत्स्मृतेः ॥ ४१ ॥ तत्परमभिधीयमानं साध्यधर्मिणि साध्यसाधने सन्देहयति ॥ ४२ ॥

कुतोऽन्यथोपनयनिगमने ॥ ४३ ॥ न च ते तदङ्गे साध्यधर्मिणि हेतु-
साध्ययोर्वचनादेवासंशयात् ॥ ४४ ॥ समर्थनं वा वरं हेतुरूपमनुमाना-
वयवो वाऽस्तु साध्ये तदुपयोगात् ॥ ४५ ॥ बालव्युत्पत्त्यर्थं तत्त्रयोपगमे
शास्त्र एवासौ न वादेऽनुपयोगात् ॥ ४६ ॥ दृष्टान्तो द्वेधा—अन्वयव्यति-
रेकभेदात् ॥ ४७ ॥ साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः
॥ ४८ ॥ साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः
॥ ४९ ॥ हेतोरुपसंहार उपनयः ॥ ५० ॥ प्रतिज्ञायास्तु निगमनम् ॥ ५१ ॥
तदनुमानं द्वेधा ॥ ५२ ॥ स्वार्थपरार्थभेदात् ॥ ५३ ॥ स्वार्थमुक्तलक्षणम्
॥ ५४ ॥ परार्थं तु तदर्थपरामर्शिवचनाज्जातम् ॥ ५५ ॥ तद्वचनमपि
तद्धेतुत्वात् ॥ ५६ ॥ स हेतुर्द्वेधोपलब्ध्यनुपलब्धिभेदात् ॥ ५७ ॥ उप-
लब्धिर्विधिप्रतिषेधयोरनुपलब्धिश्च ॥ ५८ ॥ अविरुद्धोपलब्धिर्विधौ
षोढा—व्याप्य कार्य कारण पूर्वोत्तरसहचरभेदात् ॥ ५९ ॥ रसादेक-
सामग्र्यनुमानेन रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं हेतुर्यत्र
सामर्थ्याप्रतिबन्धकारणान्तरावैकल्ये ॥ ६० ॥ न च पूर्वोत्तरचारिणो-
स्तादात्म्यं तदुत्पत्तिर्वा कालव्यवधाने तदनुपलब्धेः ॥ ६१ ॥ भाव्यतीत-
योर्मरणजाग्रद्बोधयोरपि नारिष्टोद्बोधौ प्रति हेतुत्वम् ॥ ६२ ॥ तद्व्या-
पाराश्रितं हि तद्भावभावित्वम् ॥ ६३ ॥ सहचारिणोरपि परस्परपरिहा-
रेणावस्थानात्सहोत्पादाच्च ॥ ६४ ॥ परिणामी शब्दः कृतकत्वात्, य एवं
स एवं दृष्टो, यथा घटः, कृतकश्चायं, तस्मात्परिणामी, यस्तु न परिणामी
स न कृतको दृष्टो, यथा वन्ध्यास्तनन्धयः, कृतकश्चायं, तस्मात्परिणामी
॥ ६५ ॥ अस्त्यत्र देहिनि बुद्धिर्व्याहारादेः ॥ ६६ ॥ अस्त्यत्र छाया
छत्रात् ॥ ६७ ॥ उदेष्यति शकटं कृत्तिकोदयात् ॥ ६८ ॥ उदगाद्भरणि
प्राक्तत एव ॥ ६९ ॥ अस्त्यत्र मातुलिङ्गे रूपं रसात् ॥ ७० ॥ विरुद्ध-
तदुपलब्धिः प्रतिषेधे तथा ॥ ७१ ॥ नास्त्यत्र शीतस्पर्श औष्ण्यात् ॥७२॥
नास्त्यत्र शीतस्पर्शो धूमात् ॥ ७३ ॥ नास्मिन् शरीरिणि सुखमस्ति
हृदयशल्यात् ॥ ७४ ॥ नोदेष्यति मुहूर्तान्ते शकटं रेवत्युदयात् ॥ ७५ ॥
नोदगाद्भरणिर्मुहूर्तात्पूर्वं पुष्योदयात् ॥ ७६ ॥ नास्त्यत्र भित्तौ परभागा-
भावोऽर्वाग्भागदर्शनात् ॥ ७७ ॥ अविरुद्धानुपलब्धिः प्रतिषेधे सप्तधा
स्वभाव व्यापक कार्य कारण पूर्वोत्तरसहचरानुपलम्भभेदात् ॥ ७८ ॥
नास्त्यत्र भूतले घटोऽनुपलब्धेः ॥ ७९ ॥ नास्त्यत्र शिंशपा वृक्षानुप-
लब्धेः ॥ ८० ॥ नास्त्यत्राप्रतिबद्धसामर्थ्योऽग्निर्धूमानुपलब्धेः ॥ ८१ ॥

नास्त्यत्र धूमोऽनग्नेः ॥ ८२ ॥ नोदेष्यति मुहूर्तान्ते शकटं कृत्तिकोदयानुपलब्धेः ॥ ८३ ॥ नोदगाद्भरणिर्मुहूर्तात्प्राक्तत एव ॥ ८४ ॥ नास्त्यत्र समतुलायामुन्नामो नामानुपलब्धेः ॥ ८५ ॥ विरुद्धानुपलब्धिर्विधौ त्रेधा—विरुद्धकार्यकारणस्वभावानुपलब्धिभेदात् ॥ ८६ ॥ यथास्मिन्प्राणिनि व्याधिविशेषोऽस्ति निरामयचेष्टानुपलब्धेः ॥ ८७ ॥ अस्त्यत्र देहिनि दुःखमिष्टसंयोगाभावात् ॥ ८८ ॥ अनेकान्तात्मकं वस्त्वेकान्तस्वरूपानुपलब्धेः ॥ ८९ ॥ परम्परया सम्भवत्साधनमत्रैवान्तर्भावनीयम् ॥ ९० ॥ अभूदत्र चक्रे शिवकः स्थासात् ॥ ९१ ॥ कार्यकार्यमविरुद्धकार्योपलब्धौ ॥ ९२ ॥ नास्त्यत्र गुहायां मृगक्रीडनं मृगारिसंशब्दनात् ॥ ९३ ॥ कारणविरुद्धकार्यं विरुद्धकार्योपलब्धौ यथा—व्युत्पन्नप्रयोगस्तु तथोपपत्त्यन्यथानुपपत्त्यैव वा ॥ ९४ ॥ अग्निमानयं देशस्तथैव धूमवत्त्वोपपत्तेर्धूमवत्त्वान्यथानुपपत्तेर्वा ॥ ९५ ॥ हेतुप्रयोगो हि यथा व्याप्तिग्रहणं विधीयते सा च तावन्मात्रेण व्युत्पन्नैरवधार्यते ॥ ९६ ॥ तावता च साध्यसिद्धिः ॥ ९७ ॥ तेन पक्षस्तदाधारसूचनायोक्तः ॥ ९८ ॥ आप्तवचनादिनिबन्धनमर्थज्ञानमागमः ॥ ९९ ॥ सहजयोग्यतासङ्केतवशाद्धि शब्दादयो वस्तुप्रतिपत्तिहेतवः ॥ १०० ॥ यथा मेर्वादयः सन्ति ॥ १०१ ॥ इति तृतीयसमुद्देशः ॥

## अथ चतुर्थसमुद्देशः

सामान्यविशेषात्मा तदर्थो विषयः ॥ १ ॥ अनुवृत्तव्यावृत्तप्रत्ययगोचरत्वात्पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तेश्च ॥ २ ॥ सामान्यं द्वेधा—तिर्यगूर्ध्वताभेदात् ॥ ३ ॥ सदृशपरिणामस्तिर्यक्—खण्डमुण्डादिषु गोत्ववत् ॥ ४ ॥ परापरविवर्तव्यापि द्रव्यमूर्ध्वता मृदिव स्थासादिषु ॥ ५ ॥ विशेषश्च ॥ ६ ॥ पर्यायव्यतिरेकभेदात् ॥ ७ ॥ एकस्मिन् द्रव्ये क्रमभाविनः परिणामाः पर्याया आत्मनि हर्षविषादादिवत् ॥ ८ ॥ अर्थान्तरगतो विसदृशपरिणामो व्यतिरेको गोमहिषादिवत् ॥ ९ ॥ इति चतुर्थसमुद्देशः ॥

## अथ पञ्चमसमुद्देशः

अज्ञाननिवृत्तिर्हानोपादानोपेक्षाश्च फलम् ॥ १ ॥ प्रमाणादभिन्नं च ॥ २ ॥ यः प्रमिमीते स एव निवृत्ताज्ञानो जहात्यादत्त उपेक्षते चेति प्रतीतेः ॥ ३ ॥ इति पञ्चमसमुद्देशः ॥

## अथ षष्ठसमुद्देशः

ततोऽन्यत्तदाभासम् ॥ १ ॥ अस्वसंविदितगृहीतार्थदर्शनसंशया-दयः प्रमाणाभासाः ॥ २ ॥ स्वविषयोपदर्शकत्वाभावात् ॥ ३ ॥ पुरुषान्तर-पूर्वार्थगच्छत्तृणस्पर्शस्थाणुपुरुषादिज्ञानवत् ॥ ४ ॥ चक्षूरसयोर्द्रव्ये संयुक्तसमवायवच्च ॥ ५ ॥ अवैशद्ये प्रत्यक्षं तदाभासं बौद्धस्याकस्माद्धूम-दर्शनाद्वह्निविज्ञानवत् ॥ ६ ॥ वैशद्येऽपि परोक्षं तदाभासं मीमांसकस्य करणज्ञानवत् ॥ ७ ॥ अतस्मिंस्तदिति ज्ञानं स्मरणाभासं जिनदत्ते स देव-दत्तो यथा ॥ ८ ॥ सदृशे तदेवेदं तस्मिन्नेव तेन सदृशं यमलकवदित्यादि प्रत्यभिज्ञानाभासम् ॥ ९ ॥ असम्बद्धे तज्ज्ञानं तर्काभासं—यावांस्तत्पुत्रः स श्यामो यथा ॥ १० ॥ इदमनुमानाभासम् ॥ ११ ॥ तत्रानिष्टादिः पक्षा-भासः ॥ १२ ॥ अनिष्टो मीमांसकस्यानित्यः शब्दः ॥ १३ ॥ सिद्धः श्रावणः शब्दः ॥ १४ ॥ बाधितः प्रत्यक्षानुमानागमलोकस्ववचनैः ॥ १५ ॥ अनुष्णोऽग्निर्द्रव्यत्वाज्जलवत् ॥ १६ ॥ अपरिणामी शब्दः कृतकत्वात् घट-वत् ॥ १७ ॥ प्रेत्यासुखप्रदो धर्मः पुरुषाश्रितत्वादधर्मवत् ॥ १८ ॥ शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवत् ॥ १९ ॥ माता मे वन्ध्या पुरुष-संयोगेऽप्यगर्भत्वात् प्रसिद्धवन्ध्यावत् ॥ २० ॥ हेत्वाभासा असिद्धविरुद्धा-नैकान्तिकाकिञ्चित्कराः ॥ २१ ॥ असत्सत्तानिश्चयोऽसिद्धः ॥ २२ ॥ अविद्यमानसत्ताकः परिणामी शब्दश्चाक्षुषत्वात् ॥ २३ ॥ स्वरूपेणा-सत्त्वात् ॥ २४ ॥ अविद्यमाननिश्चयो मुग्धबुद्धिं प्रत्यग्निरत्र धूमात् ॥ २५ ॥ तस्य बाष्पादिभावेन भूतसङ्घाते सन्देहात् ॥ २६ ॥ साङ्ख्यं प्रति परिणा-मी शब्दः कृतकत्वात् ॥ २७ ॥ तेनाज्ञातत्वात् ॥ २८ ॥ विपरीत निश्चिताविनाभावो विरुद्धोऽपरिणामी शब्दः कृतकत्वात् ॥ २९ ॥ विपक्षेऽप्यविरुद्धवृत्तिरनैकान्तिकः ॥ ३० ॥ निश्चितवृत्तिरनित्यः शब्दः प्रमेयत्वात् घटवत् ॥ ३१ ॥ आकाशे नित्येऽप्यस्य निश्चयात् ॥ ३२ ॥-शङ्कितवृत्तिस्तु नास्ति सर्वज्ञो वक्तृत्वात् ॥ ३३ ॥ सर्वज्ञत्वेन वक्तृत्वा विरोधात् ॥ ३४ ॥ सिद्धे प्रत्यक्षादिबाधिते च साध्ये हेतुरकिञ्चित्करः ॥ ३५ ॥ सिद्धः श्रावणः शब्दः शब्दत्वात् ॥ ३६ ॥ किञ्चिदकरणात् ॥ ३७ ॥ यथाऽनुष्णोऽग्निर्द्रव्यत्वादित्यादौ किञ्चित्कर्तुमशक्यत्वात् ॥ ३८ ॥ लक्षण एवासौ दोषो व्युत्पन्नप्रयोगस्य पक्षदोषेणैव दुष्टत्वात् ॥ ३९ ॥ दृष्टान्ताभासा अन्वयेऽसिद्धसाध्यसाधनोभयाः ॥ ४० ॥ अपौरुषेयः शब्द

अमूर्तत्वादिन्द्रियसुखपरमाणुघटवत् ॥ ४१ ॥ विपरीतान्वयश्च यदपौरुषेयं तदमूर्तम् ॥ ४२ ॥ विद्युदादिनाऽतिप्रसङ्गात् ॥ ४३ ॥ व्यतिरेकेऽसिद्ध-तद्व्यतिरेकाः परमाण्विन्द्रियसुखाकाशवत् ॥ ४४ ॥ विपरीतव्यतिरेकश्च-यन्नामूर्तं तन्नापौरुषेयं ॥ ४५ ॥ बालप्रयोगाभासः पञ्चावयवेषु कियद्धी-नता ॥ ४६ ॥ अग्निमानयं देशो धूमवत्वात्, यदित्थं तदित्थं, यथा महानस इति ॥ ४७ ॥ धूमवांश्चायमिति वा ॥ ४८ ॥ तस्मादग्निमान् धूम वांश्चायमिति ॥ ४९ ॥ स्पष्टतया प्रकृतप्रतिपत्तेरयोगात् ॥ ५० ॥ रागद्वेष-मोहाक्रान्तपुरुषवचनाज्जातमागमाभासम् ॥ ५१ ॥ यथा नद्यास्तीरे मोद-कराशयः सन्ति धावध्वं माणवकाः ॥ ५२ ॥ अङ्गुल्यग्रे हस्तियूथशतमास्त इति च ॥ ५३ ॥ विसंवादात् ॥ ५४ ॥ प्रत्यक्षमेवैकं प्रमाणमित्यादि सङ्ख्याभासम् ॥ ५५ ॥ लौकायतिकस्य प्रत्यक्षतः परलोकादिनिषेधस्य परबुद्ध्यादेश्चासिद्धेरतद्विषयत्वात् ॥ ५६ ॥ सौगतसाङ्ख्ययौगप्राभाकर जैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्ति वत् ॥ ५७ ॥ अनुमानादेस्तद्विषयत्वे प्रमाणान्तरत्वम् ॥ ५८ ॥ तर्कस्येव व्याप्तिगोचरत्वे प्रमाणान्तरत्वं—अप्रमाणस्याव्यवस्थापकत्वात् ॥ ५९ ॥ प्रतिभासभेदस्य च भेदकत्वात् ॥ ६० ॥ विषयाभासः सामान्यं विशेषो द्वयं वा स्वतन्त्रम् ॥ ६१ ॥ तथा प्रतिभासनात् कार्याकरणाच्च ॥ ६२ ॥ समर्थस्य करणे सर्वदोत्पत्तिरनपेक्षत्वात् ॥ ६३ ॥ परापेक्षणे परिणामित्व-मन्यथा तदभावात् ॥ ६४ ॥ स्वयमसमर्थस्य अकारकत्वात् पूर्ववत् ॥ ६५ ॥ फलाभासं प्रमाणादभिन्नं भिन्नमेव वा ॥ ६६ ॥ अभेदे तद्व्यवहारानुपपत्तेः ॥ ६७ ॥ व्यावृत्त्याऽपि न तत्कल्पना फलान्तराद्व्यावृत्त्याऽफलत्वप्रसङ्गात् ॥ ६८ ॥ प्रमाणाद्व्यावृत्त्येवाप्रमाणत्वस्य ॥ ६९ ॥ तस्माद्वास्तवोऽभेदः ॥ ७० ॥ भेदेत्वात्मान्तरवत्तदनुपपत्तेः ॥ ७१ ॥ समवायेऽतिप्रसङ्गः ॥ ७२ ॥ प्रमाणतदाभासौ दुष्टतयोद्भावितौ परिहृतापरिहृतदोषौ वादिनः साधन-तदाभासौ प्रतिवादिनो दूषणभूषणे च ॥ ७३ ॥ सम्भवदन्यद्विचारणी-यम् ॥ ७४ ॥ इति षष्ठसमुद्देशः ॥

परीक्षामुखमादर्शं हेयोपादेयतत्त्वयोः ।
संविदे मादृशो बालः परीक्षादक्षवद्व्यधाम् ॥

---

WD 889—GBPM—750—10-2-48.

मैसूरु राजकीय प्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः संमुद्रय प्रकाशिताः

# संस्कृतग्रन्थाः

| | ग्रन्थनाम | | मूल्यम् रू. | आ. |
|---|---|---|---|---|
| * 1 | आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम्. | .... | 1 | 12 |
| * 2 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम्. | .... | 1 | 0 |
| * 3 | माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) | .... | 2 | 0 |
| * 4 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम्. | .... | 2 | 8 |
| * 5 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम्. | .... | 2 | 8 |
| * 6 | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | .... | 1 | 4 |
| * 7 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम्. | .... | 3 | 0 |
| * 8 | श्रीभगवद्गीता, श्रीशंकराचार्यभाष्यसहिता | .... | 2 | 12 |
| * 9 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम्. | .... | 3 | 0 |

*एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते,

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| *10 | मण्डलब्राह्मणोपनिषत् .... | .... | 0 | 6 |
| *11 | सौन्दर्यलहरी .... .... | .... | 1 | 0 |
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमसंपुटम्. | | 3 | 0 |
| *13 | ” ” दशमसंपुटम् | .... | 3 | 2 |
| *14 | ” ” एकादशसंपुटम् | .... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्ज्वलाख्यवृत्तियुतम्. | .... | 1 | 10 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम्. | ... | 3 | 0 |
| *17 | ” ” नवमं संपुटम् | .... | 2 | 4 |
| *18 | ” ” द्वादशं संपुटम् | .... | 1 | 12 |
| *19 | श्रीशंकराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम-सनत्सुजातीयभाष्यम्). | .... | 1 | 4 |
| 20 | ” द्वितीयसंपुटम्, (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). | .... | 1 | 4 |
| *21 | ” तृतीयसंपुटम्, (उपदेशसहस्री गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता). | .... | 2 | 0 |
| *22 | ” चतुर्थसंपुटम्, (आत्मबोध विवेकचूडामणि-वाक्यवृत्ति-स्वात्मनिरूपण-योगतारावली-सर्ववेदान्तसिद्धान्तसारसंग्रहाः). | .... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् | .... | 2 | 0 |
| *24 | ” ” द्वितीयसंपुटम् | .... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् .... | .... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). | .... | 1 | 12 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ). | ... | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः | .... | 1 | 4 |
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीयभाष्यसहितं तृतीयसंपुटम् (7-8 प्रश्नौ). | .... | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता .... | ... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | ... | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टं (प्रथममुद्रणं) | .... | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, (वैदिकाभरणत्रिभाष्यरत्नाख्यव्याख्याद्वययुतम्.) | ... | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम्. | .... | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीयपादान्ता). | .... | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीयभाष्ययुतम्. | .... | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम् (प्रथममुद्रणम्) .... | .... | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः). | .... | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्, I सं. | ... | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चमपादप्रभृति सप्तमाध्यायान्तम्). | ... | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | .... | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | .... | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | .... | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः | .... | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रययात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 45 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम्. | ... | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्ता). | ... | 2 | 8 |
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्. | .... | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम्. | .... | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रा.) | .... | 3 | 0 |
| 50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् ... | .... | 3 | 8 |
| 51 | अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). | .... | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः | .... | 3 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्). | ... | 4 | 0 |
| *54 | कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) | .... | 3 | 0 |
| 55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् ,, | .... | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. | .... | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयकाचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. | ... | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). | .... | 3 | 8 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं. (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. | .... | 3 | 8 |
| *60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृत-सङ्केताख्यटीकायुतः. | ... | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् | .... | 2 | 0 |
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालंकारप्रभृतिहेत्वलंकारान्तः). | .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5 अध्यायाः). | ... | 2 | 0 |
| 64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) .... | .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... | .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् ... | .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, II सं. (6–10 अध्यायाः). | .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् .... | .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् | .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, III सं. (11–15 अध्यायाः). | .... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... | .... | 2 | 8 |
| 72 | अलंकारमणिहारः, चतुर्थसंपुटम् (रसवदलंकारप्रभृति समग्रः). | .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम्. | .... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः. | ... | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). | .... | 3 | 12 |

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 76 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत-सर्वार्थसिद्धि तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः. | .... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्, II सं· (द्वितीय परिच्छेदे विधि-वादान्तम्). | .... | 2 | 0 |
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिका-टीकायुता, II सं. प्रथमपरिच्छेदे असतस्साध-कत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपप-त्तिपर्यन्ता. | .... | 3 | 4 |
| 79 | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम्, III सं. | .... | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम् | .... | 2 | 4 |
| 81 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत सर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, II सं. | .... | 3 | 0 |
| 82 | तर्कताण्डवं, न्यायदीपाख्यव्याख्यायुतम्, IV सं. | .... | 2 | 4 |
| 83 | वाक्यार्थरत्नं सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् | .... | 1 | 0 |
| 84 | श्रीमदुमास्वामिविरचितं तत्त्वार्थसूत्रम्, सुख-बोधाख्यवृत्तियुतम्. | .... | 2 | 4 |
| 85 | शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्यासमलंकृता सौन्दर्यलहरी, भावनोपनिषत् भास्करराजभाष्य-सहिता, देवीपञ्चस्तवी च. (द्वितीयमुद्रणम्) | .... | 2 | 8 |
| 86 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमद-प्पय्यदीक्षितेन्द्रविरचितव्याख्या समलङ्कृतम्, सर्गाः 13-18. | ... | 3 | 4 |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्त-स्वामिभाष्यभूषितम्, I सं. प्रश्नाः 1—5. | .... | 4 | 0 |
| 1. | मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थ-सूची सविवरणा, I सं. वेदाः (संहिता, ब्राह्मणं, आरण्यकं, उपनिषत्, मन्त्रसंग्रहश्च). | .... | 3 | 12 |
| 2. | ,, द्वितीयं संपुटम्—धर्मशास्त्रम् (स्मृतिः) | | | |
| 3. | मैसूरु प्राच्यकोशागारस्थ मुद्रितसंस्कृतपुस्तक-प्रदर्शिनी. | .... | 2 | 12 |

## ಮೈಸೂರು ಗೌರ್ನಮೆಂಟ್ ಓರಿಯಂಟಲ್ ಲೈಬ್ರರಿಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ
## ಕನ್ನಡ ಗ್ರಂಥಗಳು

---

| | | ಬೆಲೆ | |
|---|---|---|---|
| | | ರೂ. | ಆ. |
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ ... ... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತಿಕಪರ್ವಗಳು). ... | 1 | 8 |
| *4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ ... | 2 | 0 |
| *5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ ... | 1 | 12 |
| *6 | ,, ಸಭಾಪರ್ವ ... ... | 1 | 12 |
| 7 | ,, ಅರಣ್ಯಪರ್ವ ... ... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ ... ... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ ... ... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ ... ... | 2 | 0 |
| *11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ ... | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ ... ... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I ... ... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ ... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II ... ... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ ... ... | 1 | 4 |
| 18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ ... ... ... | 2 | 0 |
| *19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. I ... ... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ ... ... | 1 | 0 |
| *21 | ,, ದ್ರೋಣಪರ್ವ ... ... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) ... | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ ... ... | 2 | 4 |
| 24 | ,, ಶಲ್ಯಗದಾಪರ್ವಗಳು ... | 1 | 0 |

---

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

# LIST OF WORKS PUBLISHED BY THE GOVERNMENT ORIENTAL LIBRARY, MYSORE

---

## A.—Sanskrit Publications.

| | | Price Rs. a. |
|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarsanacarya ... ... ... | 1 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 0 |
| *3. | Madhaviya Dhatuvritti, Vol. II, Part I (Adādi-Divādi Juhotyādi) ... ... | 2 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Swarapatha, Vol. I | 2 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. II ... ... ... | 2 8 |
| *6. | Dakshinamurtistotra with the commentary of Suresvaracharya ... ... ... | 1 4 |
| *7 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... ... ... | 3 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya ... ... ... | 2 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... ... | 3 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... ... | 1 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. V ... ... ... | 3 0 |
| *13. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 0 |

---

*N.B.*—Numbers marked thus * are out of stock.

| | | Price Rs. a. |
|---|---|---|
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 0 |
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... ... | 1 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol VIII ... ... ... | 3 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XII ... ... ... | 1 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol. I, commentaries on Vishnusahasranama and Sanatsujātīya ... ... ... | 1 4 |
| *20. | Sankaracarya's Miscellaneous Works, Vol. II, Aparokshānubhūti, Satasloki, Haristuti and Dasasloki with a commentary ... ... | 1 4 |
| *21 | Sankaracarya's Miscellaneous Works, Vol. III, Upadesasāhasri with a commentary ... | 2 0 |
| *22. | Sankaracarya's Miscellaneous Works, Vol IV, Atmabodha, Vivekacūḍāmaṇi, Vākyavritti, Svātmanirūpana, Yogatārāvali, Sarva-vedanta-siddhanta sārasangraha ... ... | 1 0 |
| *23. | Madhaviya Dhatuvritti, Vol. I, Part I (Bhvādi)... | 2 0 |
| *24. | Madhaviya Dhatuvritti, Vol. I, Part II (Bhvādi)... | 2 0 |
| *25. | Gotra-pravara-nibandha-kadambakam ... | 2 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha ... ... ... | 1 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. III ... | 1 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 0 |
| *31. | Madhaviya Dhatuvritti, Vol. II, Part II (Svadi and Curadi) ... ... ... | 2 0 |
| *32 | Bodhayana Grihya Sutra with Parisishta ... | 2 4 |
| *33. | Taittiriya Pratisakhya with Vaidikābharana and Tribhāshyaratna ... ... ... | 4 0 |

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| *34. | Bodhayana Dharma Sutra with a commentary ... | 3 | 0 |
| *35. | Bhattadipika, Vol. I ... ... ... | 3 | 0 |
| *36. | Taittiriya Brāhmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka I ... | 3 | 8 |
| *37. | Kautilya Arthasastra (First Edition) ... | 3 | 0 |
| *38. | Taittiriya Brahmana with the commentary of Bhatta Bhaskara with Svarapatha, Ashtaka III, Part I ... . ... | 3 | 8 |
| *39. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. I ... | 3 | 0 |
| *40. | Bhattadipika, Vol. II ... ... ... | 3 | 0 |
| 41. | Khādira Grihya Sutra with Rudraskandiya ... | 1 | 0 |
| *42. | Taittiriya Brahmana with Bhatta-Bhaskara's commentary, Ashtaka III, Part II .. ... | 2 | 4 |
| 43. | Smriticandrika, Samskara Kanda ... ... | 1 | 8 |
| 44. | Smriticandrika, Ahnika Kanda ... ... | 2 | 8 |
| 45. | Smriticandrika, Vyavahara Kanda, Part I ... | 2 | 0 |
| *46. | Bhattadipika, Vol. III ... ... | 2 | 8 |
| *47. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. II ... | 3 | 0 |
| 48. | Smriticandrika. Vyavahara Kanda, Part II ... | 3 | 0 |
| *49. | Bhattadipika, Vol. IV ... ... | 3 | 0 |
| *50. | Gautama Dharma Sutra with Maskariya ... | 3 | 8 |
| 51. | Alankāra Manihāra, Vol. I ... ... | 3 | 0 |
| 52. | Smriticandrika, Sraddha Kanda ... ... | 3 | 4 |
| *53. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. III ... | 4 | 0 |
| *54. | Kautilya Arthasastra (Second Edition) ... | 3 | 0 |
| *55. | Bodhayana Grihya Sutra with Pariśishta ... | 2 | 4 |
| 56. | Smriticandrika, Aśauca Kanda ... | 1 | 8 |
| 57. | Taittiriya Brahmana with the commentary partly of Bhatta-Bhaskara and partly of Sāyaṇa, Ashtaka II ... ... ... | 3 | 8 |
| 58. | Alankāra Manihāra, Vol. II ... ... | 3 | 8 |
| 59. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. IV ... | 3 | 8 |
| *60. | Kavya-Prakasa with the commentary of Sanketa ... | 3 | 8 |
| 61. | Ayurveda Sutra with the commentary of Yoganandanatha ... ... ... | 2 | 0 |
| 62. | Alankāra Manihāra, Vol. III ... ... | 2 | 8 |
| 63. | Vidyamadhaviya of Vidyamadhava with the commentary Muhurthadipika by Vishnu Sarma, Vol. I ... ... ... | 2 | |

*N.B.* --Numbers marked thus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| 64. | Kautilya Arthasastra (Third Edition) ... | 3 | 0 |
| 65. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. I ... ... | 2 | 8 |
| 66. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. II ... ... | 2 | 8 |
| 67. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. II ... ... ... | 2 | 0 |
| 68. | Index Verborum to the published texts of Artha-Sastra, Vol. III ... ... ... | 2 | 0 |
| 69. | Abhilashithartha Cintamani, Vol. I ... ... | 2 | 0 |
| 70. | Vidyamadhaviya, Vol. III ... ... | 1 | 8 |
| 71. | Sarasvati Vilasa (Vyavahara Kanda) ... ... | 2 | 8 |
| 72. | Alankara Manihara, Vol. IV ... ... | 2 | 4 |
| 73. | Apastamba Sulba Sutra ... ... ... | 2 | 12 |
| 74. | Tarkatandava with Nyayadipa, Vol. I ... ... | 3 | 0 |
| 75 | Advaitasiddhi with Gurucandrika, Vol. I ... | 3 | 12 |
| 76. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. I ... | 4 | 0 |
| 77. | Tarkatandava, Vol. II ... ... ... | 2 | 0 |
| 78. | Advaitasiddhi with Gurucandrika, Vol. II ... | 3 | 4 |
| 79. | Tarkatandava, Vol. III ... ... ... | 2 | 0 |
| 80. | Advaitasiddhi with Guruchandrika, Vol. III ... | 2 | 4 |
| 81. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. II ... | 3 | 0 |
| 82. | Tarkatandava, Vol. IV ... ... ... | 2 | 4 |
| 83. | Vakyartharatna with the Suvarnamudrika ... | 1 | 0 |
| 84. | Tattvarthasutra of Umāsvami with the Sukhabodha of Bhaskaranandi ... ... ... | 2 | 4 |
| 85. | Saundaryalahari Bhavanopanishat, Devipancastavi. | 2 | 8 |
| 86. | Apastamba Srauta Sutra with the Vritti and Bhashya of Dhurtaswami, Vol. I, Prasnas 1—5 | 4 | 0 |
| 87. | Yadavabhyudaya with the commentary of Appayadikshit, Vol. I, Sargas 13—18 | 3 | 4 |

## Miscellaneous.

| No. | Title | Rs. | a. |
|---|---|---|---|
| 1. | A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. I—Vedas. | 3 | 12 |
| 2. | Do Do Vol. II—Smṛtis. | 1 | 4 |
| 3. | A Catalogue of Printed Sanskrit Books in the Oriental Library | 2 | 12 |

---

*N.B.*—Numbers marked thus * are out of stock.

## B.—Kannada Publications.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| *1. | Adipurana of Pampa ... ... ... | 2 | 8 |
| *2. | Jagannatha Vijaya (First Edition) ... ... | 2 | 8 |
| 3. | Mahabharata—Pauloma and Astika Parvas ... | 1 | 8 |
| *4. | Mahabharata by Kumara Vyasa, Sambhava Parva | 2 | 0 |
| *5. | Mahabharata by Kumara Vyasa, Jatugriha Parva | 1 | 12 |
| *6. | Mahabharata by Kumara Vyasa, Sabha Parva ... | 1 | 12 |
| 7. | Mahabharata by Kumara Vyasa, Aranya Parva ... | 2 | 0 |
| *8. | Mahabharata by Kumara Vyasa, Virata Parva ... | 1 | 8 |
| 9. | Keladinripa Vijaya of Linganna ... ... | 1 | 8 |
| 10. | Udbhatakavya of Somaraja ... ... | 2 | 0 |
| *11. | Jagannatha Vijaya of Rudrabhatta (Second Edition) | 2 | 12 |
| *12. | Mahabharata by Kumara Vyasa, Udyoga Parva ... | 1 | 2 |
| 13. | Akrura Caritre of Somanatha ... ... | 1 | 0 |
| 14. | Dharmamrita of Nayasena, Vol. I ... ... | 2 | 4 |
| 15. | Kantirava Narasaraja Vijaya ... ... | 2 | 8 |
| 16. | Dharmamrita of Nayasena, Vol. II ... ... | 1 | 4 |
| 17. | Virabhadravijaya ... ... ... | 1 | 4 |
| 18. | Anantanathapurana of Janna ... ... | 2 | 0 |
| *19. | Sakalavaidya Samhita Sararnava by Virarajendra | 1 | 14 |
| *20. | Mahabharata by Kumara Vyasa, Bhishma Parva | 1 | 0 |
| *21. | Mahabharata by Kumara Vyasa, Drona Parva ... | 1 | 12 |
| 22. | Kavyavalokana by Nagavarma (Second Edition) ... | 1 | 8 |
| *23. | Mahabharata, Karna Parva ... | 2 | 4 |
| 24. | „ Salya and Gada Parvas ... | 1 | 0 |
| *25A. | Yogaratnakara with translation in Kannada and Telugu, Part I | | |

---

*N.B.*—Numbers marked thus * are out of stock.

